# प्राक्कथनम्

संस्कृतभाषायां संविधानभाषान्तरस्य कीदृशी रीतिरनुसरणीया इत्यस्मिन् विषये संविधानसभायाः सभापतिना संसदः सभापतिना च ये नियमाः कृताः साधारणतस्तान् नियमाननुसृत्यैवेदं भाषान्तरं प्रणीतमस्ति। संस्कृतभाषान्तरसमितिः खलु स्वभाषान्तरार्थं स्वाभिमतपरिभाषावलम्बने न स्वतन्त्राऽऽसीत्। यतः भारतीयभाषाणामर्थे संविधानस्य भाषान्तरेषु साधारणपरिभाषाकोशः तदर्थं नियुक्तया समित्या प्रणीत एव प्रायः समवलम्बनीयः इत्येवं संविधानसभायाः संसदश्च सभापतिना निर्दिष्टं नियमं पुरस्कृत्यैवेदं भाषान्तरं कर्तव्यमासीत्। किंच संसदः सभापतिना एवमप्याज्ञापितमस्ति यत् संविधानस्यास्य हिंदीभाषायां कृते भाषान्तरे ये संस्कृताः शब्दाः त एव यावच्छक्यम् अन्येषु भाषान्तरेष्वपि प्रयोक्तव्याः इति, तदनुरोधेन यथासंभवं हिंदीभाषान्तरस्थाः शब्दा अप्यादृताः। भाषान्तरं चेदं शब्दशः वाक्यशः वाक्यखण्डक्रमशश्च कृतम्।

तथापि अत्र निम्नलिखिता विशेषा अवधारणीयाः। साधारणपरिभाषाकोशे परिगणितानां शब्दानां मध्ये ये शब्दाः संस्कृतभाषान्तर्गता न सन्ति, यथा शर्त (condition), आस्तियाँ (assets), मंज़ूरी (sanction), हक़ (title), जाँच (enquiry), दिवालिया (insolvent), सिपारिश recommendation), नौकरी (employment), दर (rate), क़रार (agreement), कारख़ाना (factory), फ़ायदा (benefit), दावा (claim), तैयार करना (preparation), व्याज (interest) इत्यादयः शब्दाः; तेषां स्थाने संस्कृताः शब्दाः साधारणपरिभाषाकोशे अपरिगणिता अपि संनिविष्टाः, यथा प्रतिबन्धः (शर्त), सर्वस्वम् (आस्तियाँ), स्वीकृतिः (मंज़ूरी), स्वत्वम् (हक़), परिपृच्छा (जाँच), ऋणशोधनाशक्तः (दिवालिया), पुरःप्रशंसनम् (सिपारिश), नियोजनम् (नौकरी), अर्घः मानं वा (दर), समयः (क़रार), कर्मान्तम् (कारख़ाना), हितम् (फ़ायदा), अभ्यर्थना ममत्वावेदनं वा (दावा), परिकल्पनं सज्जीकरणं वा (तैयार करना), वृद्धिः (व्याज) इत्यादयः। किंच, साधारणपरिभाषाकोशे ये शब्दाः संस्कृतभाषान्तर्गता इव भान्ति किन्तु वस्तुतः व्याकरणदृष्टया अशुद्धाः सन्ति, यथा अन्तर्कालीन (transitional), वयस्क (adult), अन्तर्राज्यिक (interstate), अन्तर्राष्ट्रीय (international), परन्तुक (proviso), वृत्तिक (professional), राजनैतिक (political) इत्यादयः; तेषां स्थाने क्रमेण संक्रमणकालीन, प्राप्तवयस्क, आन्ताराज्यिक, आन्ताराष्ट्रिक, पारन्तुक, वृत्तिसंबन्धि, राजनीतिक इत्यादयः संनिविष्टाः सन्ति।

यद्यपि अस्मिन् भाषान्तरे बहवः परिभाषिताः शब्दा यमर्थमभिसंधाय प्रयुक्तास्तस्मिन्नर्थे प्राचीनसंस्कृतभाषाग्रन्थेषु नोपलभ्येरन् तथापि अस्मिन् संविधाने निर्देष्टुमिष्टा अर्थाः कल्पनाश्च नूतना विद्यन्ते इति नवीनं संकेतमभिप्रेत्य कृतस्तेषां प्रयोगो न दोषमावहेत् ।

अथ च, इदं भाषान्तरम् आङ्ग्लभाषायां विद्यमानस्य संविधानस्य शब्दशः वाक्यशः वाक्यखण्डक्रमशश्च कृतमिति, या हि प्रसिद्धानां संस्कृतग्रन्थानां प्रसिद्धा शब्दवाक्यक्रमनिवेशनरीतिः सात्र नोपलभ्येत । इत्यतः सुबहुपरिचयात् प्रागर्थबोधः क्लेशेनैव जायेत । कतिपयेषु स्थलेषु च बोधोऽपि न जायेत । ये हि आङ्ग्लसंविधानचतुरास्ते तु प्रभवेरन् अस्यार्थग्रहणे यदि संस्कृतभाषाप्रवीणाः, इति विश्वसिमः ।

संसदः सभापतिना ' संस्कृतभाषान्तरसमित्या नियुक्तः एकः भाषान्तरकर्ता भाषान्तरं करोतु द्वौ वा कुरुतां संस्कृतभाषान्तरसमितिश्च तद् भाषान्तरं संस्कृत्य स्वीकुर्यात्' इत्येतादृशं कृतं नियममनुसृत्य संस्कृतभाषान्तरसमित्या समितेः सदस्यावेव द्वौ भाषान्तरकर्तारौ नियुक्तौ, संविधानपूर्वार्धस्य (अनुच्छेदाः १–२६३) कृते श्री. लक्ष्मणशास्त्री जोशीत्युपाह्वः, अनुसूचीसहितस्योत्तरार्धभागस्य ( अनुच्छेदाः २६४–३९५ ) कृते श्री. मङ्गलदेवशास्त्री च । संविधानसंशोधनाधिनियमस्यापि भाषान्तरं श्री. लक्ष्मणशास्त्रिभिः कृतम् । ताभ्यां प्रणीतं भाषान्तरं संस्कृतभाषान्तरसमित्या दिनद्वाविंशतिपर्यन्तं कृतेऽधिवेशने पठित्वा स्वीकृतम् । बहुषु स्थलेषु समित्याः सर्वेषां सभासदानामैकमत्यमासीत् । क्वचित् नैकमत्यं दृष्टं तत्र बहूनां मतेनेदं भाषान्तरं पुनर्निरीक्ष्य संस्कृत्य च स्वीकृतमिति ।

## संस्कृतभाषान्तरसमितिः

| | | |
|---|---|---|
| १ | म. म. पाण्डुरङ्ग वामन काणे, एम्. ए., एल्एल्. एम्., मुंबई | सभापतिः |
| २ | तर्कतीर्थ लक्ष्मणशास्त्री जोशी, धर्मकोशस्य प्रधानसंपादकः, वाई | भाषान्तरकारः, संस्कृतभाषान्तरसमितेरामन्त्रकश्च |
| ३ | डॉ. मङ्गलदेवशास्त्री, एम्. ए., डी. फिल्., बनारस | भाषान्तरकारः |
| ४ | डॉ. सुनीतिकुमार चतर्जी, एम्. ए., डी. लिट्. ( लंडन ), कलकत्ता | सभासदः |
| ५ | श्री के. बालसुब्रह्मण्यं अय्यर, बी. ए., बी. एल्., ॲडव्होकेट, मद्रास | ,, |
| ६ | म. म. गिरिधरशर्मा चतुर्वेदी, डायरेक्टर संस्कृतस्टडीज्, हिंदूयुनिव्हर्सिटी, बनारस | ,, |
| ७ | डॉ. बाबूराम सक्सेना, एम्. ए., डी. लिट्., अलाहाबाद | ,, |
| ८ | पण्डित राहुल सांकृत्यायन, मसूरी | ,, |
| ९ | डॉ. रघुवीर, नागपूर | ,, |
| १० | श्री मुनिजिनविजयजी, डायरेक्टर भारतीय विद्याभवन, मुंबई | ,, |
| ११ | डॉ. कुन्हनराजा, मद्रास | ,, |

# भारतस्य संविधानम् ।

## विषय-सूची

अनुच्छेदः पृष्ठसंख्या

भागः ३

मूलाधिकाराः

साधारणम्



समताया अधिकारः



स्वतन्त्रताया अधिकारः



शोषणविरोधी अधिकारः



धर्मस्वतन्त्रताया अधिकारः

अनुच्छेदः | पृष्ठसंख्या

## सांस्कृतिकाः शैक्षिकाश्चाधिकाराः



## संपत्तेरधिकारः



## सांविधानिकानामुपचाराणामधिकारः



## भागः ४

## राज्यनीतेर्निर्देशकानि तत्त्वानि

अनुच्छेदः पृष्ठसंख्या



भागः ५

संघः

अध्यायः १. — कार्यपालिका

राष्ट्रपतिः उपराष्ट्रपतिश्च

अनुच्छेदः　　　　　　　　　　　　　　　　　　　　　　　　　　　　　　पृष्ठसंख्या



## मन्त्रिपरिषत्



## भारतस्य महान्यायवादी



## शासनकार्यस्य संचालनम्



## अध्यायः २.—संसत्

## साधारणम्

अनुच्छेदः पृष्ठसंख्या

संसदः पदाधिकारिणः



कार्यसंचालनम्



सदस्यानामनर्हताः



संसदः तत्सदस्यानां च शक्तयो विशेषाधिकारा उन्मुक्तयश्च

अनुच्छेदः पृष्ठसंख्या



### विधानप्रक्रिया



### वित्तीयविषयाणां प्रक्रिया



### साधारणतया प्रक्रिया



### अध्यायः ३.— राष्ट्रपतेर्विधायिन्यः शक्तयः



### अध्यायः ४.— संघस्य न्यायपालिका

अनुच्छेदः पृष्ठसंख्या



अध्यायः ५.—— भारतस्य नियन्त्रकमहालेखापरीक्षकः

अनुच्छेदः : पृष्ठसंख्या



भागः ६

प्रथमानुसूचीस्थ-( क )-भागीयराज्यानि

अध्यायः १. — साधारणम्



अध्यायः २. — कार्यपालिका

राज्यपालः



मन्त्रिपरिषत्



राज्यस्य महाधिवक्ता



शासनकार्यस्य संचालनम्

## अध्यायः ३.— राज्यस्य विधानमण्डलम्

### साधारणम्



### विधानमण्डलस्य पदाधिकारिणः

अनुच्छेदः पृष्ठसंख्या

## कार्यसंचालनम्



## सदस्यानामनर्हताः



## राज्यविधानमण्डलानां तत्सदस्यानां च शक्तयो विशेषाधिकारा उन्मुक्तयश्च



## विधानप्रक्रिया



## वित्तीयविषयाणां प्रक्रिया

अनुच्छेदः पृष्ठसंख्या

अध्यायः २.— प्रशासनसंबन्धाः

साधारणम्



जलैः संबध्यमाना विवादाः



राज्यानां परस्परं समन्वयः



भागः १२

वित्तम्, संपत्तिः, संविदः, व्यवहारवादाश्च

अध्यायः १.—वित्तम्

साधारणम्



संघस्य राज्यानां च मध्ये राजस्वानां विभाजनम्

## प्रकीर्णा वित्तीयोपबन्धाः



## अध्यायः २.—ऋणग्रहणम्

अनुच्छेदः पृष्ठसंख्या



अध्यायः ३.— संपत्तिः, संविदः, अधिकाराः, दायित्वानि, आभाराः, व्यवहारवादाश्च



भागः १३

भारतराज्यक्षेत्रस्याभ्यन्तरे व्यापारो वाणिज्यं समागमश्च



भागः १४

संघस्य राज्यानां चाधीनाः सेवाः

अध्यायः १.— सेवाः

अनुच्छेदः | पृष्ठसंख्या



भागः १६

कतिपयवर्गैः संबद्धा विशेषोपबन्धाः



भागः १७

राजभाषा

अध्यायः १.—संघस्य भाषा

भागः १९

प्रकीर्णकम्



भागः २०

संविधानस्य संशोधनम्



भागः २१

अस्थायिनस्तथा संक्रमणकालिका उपबन्धाः

अनुच्छेदः पृष्ठसंख्या

अनुच्छेदः पृष्ठसंख्या

## भागः २२

### संक्षिप्तं नाम, प्रारम्भो निरसनानि च

## अनुसूच्यः

# भारतस्य संविधानम्

वयम्, भारतस्य जनाः, भारतं संपूर्णप्रभुत्वसंपन्नं लोकतन्त्रात्मकं गणराज्यं विधातुम्; तस्याखिलनागरिकांश्च— प्रस्तावना ।

सामाजिकमार्थिकं राजनीतिकं च न्यायम्;

विचारस्याभिव्यक्तेः श्रद्धाया धर्मस्य पूजानुष्ठानस्य च स्वतन्त्रताम्;

प्रतिष्ठाया अवसरस्य च समताम्;

प्रापयितुम्;

तेषु च सर्वेषु

व्यक्तिगौरवस्य राष्ट्रैक्यस्य च समाश्वासयित्रीं भ्रातृभावनां वर्धयितुम्;

कृतदृढसंकल्पा अस्मामस्मदीयायां संविधानसभायामद्य खिस्तीये १९४९–तमे वत्सरे नवम्बरमासस्य २६–तमे दिवसे (२००६–तमे विक्रमसंवत्सरे मार्गशीर्षे शुक्लपक्षे सप्तम्यां तिथौ) एतेनेदं संविधानं स्वीकुर्महेऽधिनियमयामहेऽस्मभ्यं च समर्पयामहे ।

# भागः १

## संघः, तस्य राज्यक्षेत्रं च

संघस्य नाम राज्यक्षेत्रं च ।

१. (१) भारतम्, अर्थात् इण्डिया, राज्यानां संघो भवेत् ।

(२) तस्य राज्यानि राज्यक्षेत्राणि च प्रथमानुसूच्याः (क)-(ख)-(ग)-भागेषूल्लिखितानि राज्यानि तद्राज्यक्षेत्राणि च भवेयुः ।

(३) भारतस्य राज्यक्षेत्रं समावेशयेत्—

(क) राज्यानां राज्यक्षेत्राणि;

(ख) प्रथमानुसूच्याः (घ)-भाग उल्लिखितानि राज्यक्षेत्राणि; तथा

(ग) एतादृशानि चान्यानि राज्यक्षेत्राणि यादृशानि समर्जितानि स्युः ।

नूतनराज्यानां प्रवेशः स्थापना वा ।

२. संसद् विधिना एतादृशैर्निबन्धनैः प्रतिबन्धैश्च, यादृशानि सा उचितानि मन्यते, नूतनानि राज्यानि संघे प्रवेशयितुं स्थापयितुं वा क्षमते ।

नूतनानां राज्यानां निर्माणं विद्यमानानां राज्यानां च क्षेत्राणां सीम्नां नाम्नां वा परिवर्तनम् ।

३. संसद् विधिना—

(क) कस्मादपि राज्याद् राज्यक्षेत्रं पृथक्कृत्य, अथवा द्वे अधिकानि वा राज्यानि राज्यानां भागान् वा संयोज्य, अथवा कस्यापि राज्यस्य भागेन किमपि राज्यक्षेत्रं संयोज्य नूतनं राज्यं निर्मातुम्;

(ख) कस्यापि राज्यस्य क्षेत्रं वर्धयितुम्;

(ग) कस्यापि राज्यस्य क्षेत्रं ह्रासयितुम्;

(घ) कस्यापि राज्यस्य सीमाः परिवर्तयितुम्;

(ङ) कस्यापि राज्यस्य नाम परिवर्तयितुम्;

क्षमते—

परन्तु एतत्प्रयोजनाय किमपि विधेयकं संसदः कतरस्मिन्नपि सदने तावन्न पुरः स्थाप्येत यावत् राष्ट्रपतेः पुरःप्रशंसनं न लभ्यते, यावच्च, यत्र विधेयकान्तर्निविष्टा प्रस्थापना (क)-भागे (ख)-भागे वोल्लिखितस्य कस्यापि राज्यस्य राज्यानां वा सीमाः अथवा कस्याप्येतादृशस्य राज्यस्य राज्यानां वा नाम नामानि वा विषयीकरोति तत्र तद्विधेयकस्य पुरःस्थापनायाः प्रस्थापनाया विषये तस्योपबन्धानां विषये च यथायथं तस्य राज्यस्य प्रत्येकं राज्यानां वा विधानमण्डलस्याभिमतानि राष्ट्रपतिना न निश्चितानि भवन्ति।

४. (१) द्वितीये तृतीये वा अनुच्छेदे निर्दिष्टः कोऽपि विधिः प्रथमानुसूच्याश्चतुर्थानुसूच्याश्च संशोधनार्थमेतादृशानुपबन्धानन्तर्निवेशयेत् यादृशास्तस्य विधेरुपबन्धान् प्रभावसमर्थान् कर्तुमावश्यकाः स्युः; तथा एतादृशाननुपूरकान् प्रासङ्गिकानानुषङ्गिकांश्चाप्युपबन्धान् (संसदि एतादृशविधिप्रभावितस्य राज्यस्य राज्यानां वा विधानमण्डले विधानमण्डलेषु वा प्रतिनिधित्वसंबद्धैरुपबन्धैः सहितान् ) अन्तर्निवेशयेत्, संसद् यादृशानावश्यकान् मन्येत।

प्रथमचतुर्थानुसूच्योरनुपूरकप्रासङ्गिकानुषङ्गिकाणां विषयाणां च संशोधनार्थमुपबन्धयितुं द्वितीयतृतीयानुच्छेदयोरधीनं प्रणीता विधयः।

(२) पूर्वोक्तसदृशः कोऽपि विधिः ३६८—तमानुच्छेदस्य प्रयोजनानां कृते अस्य संविधानस्य संशोधनमिति न मन्येत।

# भागः २

## नागरिकत्वम्

एतत्संविधानस्य प्रारम्भे नागरिकत्वम् ।

५. अस्य संविधानस्य प्रारम्भे स प्रत्येकं जनः, यो भारतस्य राज्यक्षेत्रेऽधिवासी विद्यते, किञ्च—

(क) यस्य भारतस्य राज्यक्षेत्रे जन्माभूत्; अथवा

(ख) यस्य मातापित्रोरन्यतरस्य भारतस्य राज्यक्षेत्रे जन्माभूत्; अथवा

(ग) य एतादृशप्रारम्भादव्यवहितपूर्वं पञ्चभ्यो वर्षेभ्योऽन्यूनं भारतस्य राज्यक्षेत्रे सामान्यतो निवसन् वर्तते;

भारतस्य नागरिको भवेत् ।

पाकिस्तानतः प्रव्रज्य भारतमागतानामेकेषां जनानां नागरिकत्वाधिकाराः ।

६. पञ्चमानुच्छेदगतं सर्वमविगणय्य, यः पाकिस्तान इदानीमन्तर्भावितात् राज्यक्षेत्रात् भारतस्य राज्यक्षेत्रं प्रति प्रव्रज्यागतोऽस्ति स जनोऽस्य संविधानस्य प्रारम्भे भारतस्य नागरिक इति मन्येत, यदि—

(क) सः, अथवा तस्य पित्रोः पितामहयोर्मातामहयोर्वा अन्यतरः १९३५–तमवत्सरस्य भारतशासनाधिनियमेन (यथामूलाधिनियमितरूपेण) परिभाषिते भारते अजनिष्ट; किञ्च

(ख) (१) यस्यामवस्थायाम् एतादृशो जनः १९४८–तमवत्सरीयजुलायिमासस्यैकोनविंशाद्दिवसात् पूर्वम् एवं प्रव्रजितोऽस्ति तस्यां स सामान्यतो निवसन् वर्तते भारते प्रव्रजनदिवसमारभ्य; अथवा

(२) यस्यामवस्थायाम् एतादृशो जनः१९४८–तमवत्सरीयजुलायिमासस्यैकोनविंशतितमे दिवसे ततः परं वा एवं प्रव्रजितोऽस्ति तस्यां सः भारतीयाधिनिवेशशासनेन तदर्थं नियुक्तेन पदाधिकारिणा, एतादृशपदाधिकारिणे अस्य संविधानस्य प्रारम्भात् पूर्वं तच्छास-

नेन विहिते प्रपत्रे विहितया रीत्या च तदर्थं तेन कृतावेदनानन्तरम्, भारतस्य नागरिक इति पञ्जीबद्धोऽस्ति—

परन्तु कोऽपि जन एवंपञ्जीबद्धो न भवेत् यदि सः स्वीयावेदनदिवसादव्यवहितपूर्वं न्यूनान्न्यूनं षण्मासान् भारतस्य राज्यक्षेत्रे न निवसन् वर्तते।

७. पञ्चमषष्ठानुच्छेदगतं सर्वमविगणय्य, १९४७–तमवत्सरीयमार्चमासस्य प्रथमादिवसात् परं भारतस्य राज्यक्षेत्रात् पाकिस्तान इदानीमन्तर्भावितं राज्यक्षेत्रं प्रव्रजितोऽस्ति यो जनः, स भारतस्य नागरिक इति न मन्येत—

पाकिस्तानं प्रव्रजितानामेकेषां नागरिकत्वाधिकाराः।

परन्तु एतदनुच्छेदगतं किमपि तं जनं न विषयीकुर्यात् यः पाकिस्तान इदानीमन्तर्भावितं राज्यक्षेत्रम् एवंप्रव्रजितो भूत्वा कस्यापि विधेः प्राधिकारेण तदधीनं वा दत्ताया अनुज्ञाया अधीनं पुनर्वासार्थं स्थायिप्रत्यावर्तनार्थं वा भारतस्य राज्यक्षेत्रं प्रति निवृत्तोऽस्ति ; किञ्च एतादृशः प्रत्येकं जनः षष्ठानुच्छेदगतस्य (ख)–खण्डस्य प्रयोजनानां कृते १९४८–तमवत्सरीयजुलायिमासस्यैकोनविंशादिवसात् परं प्रव्रजितोऽस्तीति मन्येत।

८. पञ्चमानुच्छेदगतं सर्वमविगणय्य, यः अथवा यस्य पित्रोः पितामहयोर्मातामहयोर्वा अन्यतरः १९३५–तमवत्सरीयेण भारतशासनाधिनियमेन ( यथामूलाधिनियमितरूपेण ) परिभाषिते भारते अजनिष्ट, यश्च एवंपरिभाषितात् भारतात् बहिः कस्मिंश्चिद्देशे सामान्यतो निवसन्नस्ति, स कोऽपि जनो भारतस्य नागरिक इति मन्येत, यद्यस्य संविधानस्य प्रारम्भात् पूर्वं परं वा भारताधिनिवेशस्य शासनेन भारतस्य शासनेन वा विहिते प्रपत्रे विहितया रीत्या च तेन तदानीमध्युषिते देशे विद्यमानाय भारतस्य राजनयिकाय वाणिज्यदूतिकाय वा प्रतिनिधये नागरिकत्वावाप्त्यर्थं तेनावेदने कृते सति एतादृशेन राजनयिकेन वाणिज्यदूतिकेन वा प्रतिनिधिना स भारतस्य नागरिक इति पञ्जीबद्धोऽस्ति।

भारतात् बहिर्निवसतां भारतीयसमुद्भववतामेकेषां जनानां नागरिकत्वाधिकाराः।

## भागः २.––नागरिकत्वम्––अनुच्छेदाः ९–११

स्वेच्छोपार्जित-वैदेशिकनागरि-कत्वानां जनानां न नागरि-कत्वम् ।

९. यदि केनापि जनेन स्वेच्छया वैदेशिकराज्यस्य नागरिकत्वमर्जितम्, तर्हि स पञ्चमानुच्छेदस्याश्रयेण भारतस्य नागरिको न भवेत्, न च षष्ठानुच्छेदस्य सप्तमानुच्छेदस्य वा आश्रयेण भारतस्य नागरिक इति मन्येत।

नागरिकत्वाधिकाराणामनुवृत्तिः ।

१०. यः कोऽपि जनः अस्य भागस्य पूर्वगामिनामुपबन्धानामन्यतमस्य कस्याप्यधीनं नागरिकोऽस्ति तथा वा मन्यते सः, संसदा यः कोऽपि विधिः प्रणीतो भवेत् तस्योपबन्धानामधीनम्, भारतस्य नागरिकत्वेनानुवर्तेत ।

संसदो विधिना नागरिकत्वाधिकारविनियमनम् ।

११. अस्य भागस्य पूर्वगामिनामुपबन्धानां किमपि नागरिकत्वार्जनसमापने नागरिकत्वसंबद्धानन्यान् सर्वान् विषयांश्चोद्दिश्य कस्याप्युपबन्धस्य निर्माणे संसदः शक्तिं नापकर्षयेत् ।

# भागः ३

## मूलाधिकाराः

### साधारणम्

१२. भागेऽस्मिन् प्रसङ्गेनान्यथापेक्षितं चेन्न भवति, "राज्य"शब्दः भारतस्य शासनं संसदं च तथा प्रत्येकं राज्यानां शासनं विधानमण्डलं च तथा भारतस्य राज्यक्षेत्राभ्यन्तरान् भारतशासनस्य नियन्त्रणाधीनान् वा सर्वान् स्थानीयान् अन्यांश्च प्राधिकारिणोऽन्तर्भावयति । परिभाषा ।

१३. (१) अस्य संविधानस्य प्रारम्भादव्यवहितपूर्वं भारतस्य राज्यक्षेत्रे प्रवृत्ता विधयः तावन्मात्रं शून्या भवेयुः यावत् तेऽस्य भागस्योपबन्धैरसंगता भवेयुः । मूलाधिकारैरसंगतास्तेषामपकर्षका वा विधयः ।

(२) राज्यं तं कमपि विधिं न प्रणयेत् य एतेन भागेन प्रदत्तानधिकारान् अपहरति अल्पीकरोति वा, अथ चाऽस्य खण्डस्योल्लङ्घनेन प्रणीतो विधिः उल्लङ्घनमात्रां यावत् शून्यो भवेत् ।

(३) एतस्मिन्ननुच्छेदे, प्रसङ्गेनान्यथापेक्षितं चेन्न भवति,—

(क) "विधि"शब्दः भारतस्य राज्यक्षेत्रे विधितुल्यप्रवृत्तं यं कमपि अध्यादेशम्, आदेशम्, उपविधिम्, नियमम्, विनियमम्, अधिसूचनाम्, रूढिम्, प्रथां वाऽन्तर्भावयति;

(ख) "प्रवृत्ता विधयः" इति शब्दसमूहः केनापि विधानमण्डलेनान्येन वा क्षमेण प्राधिकारिणा भारतस्य राज्यक्षेत्रेऽस्य संविधानस्य प्रारम्भात् पूर्वं पारितान् प्रणीतान् वा पूर्वं चानिरस्तान् विधीनन्तर्भावयति, यद्यपि एतादृशः कोऽपि विधिः तस्य कोऽपि भागो वा सर्वथा विशिष्टेषु वा क्षेत्रेषु तदा प्रवृत्तो न भवेत् ।

## भागः ३.--मूलाधिकाराः--अनुच्छेदाः १४-१६

### समतायाः अधिकारः

विधिसमक्षे समता ।

१४. भारतस्य राज्यक्षेत्रे राज्यं कमपि जनं विधिसमक्षे समतायाः विधीनां समसंरक्षणात् वा विनाकृतं न कुर्यात् ।

धर्मस्य मूलवंशस्य जातेः लिङ्गस्य जन्मस्थानस्य वा आधारतो विभेदस्य प्रतिषेधः ।

१५. (१) राज्यं कमपि नागरिकं प्रति केवलं धर्ममूलवंशजातिलिङ्गजन्मस्थानानां तदन्यतमस्य वा कस्याप्याधारतो विभेदं नापादयेत् ।

(२) कोऽपि नागरिकः केवलं धर्ममूलवंशजातिलिङ्गजन्मस्थानानां तदन्यतमस्य वा कस्याप्याधारतः---

(क) आपणेषु, सार्वजनिकभोजनालयेषु, विश्रामालयेषु, सार्वजनिकमनोरञ्जनस्थानेषु च प्रवेशस्य विषये;

(ख) पूर्णतोंऽशतो वा राज्यनिधितः पोषितानां साधारणजनतोपयोगाय समर्पितानां वा कूपानाम्, तडागानाम्, स्नानतीर्थानाम्, मार्गाणाम्, सार्वजनिकमेलनस्थानानां वा उपयोगस्य विषये;

निर्योग्यताया दायित्वस्य निर्बन्धनस्य प्रतिबन्धस्य वा अधीनो न भवेत् ।

(३) एतदनुच्छेदगतं किमपि, स्त्रीणां बालानां च कृते कस्यापि विशेषोपबन्धस्य करणान्न राज्यं प्रति निवारयेत् ।

राज्याधीनाया नियोजनाया विषयेषु अवसरसमता ।

१६. (१) राज्याधीने कस्मिन्नपि पदे नियोजनाया नियुक्तेर्वा संबन्धिषु विषयेषु सर्वेषां नागरिकाणां कृते अवसरस्य समता भवेत् ।

(२) केवलं धर्ममूलवंशजातिलिङ्गोद्भवजन्मस्थाननिवासानां तदन्यतमस्य कस्यापि वा आधारतः राज्याधीनाया नियोजनाया पदस्य वा विषये कस्यापि नागरिकस्यापात्रता न भवेत् न वा तं प्रति विभेद आपादितो भवेत् ।

(३) एतदनुच्छेदगतं किमपि, प्रथमानुसूच्यामुल्लिखितस्य कस्यापि राज्यस्य अथवा तद्राज्यक्षेत्रे कस्यापि स्थानीयस्यान्यस्य वा प्राधि-

कारिणोऽधीने पदे नियोजनाया नियुक्तेर्वा प्रकारस्य प्रकाराणां वा संबन्धे एतादृश्या नियोजनाया नियुक्तेर्वा पूर्वं तद्राज्ये निवासस्यापेक्षां विदधानस्य कस्यापि विधेः प्रणयनान्न संसदं निवारयेत् ।

(४) एतदनुच्छेदगतं किमपि, राज्याधीनासु सेवासु तद्राज्यस्य मत्या यस्य प्रतिनिधित्वमपर्याप्तमस्ति तस्य कस्याप्यप्रगतस्य नागरिक-वर्गस्य कृते, नियुक्तीनां पदानां वा रक्षणार्थं कस्याप्युपबन्धस्य करणात् न राज्यं प्रति निवारयेत् ।

(५) एतदनुच्छेदगतं किमपि, कस्यापि तस्य विधेः प्रवृत्तौ प्रभावं नापादयेत् यः—कस्यापि धर्मविशेषस्यानुयायी संप्रदायविशेषेण संबद्धो वा जनः कस्या अपि धार्मिक्याः सांप्रदायिक्या वा संस्थायाः कार्यसंबन्धेन पदधारी तच्छासिनिकायस्य सदस्यो वा भवेत् — इत्युपबन्धयति ।

१७. "अस्पृश्यता" निराक्रियते, तस्याश्च केनापि रूपेण आचरणं निषिध्यते । अस्पृश्यतया उत्पद्यमानायाः कस्या अपि निर्योग्यताया आरोपणं विधेरनुसारेण दण्डनीयोऽपराधो भवेत् । अस्पृश्यताया निराकरणम् ।

१८. (१) सेनाविषयकं विद्याविषयकं वा वैशिष्ट्यं यन्नास्ति तत् संमानपदं राज्येन न प्रदीयेत । संमानपदानां निराकरणम् ।

(२) कोऽपि भारतस्य नागरिकः कस्मादपि वैदेशिकराज्यात् किमपि संमानपदं न स्वीकुर्यात् ।

(३) यो भारतस्य नागरिको नास्ति स कोऽपि जनो यावत् लाभस्य विश्वासस्य वा किमपि पदं राज्याधीनं धारयति तावत् राष्ट्रपतेः संमतिमन्तरेण कस्मादपि वैदेशिकराज्यात् किमपि संमानपदं न स्वीकुर्यात् ।

(४) लाभस्य विश्वासस्य वा पदं राज्याधीनं धारयमाणः कोऽपि जनो वैदेशिकराज्यात् तदधीनं वा किमपि उपायनमुपलब्धिं केनापि रूपेण पदं वा राष्ट्रपतेरनुमतिमन्तरेण न स्वीकुर्यात् ।

स्वतन्त्रताया अधिकारः

वाक्स्वातन्त्र्यादिविषयकाणामधिकारविशेषाणां संरक्षणम् ।

१९. (१) सर्वेषां नागरिकाणाम्—

(क) वाचः अभिव्यक्तेश्च स्वतन्त्रतायाम्;

(ख) शान्तिपुरःसरं निरायुधं च संमेलने;

(ग) संस्थानां संघानां च निर्माणे;

(घ) भारतस्य राज्यक्षेत्रे सर्वत्र अबाधं संचरणे;

(ङ) भारतराज्यक्षेत्रस्य कस्मिंश्चिदपि भागे निवासे स्थिरवासे च;

(च) संपत्तेरर्जने धारणे व्ययने च;

(छ) कस्या अपि वृत्तेरनुवर्तने अथवा उपजीविकाया व्यापारस्य कार्यस्य वानुसरणे,

अधिकारो भवेत् ।

(२)(१)—खण्डीय—(क)—उपखण्डगतं किमपि,—अपमानलेखेनापमानवचनेन मानहान्या न्यायालयावमानेन अथवा शिष्टाचारे सदाचारे वा आघातं कुर्वाणेन वा राज्यस्य सुरक्षामवसादयता वा राज्यस्योत्सादनप्रवणेन वा केनापि विषयेण यावत् कोऽपि वर्तमानो विधिः संबध्यते तावत्, —तस्य विधेः प्रवृत्तिं न स्पृशेत्, न वा तत् तादृशसंबन्धवतः कस्यापि विधेः प्रणयनात् राज्यं निवारयेत् ।

(३) उक्तखण्डीय—(ख)—उपखण्डगतं किमपि,—उक्तोपखण्डेन प्रदत्तस्याधिकारस्य प्रयोगे सार्वजनिकव्यवस्थाया हितानामर्थे यावत् कोऽपि विधिः युक्तियुक्तानि निर्बन्धनानि आरोपयति तावत्,—तस्य विधेः प्रवृत्तिं न स्पृशेत्, न वा तत् तादृशमारोपणं कुर्वतो विधेः प्रणयनात् राज्यं निवारयेत् ।

(४) उक्तखण्डीय—(ग)—उपखण्डगतं किमपि,—उक्तोपखण्डेन प्रदत्तस्याधिकारस्य प्रयोगे सार्वजनिकव्यवस्थायाः सदाचारस्य वा हितानामर्थे

यावत् कोऽपि वर्तमानो विधिः युक्तियुक्तानि निर्बन्धनानि आरोपयति तावत्, —तस्य विधेः प्रवृत्तिं न स्पृशेत्, न वा तत् तादृशमारोपणं कुर्वतः कस्यापि विधेः प्रणयनात् राज्यं निवारयेत्।

(५) उक्तखण्डीय-(घ)-(ङ)-(च)-उपखण्डगतं किमपि,—उक्तोपखण्डैः प्रदत्तानामधिकाराणामन्यतमस्य कस्यापि प्रयोगे साधारणजनताया हितानामर्थे कस्याप्यनुसूचिताया आदिमजातेर्हितानामर्थे वा संरक्षणाय यावत् कोऽपि वर्तमानो विधिः युक्तियुक्तानि निर्बन्धनानि आरोपयति तावत्,—तस्य विधेः प्रवृत्तिं न स्पृशेत्, न वा तत् तादृशमारोपणं कुर्वतः कस्यापि विधेः प्रणयनात् राज्यं निवारयेत्।

(६) उक्तखण्डीय-(छ)-उपखण्डगतं किमपि,- उक्तोपखण्डेन प्रदत्तस्याधिकारस्य प्रयोगे साधारणजनताया हितानामर्थे यावत् कोऽपि वर्तमानो विधिः युक्तियुक्तानि निर्बन्धनानि आरोपयति तावत्,—तस्य विधेः प्रवृत्तिं न स्पृशेत्, न वा तत् तादृशमारोपणं कुर्वतः कस्यापि विधेः प्रणयनात् राज्यं निवारयेत्; किञ्च, विशेषतः, उक्तोपखण्डगतं किमपि,—कस्या अपि वृत्तेरुपजीविकाया व्यापारस्य कार्यस्य वा अनुष्ठानार्थमावश्यिका वृत्तिसंबन्धिनीः शिल्पिसंबन्धिनीर्वा अर्हता यावत् कोऽपि विधिर्विदधाति कस्मिन्नपि प्राधिकारिणि वा यावत् तादृशविधिप्रणयनस्य शक्तिमादधाति तावत्,—तस्य विधेः प्रवृत्तिं न स्पृशेत् न वा तादृशं विदधतः तादृशविधिशक्तिं कस्मिन्नपि प्राधिकारिणि आदधतो वा विधेः प्रणयनात् राज्यं निवारयेत्।

२०. (१) कोऽपि जनोऽपराधत्वेनारोपितायाः क्रियाया निर्वर्तनकाले प्रवृत्तविधेरतिक्रममन्तरेण केनाप्यपराधेन सिद्धदोषो न क्रियेत, न वा तावतो दण्डादधिकतरस्य दण्डस्य भाजनं भवेत् यावान् प्रवृत्तविधेरधीनं पातितो भवेत्। अपराधानां हेतोः दोषसिद्धेः संबन्धे संरक्षणम्।

(२) कोऽपि जनः एकस्यैवापराधस्य कृते एकवारादधिकमभियोजितो दण्डितश्च न भवेत्।

## भागः ३.—मूलाधिकाराः—अनुच्छेदाः २०–२२

(३) कोऽपि जनः केनाप्यपराधेनाभियुक्तः स्वात्मनो विरोधेन साक्षित्वेन बलात् प्रवर्तितो न भवेत्।

प्राणानां दैहिकस्वतन्त्रतायाश्च संरक्षणम्।

२१. कोऽपि जनः स्वस्य प्राणेभ्यः दैहिकस्वतन्त्रताया वा, विधिना स्थापितायाः प्रक्रियाया अनुसारेण विना न वियोजितो भवेत्।

अवस्थाविशेषेषु बन्दीकरणान्निरोधाच्च संरक्षणम्।

२२. (१) यो जनः बन्दीकृतोऽस्ति प्रत्येकं स एतादृशबन्दीकरणस्य कारणानि यथाशक्यं शीघ्रं नो चेदवबोधितः, नाभिरक्षायां निरुध्येत, न वा स स्वेष्टेन विधिव्यवसायिना सह परामर्शस्य तेन कर्तव्यात्मपरिरक्षायाश्चाधिकारात् विनाकृतो भवेत्।

(२) यो जनो बन्दीकृतोऽभिरक्षायां च निरुद्धोऽस्ति प्रत्येकं स नेदिष्ठस्य दण्डाधिकारिणः समक्षम्, तादृशबन्दीकरणादारभ्य चतुर्विंशतिहोराकालावधौ, बन्दीकरणस्थानाद्दण्डाधिकारिणो न्यायालयं यावत् गमनार्थमपेक्षणीयकालं विहाय, उपस्थाप्येत; किञ्च एतादृशः कोऽपि जनः दण्डाधिकारिणः प्राधिकारं विना उक्तकालावधेः परम् अभिरक्षायां न निरुद्धो भवेत्।

(३) (१)–(२)–खण्डगतं किमपि—

(क) यस्तत्काले वैदेशिकः शत्रुरस्ति ; अथवा

(ख) यो निवारकनिरोधायोपबन्धयतो विधेरधीनं बन्दीकृतो निरुद्धो वास्ति ;

तं कमपि जनं न विषयीकुर्यात्।

(४) निवारकाय निरोधायोपबन्धयन् कोऽपि विधिः कस्यापि जनस्य निरोधं प्राधिकृतं न कुर्यात्, यदि—

(क) ये जना उच्चन्यायालयस्य न्यायाधीशाः सन्ति आसन् वा एवं नियुक्त्यर्हा वा सन्ति तैः संभूय संवृत्ता मन्त्रणामण्डली उक्तस्य मासत्रयकालावधेः समाप्तेः प्राक् न प्रतिवेदयेत् यदस्या मतौ निरोधस्य पर्याप्तो हेतुरस्तीति—

परन्तु एतदुपखण्डगतं किमपि, (७)-खण्डीय-(ख)-उपखण्डस्याधीनं संसदा प्रणीतेन केनापि विधिना विहितादधिकतमात् कालात् परम्, कस्यापि जनस्य निरोधं प्राधिकृतं न कुर्यात्; अथवा

(ख) एतादृशो जनः (७)-खण्डीय-(क)-(ख)-उपखण्डयोरधीनं संसत्प्रणीतस्य कस्यापि विधेरुपबन्धानामनुरोधेन न निरुद्धोऽस्ति ।

(५) निवारकाय निरोधायोपबन्धयतः कस्यापि विधेरधीनं प्रदत्तादेशानुसारेण यदा कोऽपि जनो निरुध्यते तदा तस्यादेशस्य प्रदाता प्राधिकारी यथाशक्यं शीघ्रमेतादृशं जनमवगमयेत् तानाधारान्, यानधिष्ठाय स आदेशः कृतोऽस्ति, किंच तस्मै तस्यादेशस्य विरोधेनाभ्यावेदनं कर्तुं प्रथमतममवसरं दद्यात् ।

(६) (५)-खण्डगतं किमपि नापेक्षेत यत्तस्मिन् खण्डे निर्दिष्टस्यैतादृशस्यादेशस्य प्रदाता प्राधिकारी तानि तथ्यानि प्रकटीकुर्यात् येषां प्रकटीकरणमेतादृशः प्राधिकारी लोकहितविरोधीति मनुते ।

(७) संसद् विधिना—

(क) ताः परिस्थितीः, विचारपदानां तं प्रकारं तान् प्रकारान् वा, यत्र कश्चिज्जनः (४)-खण्डीय-(क)-उपखण्डस्योपबन्धानामनुरोधेन मन्त्रणामण्डल्याः मतमनासाद्य निवारकाय निरोधायोपबन्धयतः कस्यापि विधेरधीनं मासत्रयादधिककालावधि निरुद्धः कर्तुं शक्यते;

(ख) अधिकतमं कालावधिम्, यावति कोऽपि जनो विचारपदानां कस्मिन्नपि प्रकारे केष्वपि प्रकारेषु वा निवारकाय निरोधायोपबन्धयतः कस्यापि विधेरधीनं निरुद्धः कर्तुं शक्यते; तथा

**भागः ३.—मूलाधिकाराः—अनुच्छेदाः २२–२५**

(ग) कयापि मन्त्रणामण्डल्या (४)–खण्डीय–(क)–उपखण्डाधीनं परिप्रश्ने अनुसरणीयां प्रक्रियाम्;

विधातुं क्षमते ।

मानवपण्यस्य बलाच्छ्रमस्य च प्रतिषेधः ।

२३. (१) मानवस्य पणनं विष्टिश्च बलाद् गृहीतः श्रमश्च एतत्समा अन्ये प्रकाराश्च प्रतिषिद्धाः सन्ति; किंच अस्योपबन्धस्य किमप्युल्लङ्घनं विधेरनुरोधेन दण्डनीयोऽपराधो भवेत् ।

(२) एतदनुच्छेदगतं किमपि सार्वजनिकप्रयोजनार्थमपरिहार्यसेवाया आरोपणात् राज्यं न निवारयेत्, किंच राज्यम् एतादृशसेवाया आरोपणे केवलं धर्ममूलवंशजातिवर्गाणां तदन्यतमस्य वा कस्याप्याधारतो न विभेदमापादयेत् ।

कर्मान्तादिषु बालानां नियोजनायाः प्रतिषेधः ।

२४. चतुर्दशभ्यो वर्षेभ्य अर्वाग्वया बालकः कस्मिन्नपि कर्मान्ते खनौ वा कर्मणि न नियोज्येत, न वा अन्यस्यां संकटमय्यां नियोजनायां व्यापृतः क्रियेत ।

**धर्मस्वतन्त्रताया अधिकारः**

अन्तःकरणे धर्मस्याबाधमभ्युपगमाचरणप्रचारेषु च स्वतन्त्रता ।

२५. (१) सार्वजनिकव्यवस्थायाः सदाचारस्य स्वास्थ्यस्य एतद्भागीयान्योपबन्धानां चाधीनं सर्वे जनाः समानतया अन्तःकरणस्य स्वतन्त्रतायां धर्मस्याबाधमभ्युपगमाचरणप्रचाराणामधिकारे च स्वत्ववन्तः सन्ति ।

(२) एतदनुच्छेदगतं किमपि तस्य कस्यापि वर्तमानस्य विधेः प्रवृत्तिं न स्पृशेत् न वा तस्य कस्यापि विधेः प्रणयनात् राज्यं निवारयेत्—

(क) यः विनियमनं निर्बन्धनं वा करोति कस्यापि आर्थिकस्य वित्तीयस्य राजनीतिकस्य अन्यस्य वा लौकिकस्य तस्य कर्मणो यत् धार्मिकाचरणेन संबद्धं भवेत् ;

(ख) यः सामाजिकाय कल्याणाय सुधारणायै चोपबन्धयति हिन्दूनां सर्वेभ्यो वर्गेभ्यो विभागेभ्यश्च सार्वजनिकानां हिन्दुधार्मिकसंस्थानाम् अपावरणं वा करोति ।

भागः ३.—मूलाधिकाराः— अनुच्छेदाः २५–२८

व्याख्या १.—कृपाणस्य धारणं वहनं च सिक्खधर्मस्याभ्युपगमेऽन्तर्भावितमिति मन्येत ।

व्याख्या २.— (२)–खण्डीय–(ख)–उपखण्डे हिन्दूनां निर्देशः सिक्खस्य जैनस्य बौद्धस्य च धर्मस्याभ्युपगन्तॄणां जनानां निर्देशमन्तर्भावयतीत्यर्थः कृतो भवेत्; हिन्दुधार्मिकसंस्थानां च निर्देशस्यार्थः एतदनुसारेण कृतो भवेत् ।

२६. सार्वजनिकव्यवस्थायाः सदाचारस्य स्वास्थ्यस्य चाधीनतया प्रत्येकं धार्मिकः संप्रदायस्तद्विभागो वा— धार्मिककार्येषु व्यवस्थायाः स्वतन्त्रता ।

(क) धार्मिकाणां पूर्तसंबन्धिनां वा प्रयोजनानां कृते संस्थानां स्थापने पोषणे वा;

(ख) धार्मिकविषयैः संबद्धानां स्वकार्याणां व्यवस्थायाम्;

(ग) जङ्गमायाः स्थावरायाश्च संपत्तेरर्जने स्वत्वकरणे च; तथा

(घ) विधेरनुसारेण एतादृश्याः संपत्तेः प्रशासने;

अधिकारवान् भवेत् ।

२७. केनापि जनेन ते करा बलात् न दापनीया येषामागमाः कस्यापि विशेषस्य धर्मस्य धार्मिकसंप्रदायस्य वाभिवृद्ध्यर्थं पोषणार्थं वा कर्तव्ये व्ययानां प्रदाने विशेषतो विनियुक्ताः कृताः । कस्यापि धर्मविशेषस्याभिवृद्ध्यर्थं कराणां प्रदाने स्वतन्त्रता ।

२८. (१) राज्यनिधितः पूर्णतः पोषितायां कस्यामपि शिक्षासंस्थायां काऽपि धार्मिकशिक्षा न वितीर्णा भवेत् । विशिष्टासु शिक्षासंस्थासु धार्मिकशिक्षार्थं धार्मिकोपासनार्थं वोपस्थितौ स्वतन्त्रता ।

(२) (१)–खण्डगतं किमपि, तां शिक्षासंस्थां न विषयीकुर्यात् यस्याः प्रशासनं राज्येन क्रियते किन्तु या कस्यापि तस्य धर्मस्वस्य न्यासस्य वाधीनं स्थापिताऽस्ति येनापेक्ष्यते यत् एतादृश्यां संस्थायां धार्मिकशिक्षा प्रदेयेति ।

## भागः ३.--मूलाधिकाराः-- अनुच्छेदाः २८-३१

(३) राज्येनाभिज्ञातायां राज्यनिधितः साहाय्यमधिगच्छन्त्यां वा कस्यामपि शिक्षासंस्थायामुपतिष्ठन् कोऽपि जनः तस्यां कस्यामपि धार्मिकशिक्षायां भागी भवत्विति नापेक्षितो भवेत् या एतादृश्यां संस्थायां वितीर्णा भवेत्, न वा स तस्यां धार्मिकोपासनायामुपस्थितो भवत्वित्यपेक्षितो भवेत् या एतादृश्यां संस्थायां तत्संलग्ने स्थाने वा प्रवर्तिता भवेत्, यावत् एतादृशो जनः, यदि वा एतादृशो जनोऽप्राप्तवयस्कस्तर्हि तस्य संरक्षको वा, स्वस्य तत्र संमतिं न दत्तवान्।

### सांस्कृतिकाः शैक्षिकाश्चाधिकाराः

अल्पसंख्यकवर्गाणां हितसंरक्षणम्।

२९. (१) भारतस्य राज्यक्षेत्रे तदीये कस्मिन्नपि भागे वा निवसतां नागरिकाणां कोऽपि विभागः स्वीयां विशिष्टां भाषां लिपिं संस्कृतिं वा भजमानस्तस्याः पालनेऽधिकारवान् भवेत्।

(२) केवलं धर्मवंशजातिभाषाणां तदन्यतमस्य कस्यापि वा आधारतः कस्यापि नागरिकस्य कस्यामपि राज्येन पोषितायां राज्यनिधेः साहाय्यमाप्नुवत्यां वा शिक्षासंस्थायां प्रवेशो न प्रतिषिद्धो भवेत्।

शिक्षासंस्थानां स्थापने प्रशासने चाल्पसंख्यकवर्गाणामधिकारः।

३०. (१) धर्मे भाषायां वा अधिष्ठिताः सर्वेऽल्पसंख्यका वर्गाः स्वेष्टशिक्षासंस्थानां स्थापने प्रशासने वा अधिकृता भवेयुः।

(२) राज्यं शिक्षासंस्थाभ्यः साहाय्यस्य अनुदाने कस्या अपि शिक्षासंस्थाया विरोधेन, यदियं धर्मे भाषायां वा अधिष्ठितस्यामुकस्याल्पसंख्यकवर्गस्य व्यवस्थाधीनाऽस्तीत्याधारतः, विभेदं नापादयेत्।

### संपत्तेरधिकारः

संपत्तेरनिवार्यमर्जनम्।

३१. (१) कोऽपि जनो विधिप्राधिकारमन्तरेण संपत्तेर्विनाकृतो न भवेत्।

(२) जङ्गमा स्थावरा वा कापि संपत्तिः—यस्यामन्तर्भूतोऽस्ति कस्मिन्नपि वाणिज्यिके औद्योगिके वोपक्रमे तत्स्वामिनि समवाये वा स्थितः कोऽप्यंशः—सार्वजनिकप्रयोजनानां कृते न तावद् वशमानेया अर्जनीया

भागः ३.—मूलाधिकाराः—अनुच्छेदः ३१

वा एतादृशवशानयनमेतादृशार्जनं वा प्राधिकारयतो विधेरधीनम्, यावत् स विधिर्वशानीताया अर्जिताया वा संपत्तेः प्रतिकराय नोपबन्धयति; किंच प्रतिकरस्य राशिं वा न नियतं करोति; तानि तत्त्वानि तां रीतिं च वा नोल्लिखति यदनुसारेण प्रतिकरो निर्धारितो दत्तश्च भवेत्।

(३) यादृशः (२)–खण्डे निर्दिष्टोऽस्ति एतादृशो राज्यविधानमण्डलेन प्रणीतः कोऽपि विधिस्तावत् कार्यकरो न भवेत् यावदेतादृशो विधिः राष्ट्रपतेर्विचारार्थं रक्षितः सन् तदीयानुमतिं न लब्धवान्।

(४) यदि अस्य संविधानस्य प्रारम्भे राज्यस्य विधानमण्डले लम्बितं किमपि विधेयकम् एतादृशविधानमण्डलेन पारितं भवति तदुत्तरं च राष्ट्रपतेर्विचारार्थं रक्षितं भवति तस्यानुमतिं च लभते, तर्हि, अस्य संविधानस्य सर्वमविगणय्य, एवमनुमते तस्मिन् विधौ कस्मिन्नपि न्यायालये यदयं (२)–खण्डोपबन्धानुल्लङ्घयतीत्याधारेण नापत्तिः कृता भवेत्।

(५) (२)–खण्डगतं किमपि—

(क) (६)–खण्डगतोपबन्धैर्विषयीक्रियमाणात् विधेरन्यस्य कस्यापि वर्तमानस्य विधेरुपबन्धान्; अथवा

(ख) तस्य कस्यापि विधेरुपबन्धान् न स्पृशेत् यं राज्यमितः परम्—

(१) कस्यापि करस्यार्थदण्डस्य वा आरोपणायोद्ग्रहणाय वा प्रयोजनाय; अथवा

(२) सार्वजनिकस्वास्थ्यस्याभिवृद्ध्यै प्राणेषु संपत्तौ वा संकटस्य निवारणाय वा; अथवा

(३) भारताधिनिवेशशासनस्य भारतशासनस्य वा अन्यदेशीयस्य शासनस्य च मध्ये कृतस्य कस्यापि समयस्यानुसरणार्थम्, अथवा अन्यथा, विधिना निष्क्राम्यसंपत्तिरिति घोषितां संपत्तिमुद्दिश्य च;

कर्तुं क्षमते।

(६) अस्य संविधानस्य प्रारम्भात् पूर्वम् अष्टादशमासानाधिककालाभ्यन्तरेऽधिनियमितः कोऽपि विधिः एतादृशप्रारम्भात् मासत्रयकालावधेरभ्यन्तरे राष्ट्रपतेः पुरतस्तस्य प्रमाणनार्थं स्थापनमर्हति; अथ च तदुत्तरं यदि राष्ट्रपतिः सार्वजनिकाधिसूचनया एवं प्रमाणयति तर्हि तस्मिन् आपत्तिर्न कृता भवेत् कस्मिन्नपि न्यायालये, यदयमुल्लङ्घयत्यस्यानुच्छेदस्य (२)–खण्डगतोपबन्धान् अथवोल्लङ्घितवान् भारतशासनस्य १९३५–तमवत्सरीयाधिनियमस्य २९९–तमविभागगत–(२)–उपविभागोक्तानुपबन्धानित्याधारतः ।

## सांविधानिकानामुपचाराणामधिकारः

अनेन भागेन प्रदत्तानामधिकाराणां प्रवर्तनायोपचाराः ।

३२. (१) अनेन भागेन प्रदत्तानामधिकाराणां प्रवर्तनाय समुचितया कार्यप्रवृत्त्योच्चतमन्यायालयं प्रवर्तयितुमधिकारः प्रत्याभूतोऽस्ति ।

(२) निदेशानां वा आदेशानां वा बन्दिप्रत्यक्षीकरणपरमादेशप्रतिषेधाधिकारपृच्छोत्प्रेषणस्वरूपान् लेखान् अन्तर्भावयतां लेखानां वा—एतद्भागेन प्रदत्तानामधिकाराणामन्यतमस्य कस्यापि प्रवर्तनार्थं येऽप्येषां मध्ये समुचिताः स्युस्तेषां—प्रदाने शक्तिः उच्चतमन्यायालये भवेत् ।

(३) उच्चतमन्यायालयाय (१)–(२)–खण्डाभ्यां प्रदत्तासु शक्तिषु प्रतिकूलं प्रभावं परिहार्य, संसद् विधिना अन्यं कमपि न्यायालयं स्वीयक्षेत्राधिकारस्य स्थानीयसीमानामभ्यन्तरे उच्चतमन्यायालयेन (२)–खण्डाधीनं प्रयोक्तव्याः सर्वाः शक्तीः एकतरां वा प्रयोक्तुं शक्तिमन्तं कर्तुं क्षमते ।

(४) अनेनानुच्छेदेन प्रत्याभूतोऽधिकारः, अनेन संविधानेनान्यथोपबन्धितं वर्जयित्वा, न निलम्बितो भवेत् ।

अनेन भागेन प्रदत्तानामधिकाराणां बलेषु प्रयुक्तौ संसदो रूपभेदे शक्तिः।

३३. संसद् विधिना निर्धारयितुं क्षमते यत्, अनेन भागेन प्रदत्तानामधिकाराणामन्यतमः सशस्त्रबलानां सार्वजनिकव्यवस्थाभारवतां बलानां वा सदस्येषु तेषां [ अधिकाराणां ] प्रयुक्तौ तेषां [ सदस्यानां ] कर्तव्य-

समुचितपालनपरतायाः तेषाम् [ सदस्यानां ] अनुशासनपरतायाश्च सुनिश्चयाय कियन्मात्रं निर्बन्धितो निराकृतो वा भवेदिति ।

३४. पूर्वगामिषु एतद्भागोपबन्धेषु सर्वमविगणय्य, संसद् विधिना, संघस्य राज्यस्य वा सेवायां स्थिताय कस्मै अपि जनाय, अन्यस्मै वा कस्मै अपि जनाय, सेनाविधिर्यस्मिन् प्रवृत्त आसीत्तस्मिन् कस्मिन्नपि भारतराज्यक्षेत्राभ्यन्तरे क्षेत्रे व्यवस्थायाः पालनार्थं पुनःस्थापनार्थं वा तेन कृते कस्मिन्नपि कार्ये, तारणं दातुं क्षमते; अथवा एतादृशे क्षेत्रे सेनापत्यधीनविधेरधीनं दत्तं दण्डादेशं भाजितं दण्डम् आदिष्टं समपहारम् अन्यद् वा कर्म मान्यं कर्तुं क्षमते ।

यावत् कस्मिन्नपि क्षेत्रे सेनाविधिः प्रवृत्तोऽस्ति तावदनेन भागेन दत्ताधिकारेषु निर्बन्धनम् ।

३५. अस्य संविधानस्य सर्वमविगणय्य—

अस्य भागस्योपबन्धान् कार्यकरान् कर्तुं विधानम् ।

(क) (१) येषां विषयाणां कृते संसदा प्रणीतेन विधिना १६—तमानुच्छेदीय-(३)-खण्डस्य ३२—तमानुच्छेदीय-(३)-खण्डस्य ३३-तमानुच्छेदस्य ३४-तमानुच्छेदस्य चाधीनम् उपबन्धा भवितुं क्षमन्ते तेषां विषयाणामन्यतमं कमप्युद्दिश्य;

(२) एतद्भागाधीनम् अपराधा इति घोषितानि यानि कार्याणि तेषु दण्डं विधातुं च , विधीन् प्रणेतुं संसद् , न राज्यस्य विधानमण्डलम् , शक्तिं भजेत; किंच एतत्संविधानस्य प्रारम्भात् परं यथाशीघ्रं (२)-खण्डे निर्दिष्टकार्येषु दण्डं विधातुं संसद् विधीन् प्रणयेत् ;

(ख) (क)- खण्डस्य (१)-उपखण्डे निर्दिष्टानां विषयाणामन्यतमेन केनापि संबद्धः तस्य खण्डस्य (२)-उपखण्डे निर्दिष्टे कस्मिन्नपि कार्ये दण्डायोपबन्धं कुर्वन् वा भारतस्य राज्यक्षेत्रेऽस्य संविधानस्य प्रारम्भादव्यवहितपूर्वं प्रवृत्तः कोऽपि विधिस्तत्रत्य-

निबन्धनानां ३७२–तमानुच्छेदाधीनं तत्र यानि कृतानि भवेयुस्तेषामनुकूलनानां रूपभेदानां चाधीनं प्रवृत्तोऽनुवर्तेत यावत् संसदा परिवर्तितो वा निरस्तो वा संशोधितो वा न भवेत् ।

व्याख्या.–"प्रवृत्तः विधिः" इति शब्दसमूहस्य तथैवार्थोऽस्ति यथा ३७२–तमानुच्छेदे ।

# भागः ४

## राज्यनीतेर्निर्देशकानि तत्त्वानि

३६. भागेऽस्मिन्, प्रसङ्गेनान्यथापेक्षितं चेन्न भवति, "राज्य"स्य तथैवार्थो भवति यथा तृतीये भागे ।

परिभाषा ।

३७. अस्मिन् भागे वर्णिता उपबन्धा न प्रवर्तनीया भवेयुः केनापि न्यायालयेन, किन्तु तत्र प्रोक्तानि तत्त्वानि तथापि देशस्य शासनक्रियायाः मूलभूतानि सन्ति, विधीनां प्रणयने एषां प्रयुक्तिश्च राज्यस्य कर्तव्यं भवेत् ।

अस्मिन् भागेऽन्तर्निविष्टानां तत्त्वानां प्रयुक्तिः ।

३८. राज्यं लोकहितस्य अभिवृद्ध्यै सामाजिकव्यवस्थायाः यथाशक्ति कार्यसाधकतया स्थापनेन संरक्षणेन च प्रयतेत यस्यां सामाजिक आर्थिको राजनीतिकश्च न्यायः राष्ट्रीयजीवनस्य सर्वाः संस्थाः अनुप्राणयेत् ।

लोककल्याणस्याभिवृद्धये राज्यं सामाजिकव्यवस्थामासादयेत् ।

३९. राज्यं विशेषतस्तथा नीतिं संचालयेत् यथा संपद्यते—

राज्येनानुसर्तव्यानि नीतेस्तत्त्वानि ।

(क) यत् नागरिका नरा नार्यश्च समानतया जीविकायाः पर्याप्तसाधने अधिकारं भजन्ते;

(ख) यत् समाजस्य भौतिकसंपत्तेः स्वाम्यं नियन्त्रणं च तथा संविभक्तं भवति यथा सर्वोत्तमं समानं हितं संपद्यते;

(ग) यत् आर्थिकरचनायाः संव्यवहारः संपत्तेरुत्पादनसाधनानां च साधारणहितहानिकरेण केन्द्रस्थसमुच्चयरूपेण न परिणमते ;

(घ) यत् नराणां नारीणां च समानकार्ये समानं वेतनं भवति ;

(ङ) यत् नराणां नारीणां च श्रमिकाणां स्वास्थ्यं शक्तिश्च बालानां सुकुमारावस्था च न दुरुपयुज्यते, नागरिकाश्च आर्थिकावश्यकतया विवशा न वरयन्ति वृत्तिकर्माणि वयसः शक्तेश्चाननुकूलानि;

**भागः ४.—राज्यनीतेर्निदेशकानि तत्त्वानि—अनुच्छेदाः ३९–४५**

(च) यत् शैशवं कैशोर्यं च रक्षितं भवति शोषणात्तथा नैतिकादार्थिकाच्च परित्यागात्।

ग्रामपञ्चायतानां संघटनम्।

४०. राज्यम् उपक्रमेत संघटनं ग्रामपञ्चायतानाम्, निदधीत च तेष्वेतादृशीः शक्तीः प्राधिकारं च, स्वायत्तशासनस्य एककरूपेण कार्याणां निर्वर्तने योग्यतां संपादयितुं यथाऽऽवश्यका भवेयुः।

अवस्थाविशेषेषु वृत्तिकर्म, शिक्षां, सार्वजनिकसाहाय्यं च प्राप्तुमधिकारः।

४१. राज्यं स्वीयस्यार्थिकसामर्थ्यस्य विकासस्य च मर्यादानामभ्यन्तरे वृत्तिकर्मणः शिक्षायाश्चाधिकारं वृत्तिकर्मलोपस्य वार्धकस्याङ्गहानेश्चावस्थासु च अनर्हाया अर्थशून्यताया दशासु सार्वजनिकसाहाय्यस्याधिकारं च प्रापयितुं कार्यसाधकम् उपबन्धं कुर्यात्।

कर्मणो न्याय्यानां मानवोचितानां च दशानां प्रसूतिसाहाय्यस्य चोपबन्धः।

४२. राज्यं न्याय्यानां मानवोचितानां च वृत्तिकर्मणो दशानां प्रसूतिसाहाय्यस्य च प्रापणार्थम् उपबन्धं कुर्यात्।

श्रमिकाणां कृते निर्वाहवेतनम् इत्यादि।

४३. राज्यम् उपयुक्तविधानेन वा आर्थिकसंघटनेन वा अन्यया वा कयाऽपि विधया कार्षिकान् औद्योगिकान् अन्यान् वा श्रमिकान् वृत्तिकर्म निर्वाहवेतनं शिष्टजीवनस्तरस्य अवकाशीयसंपूर्णोपभोगस्य च निश्चायिका वृत्तिकर्मणो दशाः तथा सामाजिकं सांस्कृतिकं चावसरं प्रापयितुं प्रयतेत; विशेषतश्च राज्यं ग्रामपरिसरेषु कुटीरोद्योगानां प्रवृद्ध्यै वैयक्तिकेन सहकार्यकृतेन वा आधारेण प्रयतेत।

नागरिकाणामर्थे समाना व्यवहारसंहिता।

४४. राज्यं नागरिकाणां कृते समस्ते भारतराज्यक्षेत्रे समानां व्यवहारसंहितां प्रापयितुं प्रयतेत।

बालकार्थं निःशुल्काया अनिवार्यायाः शिक्षाया उपबन्धः।

४५. राज्यम् अस्य संविधानस्य प्रारम्भात् दशवर्षकालावधेरभ्यन्तरे सर्वेभ्यो बालकेभ्यो चतुर्दशवर्षवयसः समाप्तिं यावत् निःशुल्काया अनिवार्यायाः शिक्षाया उपबन्धं कर्तुं प्रयतेत।

## भागः ४.--राज्यनीतेर्निर्देशकानि तत्त्वानि—अनुच्छेदाः ४६–५१

४६. राज्यं जनताया दुर्बलतराणां विभागानाम्, विशेषेण च अनुसूचितानां जातीनां जनजातीनां च, शैक्षिकाणि आर्थिकानि च हितानि विशेषावधानेनाभिवृद्धिमानयेत्; तान् सामाजिकादन्यायात् शोषणस्य सर्वप्रकारेभ्यश्च संरक्षयेच्च । अनुसूचितजातीनां जनजातीनामन्येषां च दुर्बलविभागानां शैक्षिकार्थिकहिताभिवृद्धिः ।

४७. राज्यं स्वीयजनताया आहारपुष्टितलस्य जीवनस्तरस्य च उन्नयनं सार्वजनिकस्वास्थ्यस्य सुधारणं च प्रथमकर्तव्यानामन्यतमं मन्येत; विशेषतः राज्यं मादकानां पेयानां स्वास्थ्यहानिकराणां च औषधानाम्, अन्यत्र भैषज्यप्रयोजनेभ्यः, उपभोगस्य प्रतिषेधाय प्रयतेत । आहारपुष्टितलस्य जीवनस्तरस्य च उन्नयनं सार्वजनिकस्य स्वास्थ्यस्य च सुधारणं राज्यस्य कर्तव्यम् ।

४८. राज्यम् आधुनिकीभिर्वैज्ञानिकीभिश्च प्रणालीभिः कृषिं पशुपालनं च संघटयितुं प्रयतेत; विशेषतश्च बीजवंशानां परिरक्षणाय सुधारणाय च गवां वत्सानामन्येषां दोह्यानां वाह्यानां च पशूनां च वधप्रतिषेधाय च प्रक्रमेत । संघटनं कृषेः पशुपालनस्य च ।

४९. राज्यस्य भवेदयम् आभारो यत् कलात्मिकाया ऐतिहासिक्या वा अभिरुचेः संसदा विधिना राष्ट्रियमहिमशालीति घोषितस्य स्मारकस्य स्थानस्य वस्तुनश्च रक्षणं लुण्ठनात् विरूपणात् विनाशात् अपनयनात् व्ययनात् निर्यातात् वा यथायथम् । राष्ट्रियमहिमशालिनां स्मारकाणां स्थानानां वस्तूनां च रक्षणम् ।

५०. राज्यं राज्यस्य लोकसेवासु न्यायपालिकातः कार्यपालिकाः पृथक् कर्तुं प्रक्रमेत । न्यायपालिकायाः कार्यपालिकातः पृथक्करणम् ।

५१. राज्यम्—— आन्ताराष्ट्रिक्याः शान्तेः सुरक्षायाश्च अभिवृद्धिः ।

(क) आन्ताराष्ट्रिक्याः शान्तेः सुरक्षायाश्च अभिवृद्ध्यै ;

(ख) राष्ट्राणां मध्ये न्याय्यानां संमानपूर्णानां च संबन्धानां रक्षणाय ;

(ग) संघटितानां जनतानां परस्परं व्यवहारेषु आन्ताराष्ट्रिकं विधिं प्रति संधिबन्धनं प्रति च संमानस्य पोषणाय;

(घ) आन्ताराष्ट्रिकविवादानां मध्यस्थताद्वारा समाधानस्य प्रोत्साहनाय च,

प्रयतेत ।

# भागः ५

## संघः

### अध्यायः १.—कार्यपालिका

### राष्ट्रपतिः उपराष्ट्रपतिश्च

५२. भारतस्य राष्ट्रपतिर्भवेत् । भारतस्य राष्ट्रपतिः ।

५३. (१) संघस्य कार्यपालिका शक्तिः राष्ट्रपतौ निहिता भवेत्, सा च तेन स्वयम् अधीनस्थानां पदाधिकारिणां द्वारा वा अस्य संविधानस्यानुसारेण प्रयुक्ता भवेत् । संघस्य कार्यपालिका शक्तिः।

(२) पूर्वगामिन उपबन्धस्य व्यापकतायां प्रतिकूलं प्रभावं परिहाय संघस्य रक्षाबलानामुच्चतमः समादेशो राष्ट्रपतौ निहितो भवेत् तस्य प्रयोगश्च विधिना विनियमितो भवेत् ।

(३) एतदनुच्छेदगतं किमपि—

(क) कस्यापि राज्यस्य शासनाय अन्यस्मै वा प्राधिकारिणे केनापि वर्तमानेन विधिना दत्तानां केषांचिदपि कृत्यानां राष्ट्रपतौ हस्तान्तरितमिति न मन्येत;

(ख) संसदं राष्ट्रपतेरन्येभ्यः प्राधिकारिभ्यो विधिना कृत्यानां प्रदानान्न निवारयेत् ।

५४. राष्ट्रपतिः— राष्ट्रपतेर्निर्वाचनम् ।

(क) संसद उभयोः सदनयोर्निर्वाचितैः सदस्यैः ;

(ख) राज्यविधानसभानां निर्वाचितैः सदस्यैश्च ;

भूतस्य निर्वाचकगणस्य सदस्यैः निर्वाचितो भवेत् ।

## भागः ५.--संघः-- अनुच्छेदः ५५

राष्ट्रपतेर्निर्वाचनरीतिः ।

५५. (१) यावत्संभवं राष्ट्रपतेर्निर्वाचने भिन्नानां राज्यानां प्रतिनिधित्वस्य माने समरूपता भवेत् ।

(२) राज्यानां मध्ये परस्परम् एतादृशीमेकरूपतां तथा समस्तानां राज्यानां संघस्य च मध्ये समतुल्यतां संपादयितुम्, संसदः प्रत्येकराज्यविधानसभायाश्च निर्वाचितः प्रत्येकं सदस्यो येषां दानेऽधिकृतस्तेषां मतानां संख्या प्रतिनिर्वाचनं निर्धारिता भवेत् निम्नलिखितेन प्रकारेण—

(क) राज्यविधानसभायाः प्रत्येकं निर्वाचितः सदस्यः तावन्ति मतानि भजेत यावन्ति एकसहस्रस्य गुणितानि तत्सभाया निर्वाचितसदस्यानां पूर्णसंख्यया राज्यस्य जनसंख्यां विभज्य प्राप्ते भागफले स्युः;

(ख) एकसहस्रस्य उक्तानि गुणितानि स्वीकृत्य यदि शेषः पञ्चशतेभ्योऽन्यूनः स्यात् तदा (क)–उपखण्डे उक्तस्य सदस्यस्य मतानि वर्धेरन् एकसंख्यया;

(ग) संसदः प्रत्येकसदनस्य प्रत्येकं निर्वाचितः सदस्यः मतानाम् एतादृशीं संख्यां भजेत यादृशी राज्यानां विधानसभानां सदस्यानामर्थे (क) (ख)–उपखण्डाभ्यां नियतां मतानां पूर्णसंख्यां संसत्सदनयोः सदस्यानां पूर्णसंख्यया विभज्य प्राप्ता भवेत्, भिन्नानि अर्धांशापेक्षया अधिकानि एकम् इति गणितानि स्युः अन्यानि भिन्नान्युपेक्षितानि स्युः ।

(३) राष्ट्रपतेर्निवाचनम् अनुपातिप्रतिनिधित्वपद्धतिमनुसृत्य एकलसंक्रमणीयमतेन भवेत्, किंच एतादृशि निर्वाचने मतदानं गूढशलाकया संपद्येत ।

व्याख्या.—अस्मिन् अनुच्छेदे "जनसंख्या" शब्दस्य अर्थोऽस्ति सा जनसंख्या या निश्चिता अन्तिमायां पूर्ववृत्तायां जनगणनायाम्, यस्याः अपेक्षिता अङ्काः प्रकाशं प्राप्ताः ।

**भागः ५.—संघः-- अनुच्छेदाः ५६–५८**

५६. (१) राष्ट्रपतिः पदं पञ्चवर्षावधि तस्माद्दिनाङ्कात् धारयेत् यस्मिन् स स्वपदमारोहति– राष्ट्रपतेः पदावधिः।

परन्तु—

(क) राष्ट्रपतिः उपराष्ट्रपतिं संबोध्य लिखितेन स्वहस्ताङ्कितेन लेखेन पदं त्यक्तुं क्षमते;

(ख) राष्ट्रपतिः संविधानातिक्रमेण ६१–तमानुच्छेदे उपबन्धितया रीत्या कृतेन महाभियोगेन पदादपसारितो भवितुमर्हति;

(ग) राष्ट्रपतिः स्वपदावधेः समाप्तावपि पदस्य धारणमनुवर्तयेत् यावत् अस्योत्तराधिकारी पदं नारोहति।

(२) (१)–खण्डीयपारन्तुकस्य (क)–उपखण्डाधीनम् उपराष्ट्रपतेः संबोधकं किमपि त्यागपत्रं तेन लोकसभाया अध्यक्षं प्रति अविलम्बं निवेदितं भवेत्।

५७. यो जनः राष्ट्रपतिरूपेण पदं धारयति धृतवान् वा विद्यते सोऽस्य संविधानस्य अन्योपबन्धानामधीनं तस्मै पदाय पुनर्निर्वाचनस्य पात्रं भवेत्। पुनर्निर्वाचने पात्रता।

५८. (१) कोऽपि जनः राष्ट्रपतिरूपेण निर्वाचने पात्रं न भवेत् यदि नासौ— राष्ट्रपतेर्निर्वाचनस्य अर्हताः।

(क) भारतस्य नागरिकोऽस्ति;

(ख) वयसः पञ्चत्रिंशद्वर्षाणि पूरितवान्; किंच

(ग) लोकसभायाः सदस्यरूपेण निर्वाचने अर्होऽस्ति।

(२) स जनः राष्ट्रपतिरूपेण निर्वाचनस्य न पात्रं भवेत् यदि भारतशासनस्य कस्यापि राज्यस्य शासनस्य वाधीनम् उक्तशासनाना-

मन्यतमस्य नियन्त्रणे स्थितस्य कस्यापि स्थानीयस्यान्यस्य वा प्राधिकारिणोऽधीनं वा स लाभस्य पदं धारयति ।

व्याख्या:—कोऽपि जनः लाभस्य किमपि पदं धारयतीति अस्यानुच्छेदस्य प्रयोजनानामर्थे न मन्येत अस्मादेव हेतोः, यत् सोऽस्ति राष्ट्रपतिः उपराष्ट्रपतिर्वा संघस्य, अथवा राज्यपालो वा राज्यप्रमुखो वा उपराज्यप्रमुखो वा कस्यापि राज्यस्य, अथवा मन्त्री वा संघस्य कस्यापि राज्यस्य वा ।

राष्ट्रपतेः पदस्य प्रतिबन्धाः ।

५९. (१) राष्ट्रपतिः संसदोऽन्यतरस्मिन् सदने कस्यापि वा राज्यस्य विधानमण्डलस्य सदने सदस्यो न भवेत्, किंच यदि कोऽपि अन्यतरस्य संसत्सदनस्य कस्यापि वा राज्यस्य विधानमण्डलसदनस्य सदस्यः राष्ट्रपतिरूपेण निर्वाचितो भवेत् तर्हि असौ तस्मिन् सदने तस्मिन् दिनाङ्के रिक्तीकृतस्थानो मन्येत यस्मिन् असौ राष्ट्रपतिरूपेण स्वपदमारोहति ।

(२) राष्ट्रपतिः किमप्यन्यत् लाभस्य पदं न धारयेत् ।

(३) राष्ट्रपतिर्विना भाटकप्रदानं स्वपदावासानामुपयोगे स्वत्ववान् भवेत्; किंचापि उपलब्धिषु भक्तेषु विशेषाधिकारेषु च एतादृशेषु स्वत्ववान् भवेत् यादृशानि संसदा विधिना निर्धारितानि भवेयुः, किंच एतदर्थं यावत् उपबन्ध एवं न कृतः, उपलब्धिषु भक्तेषु विशेषाधिकारेषु च एतादृशेषु, यादृशानि द्वितीयानुसूच्यामुल्लिखितानि विद्यन्ते ।

(४) राष्ट्रपतेः उपलब्धयः भक्तानि च स्वपदावधि नापकृष्टानि भवेयुः ।

राष्ट्रपतेः शपथः प्रतिज्ञानं वा ।

६०. प्रत्येकं राष्ट्रपतिः राष्ट्रपतिरूपेण कार्यकारी वा राष्ट्रपतेः कृत्यानि निर्वहन् वा प्रत्येकं जनः स्वीयपदे आरोहणात् प्राक् भारतमुख्यन्यायाधिपतेः समक्षं तस्यानुपस्थितौ उच्चतमन्यायालयीयस्य प्राप्याग्रतमस्य न्यायाधीशस्य वा समक्षं शपथं प्रतिज्ञानं वा निम्नलिखितेन रूपेण कुर्यात् स्वहस्ताङ्कितं च कुर्यात्, यथा—

भागः ५.—संघः— अनुच्छेदौ ६०–६१

अहं...अमुकः निश्चयेन परमेश्वरस्य नाम्ना शपे / सत्यनिष्ठया प्रतिजाने
यत् अहं श्रद्धासमन्वितं भारतस्य राष्ट्रपतेः पदस्य कार्यपालनं करिष्ये (अथवा राष्ट्रपतेः कृत्यानि निर्वक्ष्यामि), मम संपूर्णयोग्यतया संविधानं विधिं च परिरक्षिष्यामि संरक्षिष्यामि प्रतिरक्षिष्यामि च, किंच अहं भारतस्य जनतायाः सेवार्थं कल्याणार्थं च निरतो भविष्यामि ।

राष्ट्रपतौ महाभियोगे प्रक्रिया ।

६१. (१) यदा संविधानातिक्रमणात् राष्ट्रपतिः महाभियोगेनाभियोज्यो भवति, तदा संसदः अन्यतरत् सदनं दोषारोपं कुर्यात् ।

(२) एतादृशः कोऽपि दोषारोपः तावत् कृतो न भवेत् यावत् न—

(क) एतादृशदोषारोपं कुर्वती प्रस्थापना अन्तर्निविष्टाऽस्ति कस्मिंश्चित् संकल्पे यः तत्सदनसदस्यानां समस्तसंख्यायाश्चतुर्थांशापेक्षयाऽन्यूनसंख्यया कृतहस्ताक्षरायाः न्यूनान्न्यूनं चतुर्दशानां दिवसानां लिखितायाः सूचनायाः पश्चात् प्रस्तुतपूर्वोऽस्ति, यस्यां तेषां ( सदस्यानां ) संकल्पप्रस्तावस्याभिप्रायोऽभिहितोऽस्ति; किंच

(ख) एतादृशः संकल्पः तत्सदनस्य समस्तसदस्यानां तृतीयांशद्वयापेक्षयाऽन्यूनेन बहुमतेन पारितोऽस्ति ।

(३) यदा कश्चित् दोषारोपः संसदोऽन्यतरेण सदनेन एवं कृतोऽस्ति तदा तस्याः अन्यत् सदनम् अनुसंदधीत तं दोषारोपमनुसंधापयेद्वा, राष्ट्रपतिश्च एतादृशेऽनुसंधाने उपस्थितौ स्वप्रतिनिधित्वस्य करणे च अधिकृतो भवेत् ।

(४) यदि राष्ट्रपतेर्विरोधेन कृतो दोषारोपः सिद्धोऽस्तीति घोषणां कुर्वन् एतदनुसंधानस्य फलस्वरूपः संकल्पः तस्य सदनस्य समस्तसदस्यानां

## भागः ५.--संघः--अनुच्छेदाः ६१-६५

तृतीयांशद्वयापेक्षयाऽन्यूनेन बहुमतेन पारितोऽस्ति येन स दोषारोपः अनुसंहितोऽनुसंधापितो वाऽभवत्, तदा एतादृशः संकल्पः राष्ट्रपतेः स्वपदात् प्रच्यावनाय प्रभवेत् तस्माद्दिनाङ्कात्, यस्मिन्नसौ संकल्पः एवं पारितोऽस्ति ।

राष्ट्रपतिपदस्य रिक्ततापूर्तये निर्वाचनम् आकस्मिकरिक्ततापूर्तये निर्वाचितजनस्य पदावधिश्च ।

६२. (१) राष्ट्रपतेः पदस्यावधेः समाप्त्या कृतायाः रिक्ततायाः पूर्तये निर्वाचनं अवधेः समाप्तेः पूर्वं पूर्णं भवेत् ।

(२) राष्ट्रपतेः मृत्युना वा पदत्यागेन वा अपसारणेन वा अन्येन वा हेतुना भवन्त्याः रिक्ततायाः पूर्तये निर्वाचनं प्रवर्तितं भवेत् यथासंभवमविलम्बेन, न तद्रिक्ततायाः प्रारम्भदिनाङ्कात् षड्भ्यो मासेभ्यः परं कस्यामपि अवस्थायाम्, किंच रिक्ततापूर्त्यर्थं निर्वाचितः स जनः ५६—तमानुच्छेदीयानामुपबन्धानामधीनं पदधारणे पञ्चानां वत्सराणां पूर्णावधि स्वत्ववान् भवेत् तस्माद्दिनाङ्कात्, यस्मिन्नसौ स्वपदमारोहति ।

उपराष्ट्रपतिर्भारतस्य ।

६३. भारतस्य उपराष्ट्रपतिर्भवेत् ।

उपराष्ट्रपतिः राज्यपरिषदः पदेन सभापतिः ।

६४. उपराष्ट्रपतिः राज्यपरिषदः पदेन सभापतिर्भवेत्, किंच लाभस्य किमपि अन्यत् पदं न धारयेत्—

परन्तु यदा कस्मिन्नपि कालावधौ उपराष्ट्रपतिः राष्ट्रपतिरूपेण कार्य करोति, राष्ट्रपतेः कृत्यानि ६५—तमानुच्छेदाधीनं निर्वहति वा, तदा असौ राज्यपरिषदः सभापतेः पदस्य कर्तव्यानि नाचरेत्, राज्यपरिषदः सभापतये ९७—तमानुच्छेदाधीनं प्रदेये वेतने भत्ते वा स्वत्ववांश्च न भवेत् ।

राष्ट्रपतेः पदस्य आकस्मिकरिक्ततायाम् अनुपस्थितौ वा उपराष्ट्रपतेः राष्ट्रपतिरूपेण कार्यनिर्वर्तनं तत्कृत्यनिर्वहणं वा ।

६५. (१) राष्ट्रपतेः पदे तस्य मृत्युना वा पदत्यागेन वा प्रच्यावनेन वा अन्येन वा हेतुना कस्या अपि रिक्ततायाः प्राप्तिप्रसङ्गे उपराष्ट्रपतिः राष्ट्रपतिरूपेण कार्यं कुर्यात् तद्दिनाङ्कपर्यन्तम्, यस्मिन् नवीनो राष्ट्रपतिः अस्याध्यायस्योपबन्धानामनुरोधेन अस्या रिक्ततायाः पूर्त्यै निर्वाचितः स्वपदमारोहति ।

(२) यदा राष्ट्रपतिः कृत्यानां निर्वहणे अनुपस्थित्या अस्वास्थ्येन अन्येन केनापि वा हेतुना असमर्थोऽस्ति तदा उपराष्ट्रपतिः तस्य कृत्यानि तद्दिनाङ्कावधि निर्वहेत् यस्मिन् राष्ट्रपतिः स्वकर्तव्यानि पुनरारभते ।

(३) उपराष्ट्रपतिः यस्मिन् ( कालावधौ ) राष्ट्रपतिरूपेण कार्याणि एवं कुर्वन् कृत्यानि निर्वर्तयंश्चास्ति तस्मिन् कालावधौ तत्कालावधिमुद्दिश्य च राष्ट्रपतेः शक्तीः उन्मुक्तीश्च लभेत ; तथा उपलब्धिषु भक्तेषु विशेषाधिकारेषु च एतादृशेषु स्वत्ववान् भवेत् यादृशानि संसदा विधिना निर्धारितानि भवेयुः ; यावत् तद्विषये एवमुपबन्धो न कृतोऽस्ति, एतादृशेषु उपलब्धिषु भक्तेषु विशेषाधिकारेषु च, यादृशानि द्वितीयानुसूच्यामुल्लिखितानि स्युः ।

६६. (१) उपराष्ट्रपतिः संसदः उभयसदनयोः सदस्यैः संयुक्ताधिवेशने समवेतैः अनुपातिप्रतिनिधित्वपद्धतिमनुरुध्य एकलसंक्रमणीयमतेन निर्वाचितो भवेत् मतदानं चैतादृशनिर्वाचने गूढशलाकया भवेत् । उपराष्ट्रपतेर्निर्वाचनम् ।

(२) उपराष्ट्रपतिः संसदोऽन्यतरस्मिन् सदने कस्यापि वा राज्यस्य विधानमण्डलस्य सदने सदस्यो न भवेत्; किंच यदि अन्यतरस्य संसत्सदनस्य कस्यापि वा राज्यस्य विधानमण्डलसदनस्य सदस्यः उपराष्ट्रपतिरूपेण निर्वाचितो भवेत् तर्हि असौ तस्मिन् सदने तस्मिन् दिनाङ्के रिक्तीकृतस्थानो मन्येत यस्मिन् असौ उपराष्ट्रपतिरूपेण स्वपदमारोहति ।

(३) कोऽपि जनः उपराष्ट्रपतिरूपेण निर्वाचने पात्रं न भवेत् यदि नासौ—

(क) भारतस्य नागरिकोऽस्ति ;

(ख) वयसः पञ्चत्रिंशद्वर्षाणि पूरितवान् ;

(ग) राज्यपरिषदः सदस्यरूपेण निर्वाचने अर्होऽस्ति ।

(४) कोऽपि जनः उपराष्ट्रपतिरूपेण निर्वाचने न पात्रं भवेत् यदि स किमपि लाभस्य पदं भारतशासनस्य राज्यशासनस्य वाधीनम्

**भागः ५.--संघः--अनुच्छेदाः ६६-६८**

उक्तशासनानामन्यतमस्य नियन्त्रणे स्थितस्य कस्यापि स्थानीयस्यान्यस्य वा प्राधिकारिणः अधीनं धारयति।

व्याख्या.—कोऽपि जनः लाभस्य किमपि पदं धारयतीति अस्यानुच्छेदस्य प्रयोजनानामर्थे न मन्येत अस्मादेव हेतोः, यत् सोऽस्ति राष्ट्रपतिः उपराष्ट्रपतिर्वा संघस्य, अथवा राज्यपालो वा राज्यप्रमुखो वा उपराज्यप्रमुखो वा कस्यापि राज्यस्य, अथवा मन्त्री वा संघस्य कस्यापि राज्यस्य वा।

उपराष्ट्रपतेः पदावधिः।

६७. उपराष्ट्रपतिः पदं पञ्चवर्षावधि तस्माद्दिनाङ्कात् धारयेत् यस्मिन् स स्वपदमारोहति—

परंतु—

(क) उपराष्ट्रपतिः राष्ट्रपतिं संबोध्य लिखितेन स्वहस्ताङ्कितेन लेखेन पदं त्यक्तुं क्षमते;

(ख) उपराष्ट्रपतिः तत्परिषदः तत्कालिकानां समस्तसभ्यानां बहुमतस्य द्वारा पारितेन लोकसभया संमतेन च राज्यपरिषदः संकल्पेन स्वपदात् अपसारितो भवेत्; किन्तु अस्य खण्डस्य प्रयोजनार्थं कोऽपि संकल्पो न प्रस्तावितः स्यात् यदि अन्ततः चतुर्दशानां दिवसानां सूचना तत्संकल्पप्रस्तावस्य अभिप्रायविषयिणी प्रदत्ता न स्यात्;

(ग) उपराष्ट्रपतिः स्वपदावधेः समाप्तावपि पदस्य धारणमनुवर्तयेत् यावत् अस्योत्तराधिकारी स्वपदं नारोहति।

उपराष्ट्रपतिपदस्य रिक्तापूर्तये निर्वाचनप्रवर्तनस्य कालः निर्वाचितव्यक्तेः आकस्मिकरिक्तापूर्तये पदावधिश्च।

६८. (१) उपराष्ट्रपतेः पदस्यावधेः समाप्त्या कृताया रिक्ततायाः पूर्तये निर्वाचनम् अवधेः समाप्तेः पूर्वं पूर्णं भवेत्।

(२) उपराष्ट्रपतेः पदे तस्य मृत्युना वा पदत्यागेन वा प्रच्यावनेन वा अन्येन वा हेतुना भवन्त्या रिक्ततायाः पूर्तये निर्वाचनं यथासंभवमविलम्बेन रिक्ततायाः पश्चात् प्रवर्तितं भवेत्; किंच रिक्ततापूर्त्यर्थं निर्वाचितो जनः

६७–तमानुच्छेदानुबन्धानामधीनं पञ्चानां वत्सराणां पूर्णावधि पदधारणे स्वत्ववान् भवेत् तस्मादिनाङ्कात्, यस्मिन् असौ स्वपदमारोहति।

६९. प्रत्येकम् उपराष्ट्रपतिः स्वपदे आरोहणात् प्राक् राष्ट्रपतेः तेन तदर्थं नियुक्तस्य कस्यचित् जनस्य वा समक्षं शपथं प्रतिज्ञानं वा कुर्यात् निम्नलिखितेन रूपेण, यथा— उपराष्ट्रपतेः शपथः प्रतिज्ञानं वा।

"अहं...असुकः निश्चयेन परमेश्वरस्य नाम्ना शपे / सत्यनिष्ठया प्रतिजाने यत् अहं विधिना स्थापिते भारतस्य संविधाने श्रद्धां निष्ठां च धारयिष्ये तथा अहं श्रद्धासमन्वितं निर्वर्तयिष्ये कर्तव्यानि पदस्य यत् अहम् आरोढुमुद्यतोऽस्मि"।

७०. संसद् एतादृशमुपबन्धं कर्तुं क्षमते यादृशं सा कस्यामपि अस्मिन्नध्याये अकृतोपबन्धायाम् आकस्मिकतायां राष्ट्रपतेः कृत्यानां निर्वहणायोचितं मनुते। अन्यासु आकस्मिकतासु राष्ट्रपतेः कृत्यनिर्वहणम्।

७१. (१) राष्ट्रपतेरुपराष्ट्रपतेर्वा निर्वाचनात् तत्संसर्गेण वा उत्पद्यमानाः सर्वाः शङ्का विवादाश्च मीमांस्येरन् विनिश्चीयेरंश्च उच्चतमेन न्यायालयेन यस्य निर्णयोऽन्तिमो भवेत्। राष्ट्रपतेरुपराष्ट्रपतेर्वा निर्वाचनेन संबद्धाः संसक्ता वा विषयाः।

(२) यदि राष्ट्रपतेरुपराष्ट्रपतेर्वा रूपेण कस्यापि जनस्य निर्वाचनम् उच्चतमन्यायालयेन शून्यं घोषितं भवति तर्हि यथायथं राष्ट्रपतेरुपराष्ट्रपतेर्वा पदस्य शक्तीनां कर्तव्यानां च प्रयोगे पालने च तेन कृतानि कार्याणि उच्चतमन्यायालयस्य निर्णयस्य दिनाङ्के तत्पूर्वं वा तस्या घोषणाया हेतोर्न अमान्यानि भवेयुः।

(३) संसद् अस्य संविधानस्योपबन्धानामधीनं राष्ट्रपतेरुपराष्ट्रपतेर्वा निर्वाचनेन संबद्धं संसक्तं वा कमपि विषयं विधिना विनियमयितुं क्षमते।

५

क्षमादीनामनुदाने अवस्थाविशेषेषु दण्डादेशानां च निलम्बने परिहारे लघूकरणे वा राष्ट्रपतेः शक्तिः।

७२. (१) राष्ट्रपतिः कस्मिन्नप्यपराधे सिद्धदोषस्य जनस्य दण्डे क्षमाणां प्रविलम्बनानां परिहाराणां वा अनुदानाय दण्डादेशस्य वा निलम्बनाय परिहाराय लघूकरणाय वा शक्तिं भजेत—

(क) तासु सर्वास्ववस्थासु यासु दण्डो दण्डादेशो वा सेनान्यायालयेन भवति;

(ख) तासु सर्वास्ववस्थासु यासु दण्डो दण्डादेशो वा तद्विषयेण संबन्धिनः कस्यापि विधेर्विरुद्धेऽपराधे भवति यस्मिन् संघस्य कार्यपालिका शक्तिर्विस्तारमाप्नोति;

(ग) तासु सर्वास्ववस्थासु यासु मृत्युदण्डादेशो भवति।

(२) सेनान्यायालयेन पारितस्य दण्डादेशस्य निलम्बनाय परिहाराय लघूकरणाय वा संघस्य शस्त्रबलानां कस्मिन्नपि पदाधिकारिणि न्यस्तां शक्तिं (१)–खण्डस्य (क)–उपखण्डगतं किमपि न स्पृशेत्।

(३) तत्कालप्रवृत्तस्य कस्यापि विधेरधीनं राज्यस्य राज्यपालेन राजप्रमुखेन वा प्रयुज्यमानां मृत्युदण्डादेशस्य निलम्बने परिहारे लघूकरणे वा शक्तिं (१)–खण्डस्य (क)–उपखण्डगतं किमपि न स्पृशेत्।

संघस्य कार्यपालिकायाः शक्तेर्विस्तारः।

७३. (१) अस्य संविधानस्योपबन्धानामधीनं संघस्य कार्यपालिका शक्तिर्विस्तारमाप्नुयात्—

(क) तेषु विषयेषु, यानुद्दिश्य संसद् विधीनां प्रणयने शक्तिं भजते; किंच

(ख) एतादृशानामधिकाराणां प्राधिकारस्य क्षेत्राधिकारस्य च प्रयोगे, यादृशा भारतस्य शासनेन कस्यापि संधेः समयस्य वाश्रयेण प्रयोक्तव्याः सन्ति—

परंतु (क)–उपखण्डे निर्दिष्टा कार्यपालिका शक्तिः अस्मिन् संविधाने संसदा वा कृते कस्मिन्नपि विधौ स्पष्टमुपबन्धितस्थितिं विहाय

प्रथमानुसूच्याः (क)—भागे (ख)—भागे वा उल्लिखिते कस्मिन्नपि राज्ये तेषु विषयेषु न विस्तारमाप्नुयात् यानुद्दिश्य राज्यस्य विधानमण्डलमपि विधीनां प्रणयने शक्तिं भजते ।

(२) संसद् यावदन्यथोपबन्धं न करोति तावत् राज्यं राज्यस्य च कोऽपि पदाधिकारी प्राधिकारी वा, एतदनुच्छेदीयं सर्वमविगणय्य,—यादृशानां प्रयोगं तद्राज्यं वा स पदाधिकारी वा स प्राधिकारी वा अस्य संविधानस्य प्रारम्भादव्यवहितपूर्वं कर्तुमक्षमत--एतादृशानां कार्यपालिकायाः शक्तेः कृत्यानां वा प्रयोगमनुवर्तयेत् तेषु विषयेषु, यानुद्दिश्य तस्मै राज्याय विधीनां प्रणयने संसद् शक्तिं भजते ।

मन्त्रिपरिषत्

७४. (१) राष्ट्रपतये स्वकृत्यानां प्रयोगे साहाय्यं मन्त्रणां च दातुं मन्त्रिपरिषत् प्रधानमन्त्रिणा मूर्धन्यभूतेन सह भवेत् । राष्ट्रपतये साहाय्यं मन्त्रणां च दातुं मन्त्रिपरिषत् ।

(२) राष्ट्रपतये कांचित् मन्त्रणां मन्त्रिणः किं दत्तवन्तः, यद्येवम्, तर्हि काम्, इति प्रश्नो न कस्मिन्नपि न्यायालये परिप्रष्टव्यः ।

७५. (१) राष्ट्रपतिः प्रधानमन्त्रिणं नियुक्तं कुर्यात् राष्ट्रपतिश्च अन्यान् मन्त्रिणः प्रधानमन्त्रिणा सह मन्त्रणायाः समनन्तरं नियुञ्जीत । मन्त्रिसंबन्धिनोऽन्ये उपबन्धाः।

(२) राष्ट्रपतेः प्रसादावधि मन्त्रिणः पदं धारयेयुः ।

(३) मन्त्रिपरिषत् लोकसभां प्रति समष्टिरूपेण उत्तरदायिनी भवेत् ।

(४) कस्यापि मन्त्रिणः स्वपदे आरोहणात् प्राक् राष्ट्रपतिः तेन पदस्य गोपनीयतायाश्च तृतीयानुसूच्याम् एतदर्थं निश्चितानां प्रपत्राणामनुसारेण शपथं कारयेत् ।

(५) यो मन्त्री निरन्तरषण्मासानां कस्मिन्नपि कालावधौ संसदोऽन्यतरस्य कस्यापि सदनस्य न सदस्योऽस्ति सः तस्यावधेः समाप्तौ मन्त्रित्वाद्विरमेत् ।

(६) मन्त्रिणां वेतनानि भक्तानि च एतादृशानि भवेयुः यादृशानि संसत् कालेकाले विधिना निर्धारयेत्, अथ च यावन्न संसत् एवं निर्धारयेत्, तावत् तथा तानि भवेयुः यथा द्वितीयानुसूच्यां उल्लिखितानि सन्ति ।

### भारतस्य महान्यायवादी

भारतस्य महान्यायवादी ।

७६. (१) राष्ट्रपतिना उच्चतमन्यायालयस्य न्यायाधीशरूपेण नियुक्तेरर्ह एव भारतस्य महान्यायवादीति नियुक्तो भवेत् ।

(२) महान्यायवादिनः एतत् कर्तव्यं भवेत् यत् भारतस्य शासनाय मन्त्रणायाः प्रदानम् एतादृशेषु विधिसंबन्धिविषयेषु, पालनं च एतादृशानां विधिरूपाणाम् अन्येषां कर्तव्यानां यादृशानि कालेकाले तस्मै राष्ट्रपतिना निर्दिष्टानि अर्पितानि वा, तथा अनेन संविधानेन एतदधीनं वा तत्कालप्रवृत्तेन अन्येन केनापि विधिना तदधीनं वा तस्मै दत्तानां कृत्यानां निर्वहणं च ।

(३) स्वकर्तव्यानां पालनाय भारतस्य राज्यक्षेत्रे सर्वेषु न्यायालयेषु श्रावणे महान्यायवादिनः अधिकारोऽस्ति ।

(४) महान्यायवादी राष्ट्रपतेः प्रसादावधि स्वपदं धारयेत् प्राप्नुयाच्च एतादृशं पारिश्रमिकम्, यादृशं राष्ट्रपतिना निर्धारितं भवेत् ।

### शासनकार्यस्य संचालनम्

भारतशासनस्य कार्यसंचालनम् ।

७७. (१) भारतशासनस्य सर्वा कार्यपालिका कृतिः राष्ट्रपतेर्नाम्ना कृता इति कथ्येत ।

(२) राष्ट्रपतेर्नाम्ना दत्तानां निष्पादितानां च आदेशानाम् अन्येषां लिखितानां च प्रमाणीकरणम् एतादृश्या रीत्या भवेत् यादृशी राष्ट्रपतिना प्रणेतव्येषु नियमेषु उल्लिखिता भवेत्, किंच एवं प्रमाणीकृतस्य आदेशस्य लिखितस्य वा मान्यता न आपत्तिविषयतां नयेत् यदयमादेशः इदं वा लिखितं न प्रणीतं निष्पादितं वा राष्ट्रपतिना इत्याधारेण ।

(३) भारतशासनकार्यस्य अधिकसौकर्येण निर्वर्तनाय मन्त्रिणां मध्ये उक्तकार्यस्य भागकल्पनार्थं च राष्ट्रपतिर्नियमान् प्रणयेत् ।

७८. प्रधानमन्त्रिणः एतत् कर्तव्यं भवेत् । राष्ट्रपतये ज्ञपनस्य प्रदानम् इत्यादिविषयकाणि प्रधानमन्त्रिणः कर्तव्यानि ।

(क) संघकार्याणां प्रशासनेन संबध्यमानानां सर्वेषां मन्त्रिपरिषदो विनिश्चयानां विधानार्थप्रस्थापनानां च राष्ट्रपतिं प्रति प्रापणम्;

(ख) संघकार्याणां प्रशासनेन संबध्यमानस्य विधानार्थप्रस्थापनया च संबध्यमानस्य एतादृशस्य ज्ञपनस्य प्रदानम्, यादृशं राष्ट्रपतिः अपेक्षेत; किंच

(ग) यमधिकृत्य केनापि मन्त्रिणा विनिश्चयः कृतोऽस्ति मन्त्रिपरिषदा तु न विचारः कृतोऽस्ति तस्य कस्यापि विषयस्य मन्त्रिपरिषदो विचारार्थं पुरतः स्थापनम्, यदि राष्ट्रपतिः एवमपेक्षते ।

अध्यायः २.—संसत्

## साधारणम्

७९. संघाय एका संसत् स्यात्, या राज्यपरिषत् लोकसभा चेति अनुक्रमेण ज्ञेयाभ्यां द्वाभ्यां सदनाभ्यां राष्ट्रपतिना च भवेत् । संसदः संघटनम् ।

८०. (१) राज्यपरिषत्— राज्यपरिषदः रचना ।

(क) द्वादशभिः (३)–खण्डस्योपबन्धानामनुसारेण राष्ट्रपतिना कृतनामनिर्देशनैः सदस्यैः; तथा

(ख) अष्टत्रिंशदधिकद्विशतसंख्यकेभ्यः अनधिकैः राज्यानां प्रतिनिधिभिः ;

संभूय भवेत् ।

(२) राज्यानां सदस्यैः पूरणीयानां राज्यपरिषदः स्थानानां भागकल्पना चतुर्थानुसूचीस्थानां तद्विषयकोपबन्धानामनुसारेण भवेत् ।

(३) (१)–खण्डस्य (क)–उपखण्डाधीनं राष्ट्रपतिना कृतनामनिर्देशनाः सदस्याः निम्नलिखितविषयाणां विशेषज्ञानिनो व्यावहारिकानुभववन्तश्च जना भवेयुः, यथा—

साहित्यं विज्ञानं कला सामाजिकसेवा च ।

(४) राज्यविधानसभायाः निर्वाचितैः सदस्यैः प्रथमानुसूचेः (क)–भागे (ख)–भागे वा उल्लिखितस्य प्रत्येकराज्यस्य प्रतिनिधयः अनुपातिप्रतिनिधित्वपद्धतिमनुसृत्य एकलसंक्रमणीयमतेन राज्यपरिषदः कृते निर्वाचिता भवेयुः ।

(५) प्रथमानुसूचेः (ग)–भागे उल्लिखितानां राज्यानां प्रतिनिधयः राज्यपरिषदः कृते एतादृश्या रीत्या निर्वाचिताः स्युः यादृशीं संसद् विधिना विदधीत ।

लोकसभायाः रचना ।

८१. (१) (क) राज्यस्थैर्मतदातृभिः साक्षात् निर्वाचितैः पञ्चशतानधिकैः सदस्यैः संभूय (२)–खडस्य ८२, ३३१ तमानुच्छेदयोश्च उपबन्धानामधीनं लोकसभा भवेत् ।

(ख) (क)–उपखण्डस्य प्रयोजनाय राज्यानि प्रादेशिकनिर्वाचनक्षेत्राणां रूपैः विभक्तानि वर्गीकृतानि निर्मितानि वा स्युः, अथ च प्रत्येकम् एतादृशाय निर्वाचनक्षेत्राय भागैः कल्पनीया सदस्यानां संख्या तथा निर्धारिता भवेत्, यथा सुनिश्चितं भवेत् यत् प्रत्येकं ७५०,०००–जनसंख्यायै एकस्मादन्यूनः सदस्यो भवेत् तथा प्रत्येकं ५००,००० –जनसंख्यायै च एकस्मादधिकः सदस्यो न भवेत् ।

(ग) यस्या अपेक्षणीयाः अङ्काः प्रकाशिताः सन्ति तस्याम् अन्तिमायां पूर्वगतायां जनगणनायां निश्चितायाः

तस्य निर्वाचनक्षेत्रस्य जनगणनायाः तथा प्रत्येक-प्रादेशिकनिर्वाचनक्षेत्राय भागैः कल्पितायाः सदस्यसंख्यायाश्च मध्ये अनुपातः भारतस्य राज्य-क्षेत्रेषु सर्वत्र यथासाध्यम् एकविधो भवेत् ।

(२) भारतराज्यक्षेत्रे समाविष्टानां राज्ये तु कस्मिन्नपि नान्तर्भावितानां राज्यक्षेत्राणां प्रतिनिधित्वम् एतादृशं भवेत् यादृशं संसदा विधिना उपबन्धितं भवेत् ।

(३) प्रत्येकजनगणनायाः समाप्तेरुत्तरं विभिन्नानां प्रादेशिकानां निर्वाचनक्षेत्राणां लोकसभायां प्रतिनिधित्वम् एतादृशेन प्राधिकारिणा एतादृश्या रीत्या कार्यकरं च एतादृशाद् दिनाङ्कात् पुनःसमायोजितं भवेत् यादृशं संसद् विधिना निर्धारयेत् ।

परन्तु एतादृशं पुनःसमायोजनं लोकसभायाः प्रतिनिधित्वं प्रति तदानीं वर्तमानसदनस्य विघटनपर्यन्तं न स्पृशेत् ।

८२. ८१—तमानुच्छेदीय—(१)—खण्डगतं सर्वमविगणय्य, प्रथमानुसूचेः (ग)—भागे उल्लिखितस्य कस्यापि राज्यस्य अथवा भारतराज्यक्षेत्रे समाविष्टानां राज्ये तु कस्मिन्नपि नान्तर्भावितानां केषामपि राज्यक्षेत्राणां लोकसभाप्रतिनिधित्वाय तस्मिन् खण्डे उपबन्धितात् भिन्ने आधारे भिन्नया रीत्या वा संसद् विधिना उपबन्धयेत् ।

(ग)—भागीय-राज्यानां राज्यभिन्नानां राज्यक्षेत्राणां च प्रतिनिधित्वस्य विशेषः उपबन्धः ।

८३. (१) राज्यपरिषत् विघटनस्य विषयो न भवेत्, किन्तु तस्याः सदस्यानां यथाशक्यं तृतीयांशः यथासंभवं शीघ्रं प्रत्येकद्वितीयवर्षस्य समाप्तौ, संसदा तद्विषये विधिना कृतानामुपबन्धानामनुसारेण, निवर्तेत ।

संसदः सदनयोरवधिः ।

(२) लोकसभा, यदि न पूर्वतरं विघटिता, अनुवर्तेत तस्याः प्रथमाधिवेशनाय नियुक्तादिनाङ्कात् पञ्च वर्षान् न चाधिकम्, उक्तपञ्चवर्षकालावधेः समाप्तिः तस्य सदनस्य विघटनरूपेण पर्यवस्येत्—

परंतु संसदा विधिना उक्तावधिः, यावत् आपातस्योद्घोषणा प्रवृत्ताऽस्ति तावत्, एकस्मिन् काले एकवर्षानधिकं तस्याः घोषणायाः प्रवर्तन-

पर्यवसानोत्तरं कस्यामप्यवस्थायां षण्मासावधिमनतीत्य च, वर्धितो भवेत्।

संसदः सदस्यत्वस्यार्हता।

८४. कोऽपि जनः कस्यापि स्थानस्य पूर्तये वरणार्हो न भवेत् यदि नासौ—

(क) भारतस्य नागरिकोऽस्ति ;

(ख) अन्यूनत्रिंशद्वर्षवयस्कः राज्यपरिषदः स्थानाय, अन्यूनपञ्चविंशतिवयस्कश्च लोकसभायाः स्थानाय विद्यते; किंच

(ग) एतादृशीः अन्याः अर्हताः धारयति यादृश्यः तद्विषयेण संसत्कृतेन विधिना तदधीनं वा विहिता भवेयुः।

संसदः सत्राणि सत्रावसानं विघटनं च।

८५. (१) संसदः सदने अधिवेशनाय प्रतिवत्सरं न्यूनान्न्यूनं द्विवारम् आहूते भवेताम्, तयोः एकसत्रीयान्तिमोपवेशनस्य तयोः अनन्तरसत्रीयप्रथमोपवेशनाय नियुक्तदिनाङ्कस्य चान्तरा षण्णां मासानां व्यवधानं न भवेत्।

(२) (१)–खण्डस्योपबन्धानामधीनं राष्ट्रपतिः कालेकाले—

(क) सदने अन्यतरत् सदनं वा अधिवेशनाय एतादृशे काले स्थाने च आह्वातुम्, यादृशमसौ युक्तं मन्यते;

(ख) सदनयोः सत्रावसानं कर्तुम्;

(ग) लोकसभां विघटयितुम्;

क्षमते।

राष्ट्रपतेः सदने प्रति संबोधने संदेशप्रेषणे च अधिकारः।

८६. (१) राष्ट्रपतिः अन्यतरत् संसदः सदनम् उभे वा सदने एकत्र समवेते संबोधयितुं क्षमते, किंच तदर्थं सदस्यानामुपस्थितिं चापेक्षितुं क्षमते।

(२) राष्ट्रपतिः संसदोऽन्यतरत् सदनं प्रति तदा संसदि लम्बितं विधेयकम् उद्दिश्य अन्यथा वा संदेशान् प्रेषयितुं क्षमते, किंच यत् सदनं प्रति कोऽपि संदेशः एवं प्रहितोऽस्ति तत्सदनं यथानुकूलं शीघ्रं संदेशेनापेक्षितां विचारणीयतां गतं कमपि विषयं विचारयेत्।

संसदः प्रत्येकसत्रारम्भे राष्ट्रपतेर्विशेषमभिभाषणम्।

८७. (१) प्रत्येकसत्रस्य प्रारम्भे राष्ट्रपतिः उभे संसदः सदने एकत्रसमवेते संबोधयेत् संसदं तस्याः आह्वानस्य कारणानि च ज्ञापयेत्।

(२) एतादृशेऽभिभाषणे निर्दिष्टानां विषयाणां चर्चार्थं कालस्य भागकल्पनायै तस्य सदनस्य अन्यकार्यात् एतादृश्याश्चर्चायाः पूर्ववर्तितायै च अन्यतरस्य कस्यापि सदनस्य प्रक्रियाया विनियामकैर्नियमैः उपबन्धः कृतो भवेत्।

मन्त्रिणां महान्यायवादिनश्च सदनसंबन्धिनोऽधिकाराः।

८८. भारतस्य प्रत्येकं मन्त्री महान्यायवादी च भाषणाय अन्यविधकार्यप्रवृत्तिषु भागग्रहणाय च अन्यतरस्मिन् सदने सदनयोः कस्मिन्नपि संयुक्तोपवेशने च, तथा संसदः तस्यां कस्यामपि समितौ च यस्यां गृहीतनामा सदस्यः सोऽस्ति, अधिकृतो भवेत्, किन्तु अस्यानुच्छेदस्याश्रयेण मतदाने स्वत्ववान् न भवेत्।

## संसदः पदाधिकारिणः

राज्यपरिषदः सभापतिः उपसभापतिश्च।

८९. (१) भारतस्य उपराष्ट्रपतिः पदेन राज्यपरिषदः सभापतिर्भवेत्।

(२) राज्यपरिषत् तत्परिषत्सदस्यं स्वीयोपसभापतिरूपेण यथासंभवं शीघ्रं वृणीत, अथ च यदायदा उपसभापतेः पदं रिक्तं भवति; तदातदा सा परिषत् अन्यं स्वसदस्यं स्वीयोपसभापतिरूपेण वृणीत।

उपसभापतेः पदस्य रिक्तता, पदत्यागः पदादपसारणं च।

९०. राज्यपरिषदः उपसभापतिरूपेण पदं धारयन् सदस्यः—

(क) स्वपदं रिक्तीकुर्यात् यद्यसौ तत्परिषदः सदस्यत्वाद् विरमति;

(ख) सभापतिं संबोध्य लिखितेन स्वहस्ताङ्कितेन लेखेन स्वपदं कदापि त्यक्तुं क्षमते; किंच

**भागः ५.--संघः--अनुच्छेदाः ९०-९२**

(ग) तत्तत्कालवर्तमानानां परिषत्सदस्यानां सर्वेषां मध्ये बहुमतेन पारितेन तत्परिषदः संकल्पेन स्वपदात् अपसारितो भवितुमर्हति—

परंतु (ग)—खण्डस्य प्रयोजनाय कोऽपि संकल्पः तावत् प्रस्तावितो न भवेत् यावत् न्यूनान्न्यूनं चतुर्दशानां दिवसानां तत्संकल्पप्रस्तावाभिप्रायस्य सूचना न प्रदत्ता भवेत्।

उपसभापतेः अन्यस्य वा जनस्य सभापतिपदकर्तव्यानां पालने सभापतिरूपेण कार्यकरणे वा शक्तिः।

९१. (१) यदा सभापतेः पदं रिक्तमस्ति तदा, अथवा यस्मिन् उपराष्ट्रपतिः राष्ट्रपतिरूपेण कार्याणि कुर्वन् राष्ट्रपतेः कृत्यानि वा निर्वर्तयन् विद्यते तस्मिन् कस्मिन्नपि कालावधौ, उपसभापतिना तस्य पदस्य कर्तव्यानि पालितानि भवेयुः, अथवा, यदा उपसभापतेः पदमपि रिक्तमस्ति तदा राज्यपरिषदः एतादृशेन सदस्येन पदस्य कर्तव्यानि पालितानि भवेयुः यादृशं राष्ट्रपतिः तस्मै प्रयोजनाय नियोजयेत्।

(२) राज्यपरिषदः कस्मिन्नप्युपवेशने सभापतेरनुपस्थितौ उपसभापतिः, अथवा, तस्याप्यनुपस्थितौ एतादृशो जनः, यादृशः तत्परिषदः प्रक्रियाया नियमैर्निर्धारितः, अथवा, यदि न एतादृशः कोऽपि जनः उपस्थितः तर्हि अन्यः एतादृशो जनः, यादृशः तत्परिषदा निर्धारितः, सभापतिरूपेण कार्याणि कुर्वीत।

सभापतिरुपसभापतिर्वा पीठासीनो न स्यात् यदा तस्य स्वपदादपसारणाय संकल्पो विचाराधीनोऽस्ति।

९२. (१) राज्यपरिषदः कस्मिन्नप्युवेशने यदा कोऽपि उपराष्ट्रपतेः स्वपदादपसारणस्य संकल्पो विचाराधीनोऽस्ति तदा सभापतिः, अथवा यदा कोऽपि उपसभापतेः स्वपदादपसारणस्य संकल्पो विचाराधीनोऽस्ति तदा उपसभापतिः,—यद्यप्यसौ उपस्थितोऽस्ति, — पीठासीनो न भवेत्, किंच ९१—तमानुच्छेदीय—(२)—खण्डस्योपबन्धाः प्रत्येकमेतादृशमुपवेशनं विषयीकुर्युः यथा ते विषयीकुर्वन्ति तदुपवेशनं यत्र यथायथं सभापतिः उपसभापतिर्वा अनुपस्थितो भवति।

(२) यदा उपराष्ट्रपतेः स्वपदादपसारणाय कश्चिदपि संकल्पो विचाराधीनोऽस्ति तदा सभापतिः राज्यपरिषदि भाषणाय अन्यविधया तस्याः कार्यप्रवृत्तिषु भागग्रहणाय च अधिकृतो भवेत्, किन्तु १००—तमानु-

च्छेदगतं सर्वमविगणय्य, एतादृशकार्यप्रवृत्तिकाले सः एतादृशे संकल्पे अन्यस्मिन् कस्मिन्नपि विषये वा मतदाने सर्वथैव न स्वत्ववान् भवेत्।

९३. लोकसभा स्वस्य द्वौ सदस्यौ अनुक्रमेण स्वस्य अध्यक्षरूपेण उपाध्यक्षरूपेण च यथासंभवं शीघ्रं वृणीत, अथ च यदायदा अध्यक्षस्य उपाध्यक्षस्य वा पदं रिक्तं भवति तदातदा लोकसभा अन्यं सदस्यं यथायथम् अध्यक्षरूपेण उपाध्यक्षरूपेण वा वृणीत। **लोकसभाया अध्यक्षः उपाध्यक्षश्च ।**

९४. लोकसभायाः अध्यक्षस्य उपाध्यक्षस्य वा रूपेण पदं धारयन् सदस्यः— **अध्यक्षस्य उपाध्यक्षस्य च पदरिक्तता, पदत्यागः, पदादपसारणं च ।**

(क) स्वपदं रिक्तीकुर्यात् यद्यसौ लोकसभायाः सदस्यत्वाद् विरमति;

(ख) यदि एतादृशः सदस्यः अध्यक्षोऽस्ति तर्हि उपाध्यक्षं, यदि एतादृशः सदस्यः उपाध्यक्षोऽस्ति तर्हि अध्यक्षं, संबोध्य लिखितेन स्वहस्ताङ्कितेन लेखेन स्वपदं कदापि त्यक्तुं क्षमते; किंच

(ग) तत्कालिकानां लोकसभायाः सर्वेषां सदस्यानां मध्ये बहुमतेन पारितेन तत्सभायाः संकल्पेन स्वपदादपसारितो भवितुमर्हति—

परन्तु (ग)–खण्डस्य प्रयोजनाय कोऽपि संकल्पः तावत्प्रस्तावितो न भवेत् यावत् न्यूनान्न्यूनं चतुर्दशानां दिवसानां तत्संकल्पप्रस्तावाभिप्रायस्य सूचना न प्रदत्ता भवेत्—

परन्तु अन्यदपि, यदायदा लोकसभा विघटिता भवेत् तदातदा अध्यक्षः स्वपदं तद्विघटनोत्तरं लोकसभायाः प्रथमाधिवेशनस्याव्यवहितपूर्वकालपर्यन्तं न रिक्तीकुर्यात् ।

## भागः ५.--संघः--अनुच्छेदाः ९५-९७

उपाध्यक्षस्यान्यस्य वा जनस्य अध्यक्षपदीयकर्तव्यपालने अध्यक्षरूपेण कार्यकरणे वा शक्तिः ।

९५. (१) यदा अध्यक्षस्य पदं रिक्तमस्ति तदा उपाध्यक्षेण, अथवा यदि उपाध्यक्षस्यापि पदं रिक्तमस्ति तर्हि एतादृशेन लोकसभायाः सदस्येन, यादृशं राष्ट्रपतिर्नियोजयेत् तस्मै प्रयोजनाय, पदस्य कर्तव्यानि पालितानि भवेयुः ।

(२) लोकसभायाः कस्मिन्नप्युपवेशने अध्यक्षस्यानुपस्थितौ उपाध्यक्षः, अथवा तस्याप्यनुपस्थितौ एतादृशो जनः, यादृशः तत्सभायाः प्रक्रियाया नियमैर्निर्धारितः, अथवा यदि न एतादृशः कोऽपि जनः उपस्थितः तर्हि अन्यः एतादृशो जनः यादृशः तत्सभया निर्धारितः, अध्यक्षरूपेण कार्याणि कुर्वीत ।

अध्यक्षः उपाध्यक्षो वा पीठासीनो न स्यात् यदा तस्य स्वपदादपसारणाय संकल्पो विचाराधीनोऽस्ति ।

९६. (१) लोकसभायाः कस्मिन्नप्युपवेशने यदा कोऽपि संकल्पः अध्यक्षस्य स्वपदादपसारणाय विचाराधीनोऽस्ति तदा अध्यक्षः, अथवा यदा कोऽपि संकल्पः उपाध्यक्षस्य स्वपदादपसारणाय विचाराधीनोऽस्ति तदा उपाध्यक्षः, यद्यप्यसौ उपस्थितोऽस्ति, पीठासीनो न भवेत्, किंच ९५-तमानुच्छेदस्य (२)-खण्डोपबन्धाः प्रत्येकमेतादृशमुपवेशनं विषयीकुर्युः यथा ते विषयीकुर्वन्ति तदुपवेशनं यत्र यथायथम् अध्यक्षः उपाध्यक्षो वा अनुपस्थितो भवति ।

(२) यदा स्वपदादपसारणाय कश्चिदपि संकल्पो विचाराधीनोऽस्ति तदा अध्यक्षः लोकसभायां भाषणाय अन्यविधया तस्याः कार्यप्रवृत्तिषु भागग्रहणाय च अधिकृतो भवेत्, किन्तु १००-तमानुच्छेदगतं सर्वमविगणय्य, एतादृशकार्यप्रवृत्तिकाले सः एतादृशे संकल्पे अन्यस्मिन् कस्मिन्नपि विषये वा मतदाने नैव स्वत्ववान् भवेत् ।

सभापतेरुपसभापतेश्च तथा अध्यक्षस्योपाध्यक्षस्य च वेतनानि भक्तानि च ।

९७. राज्यपरिषदः सभापतये उपसभापतये च तथा लोकसभाया अध्यक्षाय उपाध्यक्षाय च एतादृशानि वेतनानि भक्तानि च दत्तानि स्युः यादृशानि संसत् विधिना क्रमशो नियतानि कुर्यात्, किंच यावत् तद्विषये नोपबन्धः कृतोऽस्ति तावत् एतादृशानि वेतनानि भक्तानि च, यादृशानि द्वितीयानुसूच्यामुल्लिखितानि सन्ति ।

९८. (१) संसदः, प्रत्येकसदनस्य पृथक् साचिविकः कर्मचारि-वृन्दः भवेत्— | संसदः सचिवालयः ।

परन्तु एतत्खण्डीयस्य कस्यापि नैवमर्थः कर्तव्यो यत् एतत् संसदः उभयसदनसाधारणानां पदानां सर्जनं निवारयति ।

(२) संसत् विधिना अन्यतरस्य कस्यापि संसत्सदनस्य साचिविके कर्मचारिवृन्दे संग्रहणं सेवाविषयकान् नियुक्तानां जनानां प्रतिबन्धांश्च विनियमयेत् ।

(३) यावत् संसत् (२)-खण्डाधीनम् उपबन्धं न करोति तावत् राष्ट्रपतिः यथायथं लोकसभायाः अध्यक्षेण राज्यपरिषदः सभापतिना वा परामृश्य लोकसभायाः राज्यपरिषदो वा साचिविके कर्मचारिवृन्दे संग्रहणस्य नियुक्तजनानां सेवाविषयकाणां प्रतिबन्धानां च विनियमनाय नियमान् कुर्यात्, किंच केऽपि एवं कृता नियमाः उक्तखण्डाधीनं प्रणीतस्य कस्यापि विधेः उपबन्धानामधीनं कार्यक्षमा भवेयुः ।

## कार्यसंचालनम्

९९. संसदोऽन्यतरस्य कस्यापि सदनस्य प्रत्येकं सदस्यः स्वस्थानग्रहणात् पूर्वं राष्ट्रपतेः तेन एतदर्थं नियुक्तजनस्य वा समक्षं तृतीयानुसूच्याम् एतत्प्रयोजनाय कृतस्य प्रपत्रस्यानुसारेण शपथं प्रतिज्ञानं वा कुर्वीत स्वहस्ताङ्कितं च कुर्यात् । | सदस्यानां शपथः प्रतिज्ञानं वा ।

१०० (१) अस्मिन् संविधाने अन्यथा उपबन्धितादन्यत्र, अन्यतरस्य सदनस्य उपवेशने सदनयोः संयुक्तोपवेशने वा अध्यक्षात् सभापतिरूपेण अध्यक्षरूपेण वा कार्यकारिणो जनात् वा अन्येषां सदस्यानाम् उपस्थितानां मतं ददतां च बहुमतेन सर्वे प्रश्ना निर्धारिताः स्युः । | सदनयोर्मतदानं, रिक्तासु सतीष्वपि सदनानां कार्यकरणे शक्तिः, गणपूर्तिश्च ।

सभापतिः अध्यक्षो वा तद्रूपेण कार्यकारी जनो वा मतं प्रथमतो न दद्यात्, किन्तु मतसाम्यावस्थायां निर्णायकमतं भजेत प्रयोजयेच्च ।

(२) संसदोऽन्यतरत् किमपि सदनं तत्रत्यायाः सदस्यतायाः कस्यामपि रिक्ततायां कार्यकरणे शक्तं भवेत्; किंच कोऽपि जनः तथा-

करणे अस्वत्ववानपि उपविष्ट आसीत्, मतमदात्, कार्यप्रवृत्तिषु वा भागग्रहणमकरोदित्येतदनन्तरमाविष्कृतमपि तदविगणय्य संसदः कार्यप्रवृत्तयो मान्या भवेयुः।

(३) यावत् संसद् विधिना अन्यथा नोपबन्धयति तावत् संसदः प्रत्येकसदनस्य अधिवेशनसिद्धये गणपूर्तिः सदनसदस्यानां पूर्णसंख्यायाः दशमांशेन भवेत्।

(४) यदि सदनाधिवेशनस्य कस्मिंश्चित् काले गणपूर्तिर्नास्ति तर्हि, यावन्न गणपूर्तिरस्ति तावत्, सदनस्य स्थगनम् अधिवेशनस्य निलम्बनं वा सभापतेः अध्यक्षस्य वा तद्रूपेण कार्यकारिणो जनस्य वा, कर्तव्यं भवेत्।

### सदस्यानामनर्हताः

स्थानानां रिक्तता।

१०१. (१) कोऽपि जनो द्वयोः सदनयोः सदस्यो न भवेत्, किंच यो जनो द्वयोः सदनयोर्निर्वाचितः सदस्योऽस्ति तेनैकस्मिन्नन्यस्मिन् वा सदने स्थानं रिक्तं कारयितुं संसद् विधिना उपबन्धं कुर्यात्।

(२) कोऽपि जनः संसदः प्रथमानुसूचीस्थे (क–)भागे (ख)–भागे वा उल्लिखितराज्यविधानमण्डलसदनस्य च द्वयोः सदस्यो न भवेत्, किंच यदि कोऽपि जनः संसदः एतादृशराज्यविधानमण्डलसदनस्य च द्वयोः निर्वाचितः सदस्योऽस्ति तर्हि तस्य जनस्य संसदि स्थानम् एतादृशकालावधेः समाप्त्युत्तरं रिक्तं भवेत् यादृशो राष्ट्रपतिना प्रणीतेषु नियमेषूल्लिखितः स्यात्, यदि तेन राज्यस्य विधानमण्डले स्थानं पूर्वं न त्यक्तं स्यात्।

(३) यदि संसदोऽन्यतरस्य कस्यापि सदनस्य सदस्यः—

(क) १०२–तमानुच्छेदस्य (१)–खण्डे वर्णितानामनर्हतानामन्यतमां कामपि भजते; अथवा

**भागः ५.—संघः— अनुच्छेदौ १०१–१०२**

(ख) यथायथं सभापतिमध्यक्षं वा संबोध्य लिखितेन स्वहस्ताङ्कितेन लेखेन स्वस्थानं त्यजति,

तर्हि तदुत्तरं तस्य स्थानं रिक्तं भवेत् ।

(४) यदि संसदोऽन्यतरस्य कस्यापि सदनस्य सदस्यः तत्सदनस्यानुज्ञां विना सर्वेषु तस्याधिवेशनेषु षष्टिदिवसकालावधि अनुपस्थितोऽस्ति तर्हि तत्सदनं तस्य स्थानं रिक्तमिति घोषयितुं क्षमते—

परंतु उक्तस्य षष्टिदिवसकालावधेः संगणनायां स कालावधिर्न गणितो भवेत् यस्मिन् सदनम् अवसितसत्रमस्ति निरन्तरदिनचतुष्टयादधिकं स्थगितं वाऽस्ति ।

१०२. (१) स कोऽपि जनः संसदोऽन्यतरस्य कस्यापि सदनस्य सदस्यरूपेण वृतत्वे स्थितौ चानर्हो भवेत्— सदस्यताया अनर्हताः ।

(क) यदि स भारतशासनस्य किंचिद्राज्यशासनस्य वाधीनं लाभस्य तत् किमपि पदं धारयति यत् तस्मात् पदादन्यदस्ति यस्य धारको नानर्हो भवति इति संसदा विधिना घोषितम्;

(ख) यदि स विकृतचित्तोऽस्ति क्षमेण न्यायालयेन एवं घोषितश्च तिष्ठति;

(ग) यदि सोऽनुन्मुक्तः ऋणशोधनाशक्तोऽस्ति ;

(घ) यदि स भारतस्य नागरिको नास्ति; अथवा वैदेशिकराज्यस्य स्वेच्छयार्जितां नागरिकतां भजते; अथवा वैदेशिकराज्यं प्रति निष्ठाया अनुषक्तेर्वा कमपि अङ्गीकारं कुर्वन् वर्तते ;

(ङ) यदि संसदः प्रणीतेन केनापि विधिना तदधीनं वा एवमनर्हः कृतोऽस्ति ।

(२) कोऽपि जनो भारतशासनस्य किंचिद्राज्यशासनस्य वाधीनं लाभस्य पदं धारयतीति एतदनुच्छेदस्य प्रयोजनानामर्थे न मन्येत अस्मादेव हेतोः, यत् सः संघस्य एतादृशराज्यस्य वा मन्त्री वर्तते इति ।

सदस्यानामनर्हतानां संबन्धिप्रश्नेषु विनिश्चयनम् ।

१०३. (१) यदि कोऽपि प्रश्न उत्पद्यते यत्, संसदोऽन्यतरस्य कस्यापि सदनस्य सदस्यः १०२–तमानुच्छेदस्य (१)–खण्डे वर्णितानामनर्हतानामन्यतमां कामपि भजते किमिति, तर्हि स प्रश्नो राष्ट्रपतेर्विनिश्चयार्थं प्रदत्तो भवेत्, किंच तस्य विनिश्चयोऽन्तिमो भवेत् ।

(२) एतादृशे कस्मिन्नपि प्रश्ने विनिश्चयस्य प्रदानात् पूर्वं राष्ट्रपतिः निर्वाचनायोगस्य मतिमाप्नुयात्, किंच एतादृश्या मतेरनुसारेण कार्यं कुर्यात् ।

९९-तमानुच्छेदस्याधीनं शपथस्य प्रतिज्ञानस्य वा करणात् पूर्वम् अथवा अनर्हे अनर्हीकृते वा स्थानग्रहणात् मतदानाद्वा दण्डः ।

१०४. यदि कोऽपि जनः ९९–तमानुच्छेदस्यापेक्षाणां पूर्तेः पूर्वम्, यदा स जानाति यत् संसदोऽन्यतरस्य कस्यापि सदनस्य सदस्यतायां नार्होऽस्मि अनर्हः कृतोऽस्मि वा संसदा प्रणीतस्य कस्यापि विधेरुपबन्धैः प्रतिषिद्धोऽस्मि वा तदा, संसदोऽन्यतरस्मिन् सदने उपविशति मतं वा ददाति तर्हि, यस्मिन् दिवसे स उपविशति मतं वा ददाति तं प्रत्येकं दिवसं प्रति संघदेयस्य ऋणस्य रूपेण प्रत्यादेयानि पञ्च शतानि रूप्याणि तस्य दण्डो भवेत् ।

## संसदः तत्सदस्यानां च शक्तयो विशेषाधिकारा उन्मुक्तयश्च

संसत्सदनयोः तत्सदस्यानां तत्समितीनां च शक्तयो विशेषाधिकारा इत्यादि ।

१०५. (१) एतत्संविधानोपबन्धानां च संसत्प्रक्रियाविनियामकानां नियमानां च स्थाय्यादेशानां चाधीनं संसदि भाषणस्य स्वातन्त्र्यं भवेत् ।

(२) संसदः सदस्यः संसदि तस्याः कस्यामपि समित्यां वा स्वस्य कामप्युक्तिं किमपि मतदानं वोद्दिश्य कस्मिन्नपि न्यायालये कार्यप्रवृत्तीनां भाजनं न भवेत्; किंच, कोऽपि जनः संसदोऽन्यतरस्य कस्यापि सदनस्य प्राधिकारैः तदधीनं वा कस्यापि प्रतिवेदनस्य, पत्रस्य, मतानां, कार्यप्रवृत्तीनां वा प्रकाशनमुद्दिश्य एवं भाजनं न भवेत् ।

(३) अन्येषु विषयेषु संसदः प्रत्येकसदनस्य तथा तत्प्रत्येकसदनीयानां सदस्यानां समितीनां च शक्तयो विशेषाधिकारा उन्मुक्तयश्चैतादृशा भवेयुः यादृशाः संसदा कालेकाले विधिना परिभाषिता भवेयुः; किंच यावन्नैवं परिभाषिताः तावत् ते भवेयुः, अस्य संविधानस्य प्रारम्भे 'युनायटेडकिंग्डम्'—संसत्सदनस्य तथा तत्सदस्यानां तत्समितीनां च ये सन्ति ।

(४) ये जनाः अस्य संविधानस्याश्रयेण संसदः सदने तस्याः कस्यामपि समितौ वा भाषितुम् अन्यप्रकारेण तस्याः कार्यप्रवृत्तिषु साहाय्यं ग्रहीतुं वा अधिकारवन्तः सन्ति तेषां संबन्धं (१)-(२)-(३)—खण्डानामुपबन्धा विषयीकुर्युः यथा ते संसदः सदस्यानां संबन्धं विषयीकुर्वन्ति ।

१०६. संसदः प्रत्येकसदनस्य सदस्या एतादृशानां वेतनानां भक्तानां च प्राप्तौ स्वत्ववन्तो भवेयुः यादृशानि संसदा विधिना कालेकाले निर्धारितानि भवेयुः; किंच यावत् तद्विषये उपबन्धा एवं न कृताः तावत् एतादृशैर्मानैः एतादृशैः प्रतिबन्धैश्च वेतनानां भक्तानां च, यादृशानि अस्य संविधानस्य प्रारम्भादव्यवहितपूर्वं भारताधिनिवेशस्य संविधानसभायाः सदस्यानामवस्थां विषयीकुर्वाणानि आसन् । सदस्यानां वेतनानि भक्तानि च ।

विधानप्रक्रिया

१०७. (१) धनविधेयकैरन्यैर्वित्तीयविधेयकैश्च संबद्धानां १०९, ११७—तमानुच्छेदयोरुपबन्धानामधीनं संसदः अन्यतरस्मिन् कस्मिन्नपि सदने किमपि विधेयकम् उपक्रममर्हति । विधेयकानां पुरःस्थापनस्य पारणस्य चोपबन्धाः ।

(२) १०८—१०९—तमानुच्छेदयोरुपबन्धानामधीनं किमपि विधेयकं संसदः सदनाभ्यां पारितमिति न तावन्मन्येत यावत् उभाभ्यां सदनाभ्यां संशोधनेन विना केवलैरेतादृशैः संशोधनैर्वा सह तत् न स्वीकृतं भवति यादृशान्युभाभ्यां सदनाभ्यां स्वीकृतानि सन्ति ।

(३) संसदि लम्बितं विधेयकं सदनयोः सत्रावसानेन हेतुना व्यपगतं न भवेत् ।

(४) राज्यपरिषदि लम्बितं यद् विधेयकं लोकसभया न पारितं भवति तत् लोकसभाया विघटने व्यपगतं न भवेत् ।

(५) यद् विधेयकं लोकसभायां लम्बितं भवति, अथवा, लोकसभया पारितं भूत्वा राज्यपरिषदि लम्बितं भवति, तत् १०८- तमानुच्छेदस्योपबन्धानामधीनं लोकसभाया विघटने व्यपगतं भवेत् ।

अवस्थाविशेषेषु उभयोः सदनयोः संयुक्तोपवेशनम् ।

१०८. (१) यदि किमपि विधेयकमेकेन सदनेन पारितमस्ति अन्यत् सदनं प्रति प्रेषितं चास्ति तत्पश्चात्—

(क) तद्विधेयकं तेनान्येन सदनेन निराकृतमस्ति; अथवा

(ख) तद्विधेयके करणीयेषु संशोधनेषु उभे सदने अन्तिमरूपेण वैमत्ये स्थिते स्तः ; अथवा

(ग) तेनान्येन सदनेन तद्विधेयके असति पारिते, तद्विधेयकस्य प्राप्तेर्दिनाङ्कात् षड्भ्यो मासेभ्योऽधिकः कालोऽत्येति,

तर्हि राष्ट्रपतिः, लोकसभाया विघटनहेतुना तद्विधेयकं यदि व्यपगतं न भवति तर्हि, तस्मिन् विधेयके पर्यालोचनस्य मतदानस्य च प्रयोजनार्थं संयुक्तोपवेशनेऽधिवेशनायाह्वानस्याभिप्रायविषयिणीमधिसूचनां सदनाभ्यां—यदि ते सदने उपविष्टे स्तः तर्हि संदेशेन यदि च ते सदने उपविष्टे न स्तः तर्हि लोकाधिसूचनया—- दद्यात्—-

परन्तु एतत्खण्डगतं किमपि न धनविधेयकं विषयीकुर्यात् ।

(२) यादृशः (१)—खण्डे निर्दिष्टोऽस्ति एतादृशस्य कस्यापि कालावधेः संगणनायां स कालावधिर्न गणितः स्यात् यस्मिन् तत्खण्डस्य (१)—उपखण्डे निर्दिष्टं तत्सदनम् अवसितसत्रं निरन्तरदिनचतुष्टयादधिकदिनानि स्थगितं वाऽस्ति ।

(३) यद्या राष्ट्रपतिः सदनयोः संयुक्तोपवेशनेऽधिवेशनार्थमाह्वानस्याभिप्रायविषयिणीमधिसूचनां (१)—खण्डस्याधीनं दत्तवानस्ति तदा

अन्यतरदपि सदनं तद्विधेयके कार्यप्रवृत्तिमग्रे न कुर्यात्, किन्तु राष्ट्रपतिरधिसूचनाया दिवसादुत्तरं कस्मिन्नपि कालेऽधिसूचनायामुल्लिखितप्रयोजनाय संयुक्तोपवेशनेऽधिवेशनार्थं सदने आह्वातुं क्षमते, किंच यद्यसौ एवं करोति तर्हि तदनुसारेण सदनेऽधिविशेताम्।

(४) यादृशानि संयुक्तोपवेशने स्वीकृतानि भवन्ति एतादृशैः संशोधनैः सह, कान्यपि चेत् सन्ति, यदि उभयोः सदनयोः संयुक्तोपवेशनस्य विधेयकम् उभयोः सदनयोरुपस्थितानां मतं ददतां च समस्तानां सदस्यानां मध्ये बहुमतेन पारितमस्ति तर्हि अस्य संविधानस्य प्रयोजनानां कृते उभाभ्यां सदनाभ्यां तत् पारितमिति मन्येत—

परन्तु संयुक्तोपवेशने—

(क) यदि विधेयकम् एकेन सदनेन पारितं भूत्वा द्वितीयेन सदनेन संशोधनैः सह न पारितं भवति किंच यस्मिन् सदने तदुपक्रान्तं तत्प्रति न निवर्तितं तर्हि यादृशानि विधेयकस्य पारणे कालविलम्बेनावश्यकानि कृतानि एतादृशैः संशोधनैः (कान्यपि चेत् सन्ति ) विना अन्यानि कान्यपि संशोधनानि विधेयके प्रस्थापितानि न भवेयुः;

(ख) यदि विधेयकम् एवं पारितं निवर्तितं चास्ति तर्हि, यादृशानि पूर्वोक्तानि एतादृशान्येव संशोधनानि, किंच येषु सदनयोः सहमतिर्न संवृत्ता तैर्विषयैः यादृशानि सुसंगतानि एतादृशान्यन्यानि संशोधनानि, विधेयके प्रस्थापितानि भवेयुः;

किंच अस्य खण्डस्याधीनं कानि संशोधनानि प्रवेश्यानीत्यस्मिन् विषये पीठासीनस्य जनस्य विनिश्चयोऽन्तिमो भवेत्।

(५) संयुक्तोपवेशने सदनयोरधिवेशनार्थमाह्वानस्याभिप्रायविषयिण्या राष्ट्रपतेरधिसूचनायाः पश्चात् यद्यपि अन्तरा लोकसभाया विघटनं

संवृत्तमस्ति तथापि अस्यानुच्छेदस्याधीनं संयुक्तोपवेशनं भवितुमर्हति तथा तस्मिन् विधेयकं पारितं भवितुमर्हति ।

धनविधेयकानां विषये विशेष-प्रक्रिया ।

१०९. (१) धनविधेयकं राज्यपरिषदि पुरःस्थापितं न भवेत् ।

(२) यदा लोकसभया धनविधेयकं पारितमस्ति ततः पश्चात् तत् राज्यपरिषदं प्रति तस्याः पुरःप्रशंसनानां कृते प्रेषितं भवेत् राज्यपरिषच्च तद्विधेयकस्य प्राप्तेर्दिनाङ्कात् चतुर्दशानां दिवसानां कालावधेरभ्यन्तरे तद्विधेयकं स्वस्य पुरःप्रशंसनैः सह लोकसभां प्रति निवर्तयेत् , लोकसभा च ततः पश्चात् राज्यपरिषदः सर्वाणि पुरःप्रशंसनानि तदन्यतमं किमपि वा स्वीकुर्यात् निराकुर्याद् वा ।

(३) यदि राज्यपरिषदः पुरःप्रशंसनानामन्यतमं किमपि लोकसभा स्वीकरोति तर्हि तद्धनविधेयकं राज्यपरिषदा पुरःप्रशंसितैः लोकसभया च स्वीकृतैः संशोधनैः सह उभाभ्यां सदनाभ्यां पारितमिति मन्येत ।

(४) यदि राज्यपरिषदः पुरःप्रशंसनानामन्यतमं किमपि लोकसभा न स्वीकरोति तर्हि तद्धनविधेयकं राज्यपरिषदा पुरःप्रशंसितानां संशोधनानामन्यतमेन केनापि विना तेन रूपेण पारितमिति मन्येत येन रूपेण लोकसभया तत् पारितमासीत् ।

(५) यदि लोकसभया पारितं राज्यपरिषदं प्रति तस्याः पुरःप्रशंसनानां कृते प्रेषितं च धनविधेयकं चतुर्दशानां दिवसानामुक्तकालावधेरभ्यन्तरे लोकसभां प्रति न निवर्तितमस्ति तर्हि उक्तकालावधेः समाप्तौ उभाभ्यां सदनाभ्यां तेन रूपेण तत् पारितमिति मन्येत येन रूपेण लोकसभया तत् पारितमासीत् ।

"धनविधेयकानां" परिभाषा ।

११०. (१) एतदध्यायस्य प्रयोजनानां कृते, किमपि विधेयकं धनविधेयकमिति मतं भवेत् यदि निम्नलिखितैः सर्वैर्विषयैः तेषामन्यतमेन केनापि वा संबध्यमानानुपबन्धानेव तत् अन्तर्निवेशयति, यथा—

(क) कस्यापि करस्य आरोपणम्, विलोपनम्, परिहारः, परिवर्तनम्, विनियमनं वा;

**भागः ५.—संघः—अनुच्छेदः ११०**

(ख) भारतशासनेन कर्तव्यस्य धनोद्धारस्य कस्या अपि प्रत्याभूतेर्दानस्य वा, अथवा भारतशासनेन अङ्गीकृतैः अङ्गीकर्तव्यैर्वा वित्तीयाभारैः संबन्धिनः विधेः संशोधनस्य, विनियमनम् ;

(ग) भारतस्य संचितनिधेराकस्मिकतानिधेर्वा अभिरक्षा, एतादृशे कस्मिन्नपि निधौ धनस्य प्रवेशनं तस्मात् धनस्य प्रतिसंहरणं वा ;

(घ) भारतस्य संचितनिधेर्मध्यात् धनस्य विनियोगः ;

(ङ) कस्यापि व्ययस्य भारतसंचितनिधौ भारितव्ययरूपेण घोषणम् एतादृशस्य कस्यापि व्ययस्य राशेर्वर्धनं वा ;

(च) भारतस्य संचितनिधौ भारतस्य लोकगणनायां वा धनस्य प्रापणम्, अथवा एतादृशस्य धनस्य अभिरक्षा निष्कासनं वा, अथवा संघस्य राज्यस्य वा गणनानां गणनापरीक्षणम्; अथवा

(छ) (क)—आरभ्य (च)—पर्यन्तेषूपखण्डेषूल्लिखितविषयाणामन्यतमस्य कस्यापि कोऽप्यानुषङ्गिको विषयः ।

(२) किमपि विधेयकं धनविधेयकमस्तीति केवलमेतेनैव हेतुना न मतं भवेत् यत् तत् अर्थदण्डानामन्यासां वा आर्थिकशास्तीनामारोपणाय, अनुज्ञप्तीनामर्थे यानि देयानि आचरितसेवानामर्थे वा यानि देयानि तेषां देयानामभियाचनायै प्रदानाय वोपबन्धयति; अथवा एतेन हेतुना, यत्, तत् केनापि स्थानीयेन प्राधिकारिणा निकायेन वा स्थानीयप्रयोजनानामर्थे कस्यापि करस्यारोपणाय विलोपनाय परिहाराय परिवर्तनाय विनियमनाय वोपबन्धयति ।

(३) किमपि विधेयकं धनविधेयकमस्ति न वेति यदि कोऽपि प्रश्नः उत्पद्यते तर्हि तत्र लोकसभाया अध्यक्षस्य विनिश्चयोऽन्तिमो भवेत् ।

(४) १०९-तमानुच्छेदाधीनं यदा धनविधेयकं राज्यपरिषदं प्रति प्रेषितं भवेत्; किंच यदा १११--तमानुच्छेदाधीनं तत् राष्ट्रपतेः समक्षम् अनुमत्यर्थमुपस्थापितं भवेत् तदा प्रत्येकस्मिन् धनविधेयके लोकसभाया अध्यक्षेण हस्ताङ्कितं-एतत् धनविधेयकमिति-प्रमाणपत्रम् अङ्कितं भवेत् ।

विधेयकान् प्रत्यनुमतिः ।

१११. यदा किमपि विधेयकं संसदः सदनाभ्यां पारितमस्ति तदा तत् राष्ट्रपतेः समक्षमुपस्थापितं भवेत्; किंच राष्ट्रपतिः घोषयेत् यदसौ तद् विधेयकमनुमन्यते वा, यदसौ तस्यानुमतिं निरुणद्धि वेति—

परन्तु राष्ट्रपतिः तद्विधेयकस्य स्वानुमत्यर्थमुपस्थापनात्परं तद्विधेयकम्, यदि तन्न धनविधेयकम्, यथाशीघ्रं सदने प्रति निवर्तयितुं क्षमते एवं प्रार्थयता संदेशेन सह यत्,-ते सदने तद् विधेयकं कानपि तस्मिन्नुल्लिखितानुपबन्धान् वा पुनर्विचारयेताम्, विशेषतश्च, एतादृशानां केषामपि संशोधनानां पुरः स्थापनाया वाञ्छनीयतां विचारयेताम्,-यादृशानि स स्वीये संदेशे पुरः प्रशंसयेत्; किंच यदा विधेयकमेवं निवर्तितं भवति तदा ते सदने तद्विधेयकं तदनुसारेण पुनर्विचारयेताम्; किंच यदि तद्विधेयकं सदनाभ्यां संशोधनेन सह विना वा पुनः पारितम् अनुमत्यर्थं च राष्ट्रपतेः समक्षम् उपस्थापितं भवति तर्हि राष्ट्रपतिः तस्यानुमतिं न निरुन्ध्यात् ।

## वित्तीयविषयाणां प्रक्रिया

वार्षिकवित्तविवरणम् ।

११२. (१) राष्ट्रपतिः प्रत्येकं वित्तीयवर्षस्य विषये तद्वर्षार्थम् अस्मिन् भागे "वार्षिकवित्तविवरणम्" इति निर्दिष्टं भारतशासनस्य प्राक्कलितानां प्राप्तीनां व्ययानां च विवरणम् उभयोः सदनयोः समक्षं निधापयेत् ।

(२) वार्षिकवित्तविवरणे निरूपितानि व्ययस्य प्राक्कलनानि—

(क) यो व्ययोऽस्मिन् संविधाने भारतस्य संचितनिधेरुपरि भारितव्ययरूपेण वर्णितस्तस्य पूर्तये अपेक्षितान् राशीन्; तथा

(ख) भारतस्य संचितनिधितः करिष्यमाणत्वेन प्रस्थापितानामन्येषां व्ययानां पूर्तये अपेक्षितान् राशीन्;

पृथक् प्रदर्शयेयुः; किंच राजस्वगणनार्थं व्ययस्य अन्यस्माद् व्ययात् भेदं कुर्युः ।

(३) निम्नलिखितो व्ययः भारतस्य संचितनिधौ भारितो व्ययो भवेत्—

(क) राष्ट्रपतेः उपलब्धयः भक्तानि च; किंच तस्य पदेन संबध्यमानोऽन्यो व्ययः;

(ख) राज्यपरिषदः सभापतेरुपसभापतेश्च तथा लोकसभाया अध्यक्षस्योपाध्यक्षस्य च वेतनानि भक्तानि च;

(ग) वृद्धिं निक्षेपनिधिभारं मोचनभारं च तथा उद्धारग्रहणेन ऋणसेवया ऋणमोचनेन च संबध्यमानमन्यं व्ययं च अन्तर्भावयन्तः ऋणभाराः येषां भारतशासनं दायि भवति;

(घ) (१) उच्चतमन्यायालयस्य न्यायाधीशेभ्यः तत्संबन्धेन वा देयानि वेतनानि भक्तानि निवृत्तिवेतनानि च;

(२) 'फेडरल' न्यायालयस्य न्यायाधीशेभ्यः तत्संबन्धेन वा देयानि वेतनानि भक्तानि निवृत्तिवेतनानि च;

(३) यो न्यायालयः भारतराज्यक्षेत्रेऽन्तर्भावितस्य कस्यापि क्षेत्रस्य संबन्धे क्षेत्राधिकारं प्रयुङ्क्ते यो वा प्रथमानुसूच्याः (क)–भाग उल्लिखितराज्यस्य स्थानिनि प्रान्तेऽन्तर्भावितस्य कस्यापि क्षेत्रस्य संबन्धेऽस्य संविधानस्य प्रारम्भात् पूर्वं कंचिदपि कालं क्षेत्राधिकारं प्रयुक्तवान् तस्य न्यायाधीशेभ्यः तत्संबन्धेन वा देयानि निवृत्तिवेतनानि;

(ङ) भारतस्य नियन्त्रकमहालेखापरीक्षकाय तत्संबन्धेन वा देयानि वेतनं भक्तानि निवृत्तिवेतनं च;

(च) कस्यापि न्यायालयस्य मध्यस्थन्यायाधिकरणस्य वा निर्णयस्याज्ञप्तेः मध्यस्थनिर्णयस्य वा निस्तारार्थं अपेक्षिता राशयः;

(छ) अनेन संविधानेन संसदो विधिना वा एवं भारितः करणीयः इति घोषितः कोऽप्यन्यो व्ययः।

प्राक्कलनानां विषये संसदः प्रक्रिया।

११३. (१) भारतस्य संचितनिधौ भारितव्ययेन यादृक् संबध्यते तादृक् प्राक्कलनीयं संसदो मतदानार्थं न पुरतः स्थापितं भवेत्; किन्तु एतत्खण्डगतस्य कस्यापि एवमर्थो न कृतो भवेत् यत् एतत् तेषां प्राक्कलनानामन्यतमस्य कस्यापि चर्चां संसदोऽन्यतरस्मिन् सदने निवारयति।

(२) उक्तप्राक्कलनानां यावन्मात्रम् अन्यव्ययेन संबध्यते तावन्मात्रं लोकसभायाः समक्षम् अनुदानानामभियाचनारूपेण पुरतः स्थापितं भवेत्; किंच लोकसभा कस्या अप्यभियाचनाया अमनुतौ अनुमतेः प्रत्याख्याने वा कस्या अप्यभियाचनायाः तस्यामुल्लिखितं राशिमपकृष्य अनुमतौ वा शक्तिं भजेत।

(३) राष्ट्रपतेः पुरःप्रशंसनमन्तरेण अनुदानस्य काप्यभियाचना न कृता भवेत्।

विनियोग-विधेयकानि।

११४. (१) ११३-तमानुच्छेदाधीनं लोकसभया अनुदानानि यदा कृतानि सन्ति तदुत्तरं यथासंभवं शीघ्रं भारतस्य संचितनिधितः—

(क) लोकसभाया एवं कृतानामनुदानानाम्; तथा

(ख) भारतस्य संचितनिधौ भारितस्य किन्तु संसदः समक्षं पूर्वं निहिते विवरणे प्रदर्शितराशेः कस्यामप्यवस्थायामनधिकस्य व्ययस्य;

## भागः ५.—संघः— अनुच्छेदौ ११४–११५

पूर्त्यर्थमपेक्षितानां सर्वधनानां विनियोगार्थमुपबन्धयितुं विधेयकं पुरःस्थापितं भवेत् ।

(२) एवं कृतस्यानुदानस्य राशिं परिवर्तयितुं तस्य लक्ष्यं वा परिवर्तयितुम्, भारतस्य संचितनिधौ भारितस्य व्ययस्य राशिं वा परिवर्तयितुम्, यत् किमपि संशोधनं कार्यक्षमं भवेत् तत् संसदः कस्मिन्नप्यन्यतरस्मिन् सदने एतादृशे कस्मिन्नपि विधेयके न प्रस्थापितं भवेत्; किंच किमपि संशोधनम् एतत्खण्डाधीनमप्रवेश्यमस्ति न वा इत्यस्मिन् पीठासीनस्य जनस्य विनिश्चयोऽन्तिमो भवेत् ।

(३) एतदनुच्छेदीयोपबन्धानामनुसारेण पारितेन विधिना कृतस्य विनियोगस्यानुसरणमन्तरेण ११५–११६–तमानुच्छेदयोरुपबन्धानामधीनं भारतस्य संचितनिधितः किमपि धनं प्रतिसंहृतं न भवेत् ।

११५. (१) यदि— अनुपूरकाणि, अपराणि, अधिकानि वानुदानानि ।

(क) ११४–तमानुच्छेदीयोपबन्धानामनुसारेण प्रणीतेन विधिना कस्यामपि विशेषसेवायां वर्तमाने वित्तीयवर्षे व्ययार्थं प्राधिकृतो राशिः तद्वर्षस्य प्रयोजनानां कृते अपर्याप्त इत्यवगतोऽस्ति; अथवा तस्य वित्तीयवर्षस्य वार्षिकवित्तविवरणेन अचिन्तितायां सेवायामनुपूरकस्य अपरस्य वा व्ययस्य वर्तमाने वित्तीयवर्षे आवश्यकतोत्पन्नाऽस्ति; अथवा

(ख) वित्तीयवर्षस्य कस्यामपि सेवायां तत्सेवार्थं तद्वर्षार्थमनुदत्ताद् राशेरधिकं धनं व्ययितमस्ति;

तर्हि यथायथं राष्ट्रपतिः संसदः उभयोः सदनयोः समक्षं तस्य व्ययस्य प्राक्कलितं राशिं प्रदर्शयदन्यद्विवरणं निधापयेत्, अथवा, लोकसभायामेतादृश्या अधिकताया अभियाचनामुपस्थितां कारयेत् ।

भागः ५.--संघः--अनुच्छेदौ ११५-११६

(२) एतादृशस्य कस्यापि विवरणस्य व्ययस्य च अभियाचनाया वा संबन्धे, भारतस्य संचितनिधितः एतादृशस्य व्ययस्य एतादृश्या अभियाचनाया वा संबन्धे च, अनुदानस्य पूर्तये धनानां विनियोगं प्राधिकृतं कुर्वतः प्रणेतव्यस्य कस्यापि विधेः संबन्धेऽपि च ११२-११३-११४-तमानुच्छेदीयोपबन्धास्तथा कार्यक्षमा भवेयुः यथा ते वार्षिकवित्तविवरणस्य तस्मिन् वर्णितव्ययस्य च संबन्धे, अनुदानस्य कस्या अप्यभियाचनायाः संबन्धे च, भारतस्य संचितनिधितः एतादृशस्य कस्यापि व्ययस्यानुदानस्य वा पूर्तये धनानां विनियोगं प्राधिकृतं कुर्वतः प्रणेतव्यस्य विधेः संबन्धे च कार्यक्षमा भवन्ति ।

गणनानुदानं, प्रत्ययानुदानं अपवादानुदानं च ।

११६. (१) अस्याध्यायस्य पूर्वगाम्युपबन्धगतं सर्वमविगणय्य—

(क) कस्यापि वित्तीयवर्षस्य भागार्थं प्राक्कलितव्ययस्य संबन्धे कस्याप्यनुदानस्य, एतादृशानुदाने मतदानार्थं ११३-तमानुच्छेदे विहितायाः प्रक्रियायाः पूर्तौ लम्बितायां सत्यां तथा तस्य व्ययस्य संबन्धे ११४-तमानुच्छेदस्योपबन्धानामनुसारेण विधेः पारणे लम्बिते सति, तत्पूर्वं कर्तुम्;

(ख) यदा कस्या अपि सेवाया महत्तया अनिश्चितरूपतया वा अभियाचना वार्षिकवित्तीयविवरणे साधारणतया वर्णितांशप्रपञ्चेन सह न वर्णयितुं शक्यते तदा भारतस्य संपत्तिसाधनेषु अतर्किताया अभियाचनायाः पूर्त्यै अनुदानं कर्तुम्;

(ग) कस्यापि वित्तीयवर्षस्य वर्तमानसेवाया यत् भागो न भवति तद्विशिष्टानुदानं कर्तुम्;

लोकसभा शक्तिं भजेत ; किंच उक्तानुदानानि येभ्यः प्रयोजनेभ्यः कृतानि भवन्ति तान्युद्दिश्य भारतस्य संचितनिधितो धनस्य आदानं विधिना प्राधिकृतं कर्तुं संसत् शक्तिं भजेत ।

(२) ११३–११४–तमानुच्छेदीयोपबन्धाः (१)–खण्डाधीनमनुदानस्य तत्खण्डाधीनं प्रणेतव्यस्य कस्यापि विधेश्च संबन्धे एतादृशाः कार्यक्षमा भवेयुः, यथा ते वार्षिकवित्तविवरणे वर्णितं कमपि व्ययमुद्दिश्य किमप्यनुदानं कर्तुं भारतस्य संचितनिधितः एतादृशस्य व्ययस्य पूर्त्यै धनानां विनियोगं प्राधिकृतं कर्तुं च प्रणेतव्यस्य विधेः संबन्धे कार्यक्षमा भवन्ति।

वित्तविधेयकानां संबन्धे विशेषा उपबन्धाः।

११७. (१) ११०–तमानुच्छेदीय–(१)–खण्डस्य (क)–उपखण्डमारभ्य (च)–उपखण्डपर्यन्तेषूपखण्डेषूल्लिखितविषयाणामन्यतमाय कस्मै अपि उपबन्धं कुर्वद् विधेयकं संशोधनं वा राष्ट्रपतेः पुरःप्रशंसनमन्तरेण पुरःस्थापितं प्रस्तावितं वा न भवेत्; किंच एतादृशमुपबन्धं कुर्वद् विधेयकं राज्यपरिषदि न पुरःस्थापितं भवेत् —

परन्तु कस्यापि करस्यापकर्षणाय विलोपनाय वोपबन्धं कुर्वतः संशोधनस्य प्रस्तावार्थम् एतत्खण्डाधीनं किमपि पुरःप्रशंसनं नापेक्षितं भवेत्।

(२) किमपि विधेयकं संशोधनं वा उक्तविषयाणामन्यतमाय कस्मै अपि उपबन्धं करोतीति केवलेन एतेनैव हेतुना न मतं भवेत् यत्, तत् अर्थदण्डानाम् अन्यासामर्थशास्तीनाम् आरोपणाय अनुज्ञप्तीनामर्थे देयानां निर्वृत्तसेवानामर्थे वा देयानाम् अभियाचनायै प्रदानाय वोपबन्धयतीति; अथवा एतेन हेतुना यत्, तत् कस्यापि स्थानीयस्य प्राधिकारिणो निकायस्य वा स्थानीयप्रयोजनानामर्थे कस्यापि करस्य आरोपणाय उत्सादनाय परिहाराय परिवर्तनाय विनियमनाय वोपबन्धयतीति।

(३) यद् विधेयकम्, यद्यधिनियमितं प्रवर्तितं च तर्हि, भारतस्य संचितनिधितो व्ययम् अन्तर्गृह्णाति; तत् संसदः केनाप्यन्यतरेण सदनेन तावत् पारितं न भवेत् यावत् एतादृशे विधेयके विचारार्थं राष्ट्रपतिः तत्सदनस्य कृते पुरःप्रशंसनं न कुर्यात्।

## साधारणतया प्रक्रिया

प्रक्रियाया नियमाः।

११८. (१) अस्य संविधानस्योपबन्धानामधीनं संसदः प्रत्येकं सदनं स्वीयप्रक्रियायाः स्वीयकार्यसंचालनस्य च विनियमनार्थं नियमान् प्रणेतुं क्षमते।

## भागः ५.--संघः--अनुच्छेदाः ११८-१२०

(२) यावत् (१)—खण्डाधीनं नियमा न प्रणीताः सन्ति तावत् अस्य संविधानस्य प्रारम्भादव्यवहितपूर्वं भारताधिनिवेशस्य विधानमण्डलमुद्दिश्य ये प्रक्रियाया नियमाः स्थाय्यादेशाश्च प्रवृत्ता आसन् ते एतादृशानां रूपभेदानाम् अनुकूलनानां चाधीनं संसदः संबन्धे कार्यक्षमा भवेयुः, यादृशानि यथायथं राज्यपरिषदः सभापतिः लोकसभाया अध्यक्षो वा तत्र कर्तुं क्षमते।

(३) राष्ट्रपतिः राज्यपरिषदः सभापतिना लोकसभाया अध्यक्षेण च परामृश्य उभयोः सदनयोः संयुक्तोपवेशनानि परस्परं संचारांश्चोद्दिश्य प्रक्रियाया नियमान् प्रणेतुं क्षमते।

(४) उभयोः सदनयोः संयुक्तोपवेशने लोकसभाया अध्यक्षः पीठासीनो भवेत्; तस्यानुपस्थितौ एतादृशो वा जनः, यादृशः (३)—खण्डाधीनं कृतायाः प्रक्रियाया नियमैर्निर्धारितो भवेत्।

वित्तीयकार्यसंबन्धिप्रक्रियायाः संसदि विधिना नियमनम्।

११९. वित्तीयकार्यस्य यथाकालं समाप्त्यर्थं संसत् केनापि वित्तीयविषयेण भारतस्य संचितनिधितः धनस्य विनियोगं कुर्वता केनापि विधेयकेन वा संबन्धे प्रत्येकसदनस्य प्रक्रियां कार्यसंचालनं च विधिना विनियमयितुं क्षमते; किंच, यदि यावच्च एवं प्रणीतस्य कस्यापि विधेरुपबन्धः ११८-तमानुच्छेदीय-(१)-खण्डाधीनं संसदः केनाप्यन्यतरेण सदनेन प्रणीतैर्नियमैः तदनुच्छेदीय-(२)-खण्डाधीनं वा संसदः संबन्धे कार्यक्षमेण केनापि नियमेन स्थाय्यादेशेन वा असंगतोऽस्ति तर्ह्येतादृशः उपबन्धः प्रभवेत्।

संसदि प्रयोज्या भाषा।

१२०. (१) १७- भागगतं सर्वमविगणय्य, किन्तु ३४८-तमानुच्छेदीयोपबन्धानामधीनं संसदः कार्यं हिन्दीभाषया आङ्ग्लभाषया वा निर्वर्तितं भवेत्—

परन्तु यः हिन्दीभाषया आङ्ग्लभाषया वा स्वाभिप्रायाभिव्यक्तिं पर्याप्ततया कर्तुं न शक्नोति तस्मै सदस्याय यथायथं राज्यपरिषदः सभापतिः लोकसभाया अध्यक्षो वा एतादृशरूपेण कार्यकारी जनो वा स्वस्य मातृभाषया तत्सदनस्य संबोधने अनुज्ञां दातुं क्षमते।

(२) यदि संसद् विधिना अन्यथा नोपबन्धयति तर्हि, अस्य संविधानस्य प्रारम्भात् पञ्चदशानां वर्षाणां कालावधेः समाप्तेः परम् अयमनुच्छेदः इदक् कार्यक्षमो भवेत् यत् एतस्मिन् "आङ्ग्लभाषायां वा" इत्येते शब्दा लुप्ता इव स्युः।

१२१. उच्चतमन्यायालयस्य उच्चन्यायालयस्य वा न्यायाधीशेन स्वकर्तव्यपालने कृतमाचरणमुद्दिश्य काऽपि चर्चा, इतः परं उपबन्धितरीत्या तस्य न्यायाधीशस्यापसारणं प्रार्थयतः समावेदनस्य राष्ट्रपतये दानार्थं प्रस्तावमन्तरेण, संसदि न भवेत्। संसदि चर्चायां निर्बन्धनम्।

१२२. (१) प्रक्रियायाः कस्या अपि अभिकथितायाः अनियमिततायाः आधारेण संसदः कासामपि कार्यप्रवृत्तीनां मान्यतायां काप्यापत्तिः न कर्तव्या। न्यायालयाः संसदः कार्यप्रवृत्तीनां परिप्रश्नं न कुर्युः।

(२) अनेन संविधानेन एतदधीनं वा संसदि प्रक्रियायाः कार्यसंचालनस्य वा विनियमनं कर्तुं व्यवस्थां रक्षयितुं वा शक्तयो यस्मिन् निहिताः सः संसदः कोऽपि पदाधिकारी सदस्यो वा तासां शक्तीनां स्वकृतस्य प्रयोगस्य संबन्धे कस्यापि न्यायालयस्य क्षेत्राधिकारस्याधीनो न भवेत्।

### अध्यायः ३.–राष्ट्रपतेर्विधायिन्यः शक्तयः

१२३. (१) संसदः उभे सदने यस्मिन् काले सत्रे स्तः तस्मादन्यस्मिन् कस्मिन्नपि काले, यदि राष्ट्रपतिः समाहितोऽस्ति यत् आशुकार्यं अवश्यं प्रवर्तयन्त्यः परिस्थितयो विद्यन्ते तर्हि, असौ एतादृशानध्यादेशान् प्रख्यापयितुं क्षमते यादृशानपेक्षयन्त्यः परिस्थितयस्तेन प्रतीयन्ते। संसदो विश्रान्तिकाले राष्ट्रपतेरध्यादेशप्रख्यापनशक्तिः।

(२) एतदनुच्छेदाधीनं प्रख्यापितेऽध्यादेशे एतादृशमेव बलं कार्यक्षमता च विद्यते यादृशं संसदोऽधिनियमेऽस्ति; किन्तु एतादृशः प्रत्येकमध्यादेशः —

(क) संसदः उभयोः सदनयोः समक्षं निहितो भवेत्; किंच संसदः पुनर्मेलनात् षण्णां सप्ताहानां समाप्तौ,

यदि तत्कालावधेः समाप्तेः प्राक् उभाभ्यां सदनाभ्यां तस्य निरनुमोदनस्य संकल्पौ पारितौ स्तः तर्हि, तत्संकल्पयोर्द्वितीयस्य पारणोत्तरम्, प्रवर्तनाद् विरमेत्;

(ख) राष्ट्रपतिना कस्मिन्नपि काले प्रत्याहृतो भवितुमर्हति ।

व्याख्याः——यदा संसदः सदने पुनर्मेलनार्थं भिन्नयोर्दिनाङ्कयोः आहूते भवतः तदा एतत्खण्डस्य प्रयोजनानामर्थे षण्णां सप्ताहानां कालावधिः तयोर्दिनाङ्कयोरुत्तरदिनाङ्कात् परिगणितो भवेत् ।

(३) यदि यावन्मात्रं च एतदनुच्छेदाधीनमध्यादेशः कमपि तमुपबन्धं करोति यं संसद् अस्य संविधानस्याधीनमधिनियमयितुं क्षमो न भवेत् तर्हि स शून्यो भवेत् ।

## अध्यायः ४.--संघस्य न्यायपालिका

उच्चतमन्यायालयस्य स्थापना संघटनं च ।

१२४. (१) भारतस्य मुख्यन्यायाधिपतिना, यावत् संसद् विधिना अधिकतरां संख्यां न निर्धारयति तावत् अन्यैः सप्तभिर्न्यायाधीशैश्च भारतस्य उच्चतमन्यायालयो भवेत् ।

(२) राष्ट्रपतिः एतदर्थं यादृशान् आवश्यकान् मन्येत एतादृशैः उच्चतमन्यायालयस्य राज्योच्चन्यायालयानां च न्यायाधीशैः परामृश्य स्वहस्तेन स्वमुद्रया चाङ्कितेनाधिपत्रेण उच्चतमन्यायालयस्य प्रत्येकं न्यायाधीशं नियुक्तं कुर्यात्; स च न्यायाधीशो यावत् वर्षाणां पञ्चषष्टिर्वयः प्राप्नोति तावत् पदं धारयेत्——

परन्तु मुख्यन्यायाधिपतेरन्यस्य न्यायाधीशस्य नियुक्तेर्विषये भारतस्य मुख्यन्यायाधिपतिः सर्वदा परामृष्टो भवेत् ।

परन्तु अन्यदपि——

(क) कोऽपि न्यायाधीशः राष्ट्रपतिं संबोध्य लिखितेन स्वहस्ताङ्कितेन लेखेन स्वपदं त्यक्तुं क्षमते;

(ख) (४)–खण्डे उपबन्धितरीत्या कोऽपि न्यायाधीशः अपसारितो भवितुमर्हति ।

(३) कोऽपि जनः उच्चतमन्यायालयस्य न्यायाधीशरूपेण नियुक्तेरर्हो न तर्हि भवेत् यद्यसौ भारतस्य नागरिको न भवति; किंच—

(क) उच्चतमन्यायालयस्य अथवा एतादृशयोर्द्वयोरधिकानां वा न्यायालयानाम् अन्ततः पञ्च वर्षाणि निरन्तरक्रमेण न्यायाधीशो न संवृत्तोऽस्ति; अथवा

(ख) उच्चन्यायालयस्य अथवा अनुक्रमेण एतादृशयोर्द्वयोरधिकानां वा न्यायालयानाम् अन्ततो दश वर्षाणि अधिवक्ता न संवृत्तोऽस्ति; अथवा

(ग) राष्ट्रपतेर्मतौ विख्यातो विधिवेत्ता नास्ति ।

व्याख्या १.– अस्मिन् खण्डे "उच्चन्यायालयः" अभिदधाति तमुच्चन्यायालयं यः भारतराज्यक्षेत्रस्य कस्मिन्नपि भागे क्षेत्राधिकारं प्रयुङ्क्ते, अस्य संविधानस्य प्रारम्भात् प्राक् कदाचिदपि प्रयुक्तवान् वा ।

व्याख्या २.—कोऽपि जनो यस्मिन् कालावधौ अधिवक्ता संवृत्तोऽस्ति, तस्य कालावधेः एतत्खण्डस्य प्रयोजनाय संगणनायां स कोऽपि कालावधिरन्तर्भावितो भवेत् यस्मिन् स जनः–अधिवक्ता संवृत्तः ततः परं–मण्डलन्यायाधशिस्य पदादन्यूनतरं न्यायपालकपदं धृतवान् ।

(४) उच्चतमन्यायालयस्य कोऽपि न्यायाधीशः स्वपदात् नापसारितो भवेत्; समस्तानां सदनसदस्यानां संख्याया मध्ये बहुमतेन तथा उपस्थितानां मतं ददतां च सदनसदस्यानां न्यूनान्न्यूनं तृतीयांशद्वयसंख्यकेन बहुमतेन समर्थितस्य संसत्प्रत्येकसदनेन कृतस्य समावेदनस्योत्तरम्–सिद्धस्य दुराचारस्य असमर्थत्वस्य वा आधारेण एतादृशापसारणाय मतदानं च राष्ट्रपतेः समक्षं तस्मिन्नेव सत्रे आस्थापितमस्ति– राष्ट्रपतेर्निसृष्टादादेशादन्यत्र ।

(५) (४)—खण्डाधीनं समावेदनं प्रदातुं तथा न्यायाधीशस्य दुराचारम् असमर्थतां वा अनुसंधातुं साधयितुं चापेक्षितां प्रक्रियां संसद् विधिना विनियमयेत्।

(६) उच्चतमन्यायालयस्य न्यायाधीशरूपेण नियुक्तः प्रत्येकं जनः स्वपदे आरोहणात् प्राक् राष्ट्रपतेः तेन तदर्थं नियुक्तस्य जनस्य वा समक्षं तृतीयानुसूच्यां तत्प्रयोजनाय निष्पादितस्य प्रपत्रस्यानुसारेण शपथं प्रतिज्ञानं वा कुर्यात्, हस्ताङ्कितं च कुर्यात्।

(७) यः उच्चतमन्यायालयस्य पदं धारयति स कोऽपि जनो भारतराज्यक्षेत्रस्याभ्यन्तरे कस्मिन्नपि न्यायालये अथवा कस्यापि प्राधिकारिणः समक्षं विधिव्यवसायित्वं कार्यं वा न कुर्यात्।

न्यायाधीशानां वेतनानि इत्यादि।

१२५. (१) उच्चतमन्यायालयस्य न्यायाधीशेभ्यः एतादृशानि वेतनानि दत्तानि भवेयुः यादृशानि द्वितीयानुसूच्यामुल्लिखितानि सन्ति।

(२) प्रत्येकं न्यायाधीशः विशेषाधिकारेषु भक्तेषु च एतादृशेषु तथा अनुपस्थित्यनुमतिसंबन्धिषु निवृत्तिवेतनसंबन्धिषु च एतादृशेष्वधिकारेषु स्वत्ववान् भवेत् यादृशानि संसत्प्रणीतेन विधिना तदधीनं वा कालेकाले निर्धारितानि भवेयुः; किन्तु यावन्नैवं निर्धारितानि तावत् विशेषाधिकारेषु भक्तेषु अधिकारेषु च एतादृशेषु यादृशानि द्वितीयानुसूच्यामुल्लिखितानि सन्ति—

परन्तु स्वस्य नियुक्तेरुत्तरं कस्यापि न्यायाधीशस्य न विशेषाधिकारेषु न वा भक्तेषु अथवा न अनुपस्थित्यनुमतिसंबन्धिषु निवृत्तिवेतनसंबन्धिषु वा तदधिकारेषु तस्मै लाभापकर्षकारि परिवर्तनं भवेत्।

कार्यकारिणो मुख्यन्यायाधिपतेर्नियुक्तिः।

१२६. यदा भारतस्य मुख्यन्यायाधिपतेः पदं रिक्तं भवति अथवा मुख्यन्यायाधिपतिः अनुपस्थित्या अन्येन वा कारणेन स्वपदकर्तव्यानां पालने असमर्थोऽस्ति तदा तन्न्यायालयस्यान्येषां न्यायाधीशानामन्यतमेन केनापि तत्पदस्य कर्तव्यानि पालितानि भवेयुः यं तत्प्रयोजनाय राष्ट्रपतिर्नियोजयेत्।

भागः ५.—संघः—अनुच्छेदाः १२७-१२९

१२७. (१) यदि कस्मिन्नपि काले उच्चतमन्यायालयस्य सत्रं संपादयितुम् अनुवर्तयितुं वा तन्न्यायालयस्य न्यायाधीशानां गणपूर्तिर्न भवेत् तर्हि भारतस्य मुख्यन्यायाधिपतिः राष्ट्रपतेः पूर्वसंमत्या तथा संबद्धोच्चन्यायालयस्य मुख्यन्यायाधिपतिना परामृश्य भारतस्योच्चतमन्यायालयस्य न्यायाधीश इति नियुक्तेरर्हं भारतस्य मुख्यन्यायाधिपतिना नामोद्देशनीयं कमपि उच्चन्यायालयस्य न्यायाधीशम् उच्चतमन्यायालयस्योपवेशनेषु, यावान् कालावधिरावश्यकः तावति कालावधौ, तदर्थन्यायाधीशरूपेण उपस्थित्यर्थं लेखेन प्रार्थयितुं क्षमते । तदर्थन्यायाधीशानां नियुक्तिः।

(२) एवं नामोद्दिष्टस्य न्यायाधीशस्य, उच्चतमन्यायालयस्योपवेशनेषु यस्मिन्नस्योपस्थितिरपेक्षिताऽस्ति तत्कालावधौ तस्मिन् काले च, स्वपदस्यान्यकर्तव्येभ्यः पूर्ववर्तितया उपस्थितिः कर्तव्यं भवेत्; किंच, यदा स एवमुपतिष्ठन् भवेत् तदा स उच्चतमन्यायालयीयन्यायाधीशस्य सर्वान् क्षेत्राधिकारान् शक्तीः विशेषाधिकारांश्च भजेत कर्तव्यानि च निर्वहेत् ।

१२८. एतदध्यायगतं सर्वमविगणय्य, भारतस्य मुख्यन्यायाधिपतिः कस्मिन्नपि काले राष्ट्राध्यक्षस्य पूर्वसंमत्या उच्चतमन्यायालये न्यायाधीशरूपेण उपवेशनं कृत्यकरणं च तं कमपि जनं प्रार्थयेत् य उच्चतमन्यायालयस्य 'फेडरल'न्यायालयस्य वा पदं धारितवान्; किंच एवं प्रार्थितः प्रत्येकम् एतादृशो जनः एवमुपविशन् कार्यं कुर्वंश्च यदा भवेत् तदा एतादृशेषु भक्तेषु स्वत्ववान् भवेत् यादृशानि राष्ट्रपतिः आदेशेन निर्धारयेत्, तथा तन्न्यायालयीयन्यायाधीशस्य सर्वान् क्षेत्राधिकारान् शक्तीः विशेषाधिकारांश्च भजेत, किन्तु अन्यथा तन्न्यायालयस्य न्यायाधीश इति न मतो भवेत्— उच्चतमन्यायालयानामुपवेशनेषु सेवानिवृत्तन्यायाधीशानामुपस्थितिः ।

परन्तु यावत् पूर्वोक्तः कोऽपि एतादृशो जनः कर्तुम् एवं न संमनुते तावत्, स तन्न्यायालयस्य न्यायाधीशरूपेणोपविशेत् कार्यं कुर्यात् च इति एतदनुच्छेदगतं किमप्यपेक्षते इति न मन्येत ।

१२९. उच्चतमन्यायालयः अभिलेखन्यायालयो भवेत्, तथा स्वावमाने दण्डनशक्तिमन्तर्भावयन्तीः एतादृशन्यायालयस्य सर्वाः शक्तीश्च भजेत। उच्चतमन्यायालयोऽभिलेखन्यायालयः ।

## भागः ५.--संघः—अनुच्छेदौ १३०-१३१

उच्चतमन्यायालयस्य स्थानम्।

१३०. उच्चतमन्यायालयो देहल्याम् एतादृशे वा स्थाने स्थानेषु वोपविशेत् यादृशानि राष्ट्रपतेरनुमोदनेन भारतस्य मुख्यन्यायाधिपतिः कालेकाले नियुञ्जीत।

उच्चतमन्यायालयस्य प्रारम्भिकः क्षेत्राधिकारः।

१३१. अस्य संविधानस्योपबन्धानामधीनम्—

(क) भारतशासनस्य तथा एकस्य राज्यस्य अधिकानां राज्यानां वा मध्ये; अथवा

(ख) एकस्मिन् पक्षे भारतशासनस्य कस्यापि राज्यस्य अधिकानां वा राज्यानां तथा अन्यस्मिन् पक्षे एकस्य राज्यस्य अधिकानां वा राज्यानां मध्ये; अथवा

(ग) द्वयोः अधिकानां वा राज्यानां मध्ये;

कस्मिन्नपि विवादे उच्चतमन्यायालयः, अन्यं कमपि न्यायालयं वर्जयित्वा, प्रारम्भिकं क्षेत्राधिकारं भजेत, यदि यावच्च स विवादः तं कमपि ( विधेर्वा तथ्यस्य वा ) प्रश्नमन्तर्गृह्णाति यस्मिन् कस्यापि वैधस्याधिकारस्य सत्ता विस्तरो वा संश्रयते—

परन्तु उक्तः क्षेत्राधिकारः तस्मिन् विवादे न विस्तारं प्राप्नुयात् यस्मिन्—

(१) प्रथमानुसूच्याः (ख)–भाग उल्लिखितं राज्यं विवादि भवति यदि स विवादः तस्य संधेः समयस्य प्रसंविदो वचनबन्धस्य * सनदस्य अन्यस्य वा तत्समस्य लिखितस्य कस्मादप्युपबन्धात् उत्पद्यते यः [ संधिः इ० ] अस्य संविधानस्य प्रारम्भात् पूर्वं कृतः निष्पादितश्चासीत् एतादृशप्रारम्भात्

* अधिपटस्य

भागः ५.—संघः-- अनुच्छेदौ १३१-१३२

परं च प्रवृत्ततया अनुवृत्तोऽस्ति अनुवृत्तः कृतो वाऽस्ति ।

(२) किमपि राज्यं पक्षो भवति यदि स विवादः तस्य संधेः समयस्य प्रसंविदो वचनबन्धस्य सनदस्य अन्यस्य वा तत्समस्य लिखितस्य कस्मादप्युपबन्धात् उत्पद्यते यः [ संधिः इ० ] उपबन्धयति यत्— उक्तः क्षेत्राधिकारः एतादृशे विवादे न विस्तारमाप्नुयादिति ।

केषुचिदभियोगेषूच्चन्यायालयेभ्यः प्राप्तासु पुनर्विचारप्रार्थनासूच्चतमन्यायालयस्य पुनर्विचारप्रार्थनासंबन्धी क्षेत्राधिकारः ।

१३२. (१) भारतराज्यक्षेत्रे कस्याप्युच्चन्यायालयस्य व्यावहारिक्याम् आपराधिक्याम् अन्यस्यां वा कार्यप्रवृत्तौ कस्यापि निर्णयस्य आज्ञप्तेः अन्तिमादेशस्य वा निमित्तेन पुनर्विचारप्रार्थना उच्चतमन्यायालये भवेत् यदि स उच्चन्यायालयः प्रमाणयति यत् स वादोऽस्य संविधानस्य निर्वचने कमपि सारवन्तं प्रश्नमन्तर्गृह्णाति ।

(२) यत्रोच्चन्यायालयेन एतादृशं प्रमाणपत्रं दातुं प्रत्याख्यातमस्ति तत्रोच्चतमन्यायालयः यदि समाहितो भवति यत् स वादः सारवन्तं विधिप्रश्नमन्तर्गृह्णाति तर्हि एतादृशस्य निर्णयस्य आज्ञप्तेः अन्तिमादेशस्य वा निमित्तेन पुनर्विचारप्रार्थनायां विशेषानुमतिमनुदद्यात् ।

(३) यत्रैतादृशं प्रमाणपत्रं दत्तम्, एतादृश्यनुमतिरनुदत्ता वा तत्र तद्वादस्थः कोऽपि पक्षः उच्चतमन्यायालयम्, कोऽप्येतादृशः पूर्वोक्तसदृशः प्रश्नः असम्यक्तया निर्णीत इत्याधारेण, उच्चतमन्यायालयस्यानुमत्या एतादृशेनान्येनाधारेण च पुनर्विचारं प्रार्थयेत् ।

व्याख्या.—"अन्तिम आदेशः" इति शब्दसमूहः तस्य वादपदस्य विनिश्चायकमादेशमेतदनुच्छेदस्य प्रयोजनानामर्थे अन्तर्भावयति यद् वादपदं यदि पुनर्विचारं प्रार्थयितुरनुग्राहकत्वेन विनिश्चितं भवेत् तर्हि तस्य वादस्य अन्तिमव्यवस्थादानाय पर्याप्तं भवेत् ।

व्यावहारिकेषु विषयेषूच्चन्यायालयेभ्यः प्राप्तासु पुनर्विचारप्रार्थनासूच्चतमन्यायालयस्य पुनर्विचारप्रार्थनासंबन्धी क्षेत्राधिकारः ।

१३३. (१) भारतराज्यक्षेत्रे कस्याप्युच्चन्यायालयस्य व्यावहारिक्यां कार्यप्रवृत्तौ कस्यापि निर्णयस्य आज्ञप्तेः अन्तिमादेशस्य वा निमित्तेन पुनर्विचारप्रार्थना उच्चतमन्यायालये भवेत् यदि स उच्चन्यायालयः प्रमाणयति—

(क) यत् प्रथमश्रेणिकन्यायालये विवादे विषयीभूतस्य पुनर्विचारप्रार्थनोत्तरं च एतत्कालेऽपि विवादे स्थितस्यार्थस्य राशिर्मूल्यं विंशतिसहस्राद् रूप्यकेभ्यः एतादृशादन्यस्माद् राशेर्वा — यादृशं संसद् एतत्संबन्धे विधिनोल्लिखितं कुर्यात्— न्यूनं नासीत् नास्ति च; अथवा

(ख) यत् निर्णयः आज्ञप्तिः अन्तिम आदेशो वा सदृशस्य राशेर्मूल्यस्य वा संपत्त्या संबन्ध्यमानामभ्यर्थनां प्रश्नं वा साक्षात् परंपरया वा अन्तर्गृह्णाति; अथवा

(ग) यत् स अभियोगः उच्चतमन्यायालये पुनर्विचारप्रार्थनायै उचितो भवति;

किंच यत्र पुनर्विचारप्रार्थितो निर्णयः आज्ञप्तिः अन्तिम आदेशो वा अव्यवहिताधोन्यायालयस्य विनिश्चयं (ग)—उपखण्डे निर्दिष्टाभियोगभिन्ने कस्मिन्नपि अभियोगे उपोद्बलयति तत्र यदि स उच्चन्यायालयोऽग्रे प्रमाणयति यत्, पुनर्विचारप्रार्थना अन्तर्गृह्णाति कमपि सारवन्तं विधिप्रश्नमिति ।

(२) १३२—तमानुच्छेदगतं सर्वमविगणय्य, (१)—उपखण्डाधीनं पुनर्विचारं प्रार्थयमानः कोऽपि विवादी उच्चतमन्यायालयं ज्ञपयेत् एतादृशपुनर्विचारप्रार्थनाया आधाराणामन्यतममेकं यत् अस्य संविधानस्य निर्वचनसंबन्धे सारवान् विधिप्रश्नोऽसम्यक्तया विनिश्चितोऽस्तीति ।

(३) एतदनुच्छेदस्थं सर्वमविगणय्य, उच्चन्यायालयस्य एकेन न्यायाधीशेन कृतस्य निर्णयस्य आज्ञप्तेः अन्तिमादेशस्य वा निमित्तेन काऽपि पुनर्विचारप्रार्थना उच्चतमन्यायालयं न संश्रयेत् यावत् संसद् विधिना अन्यथा नोपबन्धयति ।

१३४. (१) भारतराज्यक्षेत्रे उच्चन्यायालयस्य आपराधिक्यां कार्यप्रवृत्तौ निर्णयस्य अन्तिमादेशस्य दण्डादेशस्य वा निमित्तेन उच्चतमन्यायालये पुनर्विचारप्रार्थना भवेत् यदि— आपराधिकेषु विषयेषूच्चन्यायालयेभ्यः प्राप्तासु पुनर्विचारप्रार्थनासूच्चतमन्यायालयस्य पुनर्विचारप्रार्थनासंबन्धी क्षेत्राधिकारः ।

(क) तेनोच्चन्यायालयेन पुनर्विचारप्रार्थनायां कस्याप्यभियुक्तस्य जनस्य विमुक्तेरादेशः परावर्तितोऽस्ति, किंच तस्मै जनाय मृत्युदण्डादेशो दत्तः; अथवा

(ख) तेनोच्चन्यायालयेन स्वस्य प्राधिकाराधीनात्कस्मादपि न्यायालयात् स्वपुरतः परीक्षणाय कोऽप्यभियोगः प्रत्याहृतः, किंच एतादृशे परीक्षणे सोऽभियुक्तो जनः सिद्धदोषः कृतः, तस्मै मृत्युदण्डादेशो दत्तश्च; अथवा

(ग) स उच्चन्यायालयः प्रमाणयति यत् सोऽभियोग उच्चतमन्यायालये पुनर्विचारप्रार्थनायै उचितोऽस्तीति—

परन्तु (क)—उपखण्डाधीनं पुनर्विचारप्रार्थना एतादृशोपबन्धानामधीना तिष्ठेत् यादृशाः १४५-तमानुच्छेदस्य (१)—खण्डस्याधीनं कृताः स्युः, तथा एतादृशप्रतिबन्धानामधीना [ तिष्ठेत् ], यादृशानुच्चन्यायालयः स्थापयेत् अपेक्षेत वा ।

(२) संसद् उच्चतमन्यायालयाय भारतराज्यक्षेत्रस्थस्योच्चन्यायालयस्य आपराधिक्यां कार्यप्रवृत्तौ कस्यापि निर्णयस्यान्तिमादेशस्य दण्डादेशस्य वा निमित्तेन प्राप्तानां पुनर्विचारप्रार्थनानां ग्रहणे श्रवणे च का अपि अधिकाः शक्तीर्विधिना प्रदातुं क्षमते ।

## भागः ५.--संघः--अनुच्छेदाः १३५-१३८

वर्तमानविध्यधीनं 'फेडरल'-न्यायालयस्य क्षेत्राधिकारः शक्तयश्च उच्चतमन्यायालयेन प्रयोक्तव्याः।

१३५. यावत् संसद् विधिना नान्यथोपबन्धयति तावत्, उच्चतमन्यायालयोऽपि तस्य कस्यापि विषयस्य संबन्धेन क्षेत्राधिकारं शक्तीश्च भजेत, यं १३३-तमानुच्छेदगताः १३४-तमानुच्छेदगताः वोपबन्धा न विषयीकुर्वन्ति, यदि तद्विषयसंबन्धे क्षेत्राधिकारः शक्तयश्च कस्यापि वर्तमानस्य विधेरधीनमस्य संविधानस्य प्राक् 'फेडरल'न्यायालयेन प्रयोक्तव्या आसन्।

पुनर्विचारप्रार्थनायै उच्चतमन्यायालयस्य विशेषानुमतिः।

१३६. (१) एतद्विभागगतं सर्वमविगणय्य, उच्चतमन्यायालयो भारतराज्यक्षेत्रे केनापि न्यायालयेन न्यायाधिकरणेन वा कस्मिन्नपि वादे विषये वा पारितस्य प्रणीतस्य वा निर्णयस्याज्ञप्तेर्निर्धारणस्य दण्डादेशस्यादेशस्य वा निमित्तेन प्राप्तायाः पुनर्विचारप्रार्थनाया विशेषानुमतिं स्वविवेकेनानुदातुं क्षमते।

(२) (१)-खण्डगतं किमपि सशस्त्रबलैः संबध्यमानेन केनापि विधिना तदधीनं वा घटितेन केनापि न्यायालयेन न्यायाधिकरणेन वा पारितं प्रणीतं वा निर्णयं निर्धारणं दण्डादेशमादेशं वा न विषयीकुर्यात्।

उच्चतमन्यायालयकृतं निर्णयानामादेशानां वा पुनर्विलोकनम्।

१३७. उच्चतमन्यायालयः संसदा प्रणीतस्य कस्यापि विधेरधीनं १४५-तमानुच्छेदमनुसृत्य प्रणीतानां नियमानामधीनं वा कस्यापि उदीरितस्य निर्णयस्य स्वप्रणीतस्यादेशस्य वा पुनर्विलोकने शक्तिं भजेत।

उच्चतमन्यायालयस्य क्षेत्राधिकारवृद्धिः।

१३८. (१) उच्चतमन्यायालयः संघसूचीस्थविषयाणामन्यतमस्य कस्यापि विषयस्य संबन्धेनैतादृशमधिकं क्षेत्राधिकारं शक्तीश्च भजेत यादृशं संसद् विधिना प्रदद्यात्।

(२) यदि संसद् उच्चतमन्यायालयेनैतादृशस्य क्षेत्राधिकारस्य शक्तीनां च प्रयोगाय विधिनोपबन्धयेत् तर्हि उच्चतमन्यायालयः कस्यापि विषयस्य संबन्धेनैतादृशमधिकं क्षेत्राधिकारं शक्तीश्च भजेत यादृशं भारतशासनेन कस्यापि राज्यस्य शासनेन च विशेषसमयेन प्रदीयेत।

भागः ५.--संघः—अनुच्छेदाः १३९-१४२

१३९. ३२-तमानुच्छेदस्य (२)--खण्डे वर्णितातिरिक्तानां केषामपि प्रयोजनानां कृते निदेशानामादेशानां बन्दीप्रत्यक्षीकरणपरमादेशप्रतिषेधाधिकारपृच्छोत्प्रेषणरूपान् लेखान् अन्तर्भावयतां लेखानां वा तदन्यतमस्य कस्यापि वा प्रचालने शक्तिं संसद् विधिना उच्चतमन्यायालयाय प्रदद्यात् ।

केषांचिल्लेखानां प्रचालने उच्चतमन्यायालयाय शक्तीनां प्रदानम् ।

१४०. उच्चतमन्यायालयोऽनेन संविधानेन तदधीनं वा स्वस्मै प्रदत्तक्षेत्राधिकारस्य अधिककार्यसाधकतया प्रयोगं योग्यतासहितं करोत्विति यादृश्यः शक्तय आवश्यिका वाञ्छनीयाश्च प्रतीयेरन्, एतादृशीनाम् एतत्संविधानीयोपबन्धान्यतमेन केनापि नासंगतानामनुपूरिकाणां शक्तीनां प्रदानाय संसदुपबन्धयेत् ।

उच्चतमन्यायालयस्य सहायकशक्तयः ।

१४१. उच्चतमन्यायालयेन घोषितो विधिः भारतराज्यक्षेत्राभ्यन्तरे सर्वन्यायालयानां बन्धनकारी भवेत् ।

उच्चतमन्यायालयेन घोषितो विधिः सर्वन्यायालयानां बन्धनकारी ।

१४२. (१) उच्चतमन्यायालयः स्वक्षेत्राधिकारप्रयोगे एतादृशीमाज्ञप्तिं पारयितुम् एतादृशमादेशं वा प्रणेतुं क्षमते यादृशः स्वस्य समक्षं लम्बिते कस्मिन्नपि वादे विषये वा पूर्णं न्यायं कर्तुमावश्यकोऽस्ति; किंच एवं पारिताऽऽज्ञप्तिः एवं प्रणीत आदेशो वा भारतस्य राज्यक्षेत्रे सर्वत्र एतादृश्या रीत्या प्रवर्तनीयो भवेत्, यादृशी संसत्प्रणीतेन केनापि विधिना तदधीनं वा विहिता स्यात्; किंच यावत् तदर्थमुपबन्धो न एवं प्रणीतोऽस्ति तावदेतादृश्या रीत्या, यादृशीं राष्ट्रपतिरादेशेन विदधीत ।

उच्चतमन्यायालयीयानामाज्ञप्तीनामादेशानां च प्रवर्तनं प्रकटनादीनामादेशाश्च ।

(२) कस्यापि जनस्योपस्थितेः संपादनं केषामपि लेख्यानां प्रकटनं पुरोनिधानं वा कस्यापि स्वावमानस्य वाऽनुसंधानं दण्डं वा निराबाधं कर्तुम् एतदर्थं संसत्प्रणीतस्य कस्यापि विधेरुपबन्धानामधीनतया उच्चतमन्यायालयः सर्वस्य भारतराज्यक्षेत्रस्य संबन्धेषु कस्याप्यादेशस्य सर्वां प्रत्येकं च शक्तिं भजेत ।

भागः ५.--संघः--अनुच्छेदाः १४३-१४५

उच्चतमन्यायालयेन परामर्शनस्य राष्ट्रपतौ शक्तिः ।

१४३. (१) यदि यस्मिन् कस्मिन्नपि काले राष्ट्रपतिः प्रत्येति यत् विधेस्तथ्यस्य वा प्रश्न उत्पन्नोऽस्ति, उत्पत्तुं संभवति वा, यः एतादृशस्वभावः एतादृशसार्वजनिकगौरवशाली चास्ति यत् उच्चन्यायालयस्य तद्विषयकमतिप्राप्तिः प्रसङ्गोचिताऽस्ति, तर्हि स तं प्रश्नं विचारार्थं तस्मै न्यायालयाय निवेदयेत्, स न्यायालयश्च एतादृशश्रवणात् परं राष्ट्रपतिं तस्मिन्— स यादृशीमुचितां मनुते तादृशीं—स्वमतिं प्रतिवेदयेत् ।

(२) १३१—तमानुच्छेदस्थे पारन्तुके (१)—खण्डगतं सर्वमविगणय्य, राष्ट्रपतिरुक्तखण्डे वर्णितप्रकारकं विवादमुच्चतमन्यायालयाय तन्मत्यर्थं निवेदयेत्; अथ चोच्चतमन्यायालयः—स यादृशम् उचितं मनुते एतादृशात् श्रवणात् परं तद्विषयिकीं स्वमतिं राष्ट्रपतिं प्रतिवेदयेत् ।

उच्चतमन्यायालयस्य साहाय्येऽसैनिकैः न्यायपालकैश्च प्राधिकारिभिः कार्यकरणम् ।

१४४. भारतराज्यक्षेत्रस्थाः सर्वेऽसैनिकाः न्यायसंबन्धिनश्च प्राधिकारिणः उच्चतमन्यायालयस्य साहाय्ये कार्यं कुर्युः ।

न्यायालयनियमा इत्यादि ।

१४५. (१) संसत्प्रणीतस्य कस्यापि विधेरुपबन्धानामधीनम् उच्चतमन्यायालयः कालेकाले राष्ट्रपतेरनुमोदनेन तन्न्यायालयस्य कार्यप्रणाल्याः प्रक्रियायाश्च सामान्यतो विनियमनाय नियमान् प्रणेतुं क्षमते ये—

(क) तन्न्यायालये न्यायवृत्तिं कुर्वाणानां जनानां संबन्धिनो नियमान्;

(ख) पुनर्विचारप्रार्थनानां श्रवणार्थप्रक्रियायाः संबन्धिनः, तन्न्यायालयीयपुनर्विचारप्रार्थनाः यत्कालाभ्यन्तरे प्रवेशनीयाः सन्ति तत्कालमन्तर्भावयतां पुनर्विचारप्रार्थनाभिः संबध्यमानानामन्यविषयाणां संबन्धिनश्च नियमान्;

(ग) तृतीयभागेन प्रदत्ताधिकाराणामन्यतमस्य कस्यापि प्रवर्तनार्थानां तन्न्यायालयस्य कार्यप्रवृत्तीनां संबन्धिनो नियमान्;

(घ) १३४-तमानुच्छेदीय-(१)-खण्डस्य (ग)-उपखण्डाधीनं पुनर्विचारप्रार्थनाग्रहणसंबन्धिनो नियमान्;

(ङ) तन्न्यायालयेन उदीरितो निर्णयः प्रणीतो वाऽऽदेशो येषामधीनं पुनर्विलोकितो भवेत् तेषां प्रतिबन्धानां संबन्धिनः, यत्कालाभ्यन्तरे एतादृशपुनर्विलोकनार्थं तन्न्यायालयमावेदनपत्राणि प्रवेशनीयानि सन्ति तत्कालमन्तर्भावयन्त्याः एतादृशपुनर्विलोकनप्रक्रियायाः संबन्धिनश्च नियमान्;

(च) तन्न्यायालये कास्वपि कार्यप्रवृत्तिषु जायमानानां तत्प्रासङ्गिकानां च परिव्ययाणां संबन्धिनः, तत्रत्यकार्यप्रवृत्तीनां संबन्धे मूल्यरूपेणाऽर्थितानां देयानां संबन्धिनश्च नियमान्;

(छ) प्रातिभाव्यानुदानस्य संबन्धिनो नियमान्;

(ज) कार्यप्रवृत्तीनां रोधस्य संबन्धिनो नियमान्;

(झ) स न्यायालयः कामपि यां पुनर्विचारप्रार्थनां तुच्छां वा उद्वेगकरीं वा विलम्बनमुद्दिश्य कृतां वा प्रत्येति तस्याः संक्षेपतो निर्धारणार्थमुपबन्धकरान् नियमान्;

(ञ) ३१७-तमानुच्छेदीय-(१)-खण्डे निर्दिष्टविमर्शार्थायाः प्रक्रियायाः संबन्धिनो नियमान्;

अन्तर्भावयन्ति ।

भागः ५.--संघः--अनुच्छेदः १४५

(२) अस्यानुच्छेदस्याधीनं प्रणीता नियमाः, यैः कस्मै अपि प्रयोजनायोपवेष्टव्यमस्ति तेषां न्यायाधीशानां न्यूनतमां संख्यां (३)–खण्डगतोपबन्धानामधीनं नियतां कर्तुं क्षमन्ते एकाकिन्यायाधीशानां खण्डन्यायालयानां च शक्त्यर्थमुपबन्धयितुं च क्षमन्ते ।

(३) अस्य संविधानस्य निर्वचनस्य संबन्धी कोऽपि सारवान् विधिप्रश्नो यस्मिन् वादे अन्तर्गृहीतोऽस्ति तस्य विनिश्चयार्थं १४३–तमानुच्छेदाधीनं कस्यापि निवेदनस्य श्रवणार्थं वा यैरुपवेष्टव्यमस्ति तेषां न्यायाधीशानां न्यूनतमा संख्या पञ्च भवेत्—

परन्तु यत्रास्याध्यायस्य १३२–तमानुच्छेदभिन्नानामुपबन्धानामधीनं पुनर्विचारप्रार्थनां शृण्वन् न्यायालयः पञ्चभ्यो न्यूनैर्न्यायाधीशैः भृतोऽस्ति, किंच पुनर्विचारप्रार्थनायाः श्रवणप्रसरे स न्यायालयः समाहितोऽस्ति यत् एषा पुनर्विचारप्रार्थना संविधाननिर्वचनस्यैतादृशं सारवन्तं विधिप्रश्नमन्तर्गृह्णाति यस्य निर्धारणं तस्याः पुनर्विचारप्रार्थनाया निर्वर्तनार्थम् आवश्यकमस्ति, तत्र एतादृशो न्यायालयः एतादृशं प्रश्नमन्तर्गृह्णतः कस्यापि वादस्य विनिश्चयार्थमनेन खण्डेनापेक्षितरूपेण घटितन्यायालयाय तस्य मत्यर्थं तं प्रश्नं प्रदद्यात्, किंच तन्मतिप्राप्तौ तस्याः पुनर्विचारप्रार्थनायाः एतादृशमतिमनुरुध्य व्यवस्थां दद्यात् ।

(४) उच्चतमन्यायालयः कमपि निर्णयं प्रकाशन्यायालयादन्यत्र न व्याहृतं कुर्यात् न च प्रकाशन्यायालयेऽपि व्याहृतमत्यनुसारेण प्रतिवेदनं १४३–तमानुच्छेदाधीनं कुर्यात् ।

(५) कोऽपि निर्णयः काऽप्येतादृशी मतिश्च तस्य वादस्य श्रवणे उपस्थितानां न्यायाधीशानां मध्ये बहुसंख्यकस्य सहमतिं विना उच्चतमन्यायालयेन न व्याहृतौ भवेताम्, एतत्खण्डगतं किमपि—यः सहमतो न भवति तं—न्यायाधीशं विमतस्य निर्णयस्य मतेर्वा व्याहरणात् न निवारयेत् ।

**भागः ५.—संघः— अनुच्छेदौ १४६–१४७**

१४६. (१) उच्चतमन्यायालयस्य पदाधिकारिणां सेवकानां च नियुक्तयो भारतस्य मुख्यन्यायाधिपतिना, स यादृशं निदेशयेत् एतादृशेन अन्येन न्यायाधीशेन पदाधिकारिणा वा कृता भवेयुः—

उच्चतमन्यायालयस्य पदाधिकारिणः, सेवकाः, व्ययाश्च।

परन्तु राष्ट्रपतिर्नियमद्वाराऽपेक्षेत यत् यादृश्योऽवस्थाः नियमे उल्लिखिताः स्युः तादृशीष्ववस्थासु कोऽपि न्यायालयेन पूर्वमेव असंलग्नो जनो न्यायालयेन संसक्ते कस्मिन्नपि पदे संघलोकसेवायोगेन सह परामर्शनमन्तरेण न नियुक्तो भवेत्।

(२) संसदा प्रणीतस्य कस्यापि विधेरनुबन्धानामधीनम् उच्चतमन्यायालयीयानां पदाधिकारिणां सेवकानां च सेवाप्रतिबन्धा एतादृशा भवेयुः यादृशास्तस्मै प्रयोजनाय नियमप्रणयनाय भारतमुख्यन्यायाधिपतिना अथवा केनाप्यन्येन न्यायाधीशेन भारतमुख्यन्यायाधिपतिप्राधिकृतेन न्यायालयीयेन पदाधिकारिणा वा प्रणीतैर्नियमैर्विहिताः स्युः—

परन्तु एतत्खण्डाधीनं प्रणीता नियमाः यावत्पर्यन्तं वेतनैर्भक्तैर्विरामानुमतिभिर्निवृत्तिवेतनैर्वा ते संबध्यन्ते तावत् राष्ट्रपतेरनुमोदनमपेक्षेरन्।

(३) उच्चतमन्यायालयस्य पदाधिकारिभ्यः सेवकेभ्यश्च तत्संबन्धे वा प्रदेयानि सर्वाणि वेतनानि भक्तानि निवृत्तिवेतनानि चान्तर्भावयन्त उच्चतमन्यायालयस्य प्रशासनव्यया भारतस्य संचितनिधेरुपरि भारिता भवेयुः तथा तन्न्यायालयेनाऽऽदत्तानि देयानि धनानि वा तस्य निधेर्भागो भवेत्।

१४७. अस्मिन्नध्याये ६–भागस्य ५–अध्याये चास्य संविधानस्य निर्वचनेन संबन्धिनः कस्यापि सारवतो विधिप्रश्नस्य ये निर्देशाः सन्ति तेषामेवमर्थः कृतो भवेत्—यत् ते १९३५–भारतशासनाधिनियमस्य (तमधिनियमं संशोधयन्त्यनुपूरयन्ति वा कान्यप्यधिनियमनानि अन्तर्भावयतः) तदधीनं प्रणीतस्य कस्यापि पारिषदादेशस्यादेशस्य वा, अथवा भारतीयस्वतन्त्रताधिनियमस्य तदधीनं प्रणीतस्य कस्याप्यादेशस्य वा, निर्वचनेन संबन्धिनः कस्यापि सारवतो विधिप्रश्नस्य निर्देशान् अन्तर्भावयन्ति।

निर्वचनम्।

## अध्यायः ५.— भारतस्य नियन्त्रकमहालेखापरीक्षकः

भारतस्य नियन्त्रकमहालेखापरीक्षकः ।

१४८. (१) भारतस्य नियन्त्रकमहालेखापरीक्षको भवेत् यो राष्ट्रपतिना स्वहस्ताङ्कितेन मुद्रासहिताधिपत्रेण नियुक्तो भवेत्, किंच स उच्चतमन्यायालयस्य न्यायाधीश इव सदृशरीत्या सदृशाधारैश्च पदादपसारितो भवेत् ।

(२) भारतस्य नियन्त्रकमहालेखापरीक्षकरूपेण नियुक्तः प्रत्येकं जनः स्वपदारोहणात् प्राक् राष्ट्रपतेस्तेन तदर्थं नियुक्तजनस्य वा समक्षं तृतीयानुसूच्याम् एतदर्थं निर्मितप्रपत्रमनुसृत्य शपथं प्रतिज्ञानं वा स्वहस्ताङ्कितं कुर्यात् ।

(३) नियन्त्रकमहालेखापरीक्षकस्य वेतनं सेवाया अन्ये च प्रतिबन्धा एतादृशा भवेयुः यादृशाः संसदा विधिना निर्धारिताः स्युः, किंच यावत् ते एवं न निर्धारिता भवन्ति तावत् द्वितीयानुसूच्यामुल्लिखितसदृशा भवेयुः—

परन्तु नियन्त्रकमहालेखापरीक्षकस्य न वेतनं न वाऽनुपस्थित्यनुमत्या निवृत्तिवेतनेन निवृत्तिवयसा वा संबन्धिनस्तस्याधिकारास्तस्य नियुक्तेः परं तस्मै लाभापकर्षकारित्वेन परिवर्तिता भवेयुः ।

(४) नियन्त्रकमहालेखापरीक्षकः स्वपदधारणान्निवृत्तेः परं भारतशासनस्याधीनाय कस्यापि राज्यशासनस्य वाऽधीनाय कस्मै अपि पदाय पात्रं भवेत् ।

(५) भारतीये लेखापरीक्षा-लेखाविभागे सेवां कुर्वाणानां जनानां सेवाप्रतिबन्धा नियन्त्रकमहालेखापरीक्षकस्य प्रशासनशक्तयश्च एतत्संविधानस्योपबन्धानां संसत्प्रणीतस्य कस्यापि विधेश्चाधीनम् एतादृशा भवेयुः यादृशा नियन्त्रकमहालेखापरीक्षकेण सह परामर्शनात् परं राष्ट्रपतिना प्रणीतैर्नियमैर्विहिताः स्युः ।

(६) नियन्त्रकमहालेखापरीक्षकस्य कार्यालयस्य प्रशासनव्ययाः तत्कार्यालये सेवां कुर्वाणेभ्यो जनेभ्यो तत्संबन्धे च प्रदेयानि सर्वाणि

भागः ५.---संघः--- अनुच्छेदाः १४८-१५१

वेतनानि भत्तानि निवृत्तिवेतनानि चान्तर्भावयन्तो भारतस्य संचितनिधौ भारिता भवेयुः ।

१४९. नियन्त्रकमहालेखापरीक्षकः संघस्य च राज्यानां च अन्यस्य कस्यापि च प्राधिकारिणो निकायस्य वा लेखानां संबन्धे एतादृशानि कर्तव्यान्याचरेत् एतादृशीः शक्तीश्च प्रयुञ्जीत यादृशानि संसत्प्रणीतेन केनापि विधिना तदधीनं वा विहितानि भवेयुः, यावत् च तदर्थमुपबन्ध एवं प्रणीतो न भवति तावत् संघस्य राज्यानां च संबन्धे एतादृशानि कर्तव्यान्याचरेत् एतादृशीः शक्तीश्च प्रयुञ्जीत यादृशानि अस्य संविधानस्य प्रारम्भादव्यवहितपूर्वम् अनुक्रमेण भारताधिनिवेशस्य प्रान्तानां च लेखानां संबन्धे भारतस्य महालेखापरीक्षकाय प्रदत्तान्यासन् तेन प्रयोक्तव्यानि वा आसन् । नियन्त्रकमहालेखापरीक्षकस्य कर्तव्यानि शक्तयश्च ।

१५०. एतादृशेन रूपेण संघस्य राज्यानां च लेखाः रक्षिता भवेयुः यादृशेन रूपेण भारतस्य नियन्त्रकमहालेखापरीक्षको राष्ट्रपतेरनुमोदनेन विदधीत । लेखानां संबन्धे निदेशानां प्रदाने नियन्त्रकमहालेखापरीक्षकस्य शक्तिः ।

१५१. (१) भारतस्य नियन्त्रकमहालेखापरीक्षकस्य प्रतिवेदनानि संघस्य लेखाभिः संबध्यमानानि राष्ट्रपतेः पुरतः स्थापितानि भवेयुः यः तानि संसदः प्रत्येकं सदनस्य समक्षं संनिधापयेत् । लेखापरीक्षाप्रतिवेदनानि ।

(२) भारतस्य नियन्त्रकमहालेखापरीक्षकस्य प्रतिवेदनानि राज्यस्य लेखाभिः संबध्यमानानि तद्राज्यसंबन्धिनः राज्यपालस्य राजप्रमुखस्य वा पुरतः स्थापितानि भवेयुः यः राज्यविधानमण्डलस्य समक्षं तानि संनिधापयेत् ।

# भागः ६

## प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

### अध्यायः १.—साधारणम्

परिभाषा ।

**१५२.** भागेऽस्मिन्, प्रसङ्गेनान्यथापेक्षितं चेन्न भवति, "राज्य" शब्दः प्रथमानुसूचस्थि–(क)–भाग उल्लिखितराज्यमभिदधाति ।

### अध्यायः २.—कार्यपालिका

## राज्यपालः

राज्यानां राज्यपालाः ।

**१५३.** प्रत्येकं राज्यस्य राज्यपालो भवेत् ।

राज्यस्य कार्यपालिका शक्तिः ।

**१५४.** (१) राज्यस्य कार्यपालिका शक्तिः राज्यपाले निहिता भवेत्, तेन च सा स्वयम् अधीनपदाधिकारिणां द्वारा वा अस्य संविधानस्यानुसारेण प्रयुक्ता भवेत् ।

(२) एतदनुच्छेदगतं किमपि—

(क) अन्यस्मै कस्मै अपि प्राधिकारिणे वर्तमानेन केनापि विधिना प्रदत्तानि कान्यपि कृत्यानि राज्यपाले हस्तान्तरितानि करोतीति न मतं भवेत्; अथवा

(ख) राज्यपालस्य कस्मै अपि अधीनप्राधिकारिणे कृत्यानां विधिना प्रदानात् संसदं राज्यस्य विधानमण्डलं वा न निवारयेत् ।

राज्यपालस्य नियुक्तिः ।

**१५५.** राज्यस्य राज्यपालो राष्ट्रपतिना स्वहस्ताङ्कितेन मुद्रासहिताधिपत्रेण नियुक्तो भवेत् ।

राज्यपालस्य पदावधिः ।

**१५६.** (१) राज्यपालो राष्ट्रपतेः प्रसादावधि पदं धारयेत् ।

(२) राज्यपालो राष्ट्रपतिं संबोध्य लिखितेन स्वहस्ताङ्कितेन लेखेन स्वपदं त्यक्तुं क्षमते ।

(३) अस्यानुच्छेदस्य पूर्वगाम्युपबन्धानामधीनं राज्यपालः स्वपदारोहणस्य दिनाङ्कात् पञ्चानां वर्षाणामवधिं यावत् पदं धारयेत्—

परन्तु स्वपदावधेः समाप्तिमविगणय्य, यावदस्योत्तराधिकारी स्वपदं नारोहति तावत् राज्यपालः पदधारणमनुवर्तयेत् ।

१५७. स कोऽपि जनः राज्यपालरूपेण नियुक्तेः पात्रं न भवेत्, यदि स भारतस्य नागरिको नास्ति न च तस्य वयसः पञ्चत्रिंशद्वर्षाणि पूर्णानि सन्ति । राज्यपालरूपेण नियुक्तयेऽर्हताः।

१५८. (१) राज्यपालः अन्यतरस्मिन् संसत्सदने प्रथमानुसूच्यामुल्लिखितस्य कस्यापि वा राज्यस्य विधानमण्डलसदने सदस्यो न भवेत्; किंच यदि अन्यतरस्य संसत्सदनस्य प्रथमानुसूच्यामुल्लिखितस्य कस्यापि वा राज्यस्य विधानमण्डलसदनस्य सदस्यः राज्यपालरूपेण नियुक्तो भवेत् तर्हि तस्मिन् सदने तस्मिन् दिनाङ्के रिक्तीकृतस्थानो मन्येत यस्मिन् असौ राज्यपालरूपेण स्वपदमारोहति । राज्यपाल-पदस्य प्रतिबन्धाः ।

(२) राज्यपालः किमप्यन्यत् लाभस्य पदं न धारयेत् ।

(३) राज्यपालः विना भाटकप्रदानं स्वपदावासानामुपयोगे स्वत्ववान् भवेत्, किंच एतादृशेषूपलब्धिषु भक्तेषु विशेषाधिकारेषु च स्वत्ववान् भवेत् यादृशानि संसदा विधिना निर्धारितानि भवेयुः; किंच यावत् तदर्थमुपबन्ध एवं कृतो न भवति तावत् एतादृशेषूपलब्धिषु भक्तेषु विशेषाधिकारेषु च, यादृशानि द्वितीयानुसूच्यामुल्लिखितानि सन्ति ।

(४) राज्यपालस्योपलब्धयो भक्तानि च तस्य स्वपदावधि नापकृष्टानि भवेयुः ।

१५९. प्रत्येकं राज्यपालः राज्यपालस्य कृत्यानि निर्वहन् प्रत्येकं जनो वा स्वपदारोहणात् प्राक् तद्राज्यस्य संबन्धे क्षेत्राधिकारस्य प्रयोक्तुरुच्चन्यायालयीयस्य मुख्यन्यायाधिपतेः तदनुपस्थितौ तन्न्यायालयीयस्य राज्यपालस्य शपथः प्रतिज्ञानं वा ।

## भागः ६.--संघः--अनुच्छेदाः १५९-१६२

प्राप्याग्रतमस्य न्यायाधीशस्य वा समक्षं शपथं प्रतिज्ञानं वा निम्नलिखित-रूपेण कुर्यात् स्वहस्ताङ्कितं च कुर्यात्, तद्यथा—

अहं....अमुकः निश्चयेन परमेश्वरस्य नाम्ना शपे / सत्यनिष्ठया प्रतिजाने यदहं श्रद्धया...

(राज्यस्य नाम)... राज्यपालस्य कार्यपालनं करिष्यामि (अथवा राज्य-पालस्य कृत्यानि निर्वक्ष्यामि) किंच स्वस्य पूर्णतमयोग्यतया संविधानं विधिं च परिरक्षिष्यामि संरक्षिष्यामि प्रतिरक्षिष्यामि च, किंच अहं... (राज्यस्य नाम)....जनतायाः सेवायां कल्याणे च निरतो भविष्यामि ।

आकस्मिकता-विशेषेषु राज्य-पालस्य कृत्यानां निर्वहणम्।

१६०. राष्ट्रपतिरेतादृशानुपबन्धान् प्रणेतुं क्षमते यादृशानस्मिन्नध्याये अकृतोपबन्धायां कस्यामप्याकस्मिकतायां राज्यस्य राज्यपालस्य कृत्यानां निर्वहणार्थं स उचितान् मनुते ।

क्षमादीनामनु-दाने, अभि-योगविशेषेषु च दण्डादेशस्य निलम्बने परि-हारे लघूकरणे वा राज्यपा-लस्य शक्तिः।

१६१. यद्विषये राज्यस्य कार्यपालिका शक्तिर्विस्तारमाप्नोति तेन विषयेण संबध्यमानस्य कस्यापि विधेर्विरुद्धेऽपराधे सिद्धदोषस्य कस्यापि जनस्य दण्डे क्षमाणां प्रविलम्बनानां विरामाणां परिहाराणां वाऽनुदाने, अथवा दण्डादेशस्य निलम्बने परिहारे लघूकरणे वा शक्तिं राज्यस्य राज्यपालो भजेत ।

राज्यस्य कार्य-पालिकायाः शक्तेर्विस्तारः ।

१६२. अस्य संविधानस्योपबन्धानामधीनम्, राज्यस्य कार्यपालिका शक्तिस्तेषु विषयेषु विस्तारमाप्नुयात् येषां संबन्धे तद्राज्यस्य विधानमण्डलं विधिप्रणयने शक्तिं भजते—

परन्तु राज्यस्य विधानमण्डलं संसच्च यस्मिन् विषये विधीन् प्रणेतुं शक्तिं भजेते तस्मिन् कस्मिन्नपि विषये राज्यस्य कार्यपालिका शक्तिः संसत्प्रणीतेन केनापि विधिना अनेन संविधानेन वा संघाय तत्प्राधि-कारिभ्यो वा स्पष्टतया प्रदत्तशक्तेरधीनं तादृशशक्त्या परिसीमितं च भवेत् ।

## भागः ६.--प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

### अनुच्छेदौ १६३-१६४

### मन्त्रिपरिषत्

१६३. (१) यावत्पर्यन्तं राज्यपालः एतत्संविधानेन तदधीनं वा स्वविवेकमधिष्ठाय स्वकृत्यानि तदन्यतमं किमपि वा निर्वोढुमपेक्षितोऽस्ति तावद्वर्जयित्वा राज्यपालाय स्वकृत्यानां निर्वहणे साहाय्यकरणार्थं मन्त्रणा-प्रदानार्थं च मूर्धन्येन मुख्यमन्त्रिणा सह मन्त्रिपरिषद् भवेत् । राज्यपालाय साहाय्यस्य मन्त्रणायाश्च प्रदानार्थं मन्त्रिपरिषत् ।

(२) यस्मिन् विषये राज्यपालः एतत्संविधानेन तदधीनं वा स्वविवेकमधिष्ठाय कार्यं कर्तुमपेक्षितोऽस्ति तद्रूपोऽयं कोऽपि विषयः तदन्यो वायं विषयः ? इति कोऽपि प्रश्नः यद्युत्पद्यते तदा तस्य राज्य-पालेन स्वविवेकमधिष्ठाय कृतो विनिश्चयोऽन्तिमो भवेत्; किंच राज्य-पालेन कृतस्य कस्यापि मान्यतायां—तेन स्वविवेकमधिष्ठाय कृतं कार्यम् अर्हमासीन्न वासीत्--इत्याधारेण नापत्तिः कृता भवेत् ।

(३) राज्यपालं प्रति कांचित् मन्त्रणां मन्त्रिणो दत्तवन्तः किम्, यदि दत्तवन्तः तर्हि काम्, इति प्रश्नः कस्मिन्नपि न्यायालये न परिप्रष्टव्यः ।

१६४. (१) मुख्यमन्त्री राज्यपालेन नियुक्तो भवेत्, अन्ये च मन्त्रिणः मुख्यमन्त्रिणा सह मन्त्रणोत्तरं राज्यपालेन नियुक्ता भवेयुः, मन्त्रिणश्च राज्यपालस्य प्रसादावधि पदं धारयेयुः— मन्त्रिणां संब-न्धिनोऽन्ये उपबन्धाः ।

परन्तु बिहारमध्यप्रदेशओरिस्साराज्येषु जनजातीनां कल्याणस्य भारसाधको मन्त्री भवेत्, आधिक्येन तदुपरि चासौ अनुसूचितजातीनाम-प्रगतवर्गाणां च कल्याणस्यान्यस्य कस्यापि वा कार्यस्य भारसाधको भवेत् ।

(२) मन्त्रिपरिषद् राज्यस्य विधानसभां प्रति सामूहिकरूपेणो-त्तरदायिनी भवेत् ।

(३) मन्त्रिणः स्वपदारोहणात् प्राक् राज्यपालः तेन तृतीयानु-सूच्यामेतदर्थमुपन्यस्तप्रपत्रमनुसृत्य पदस्य गोपनीयतायाश्च शपथं कारयेत् ।

## भागः ६.--प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

### अनुच्छेदाः १६४-१६६

(४) यो मन्त्री निरन्तराणां षण्णां मासानां कस्मिन्नपि कालावधौ राज्यविधानमण्डलस्य न सदस्योऽस्ति स तस्य कालावधेः समाप्तौ मन्त्रित्वाद् विरमेत् ।

(५) मन्त्रिणां वेतनानि भक्तानि चैतादृशानि भवेयुः यादृशानि राज्यविधानमण्डलं कालेकाले विधिना निर्धारयेत्, किंच यावत् राज्यविधानमण्डलं नैवं निर्धारयति तावत्, यथा द्वितीयानुसूच्यामुल्लिखितानि तथा तानि स्युः ।

### राज्यस्य महाधिवक्ता

राज्यस्य महाधिवक्ता ।

१६५. (१) प्रत्येकं राज्यस्य राज्यपालः उच्चन्यायालयस्य न्यायाधीशरूपेण नियुक्तेरर्हं जनं राज्यस्य महाधिवक्तृरूपेण नियोजयेत् ।

(२) महाधिवक्तुरेतत् कर्तव्यं भवेत् यत्, तद्राज्यशासनायैतादृशेषु विधिसंबन्धिविषयेषु मन्त्रणायाः प्रदानम् एतादृशानां च विधिरूपाणामन्येषां कर्तव्यानां पालनं च, यादृशानि राज्यपालेन कालेकाले तस्मै दत्तानि तस्मिन्नर्पितानि वा स्युः; अनेन संविधानेन तदधीनं वा तत्समयप्रवृत्तेन केनाप्यन्येन विधिना तदधीनं वा तस्मै दत्तानां कृत्यानां निर्वहणं च ।

(३) महाधिवक्ता राज्यपालस्य प्रसादावधि पदं धारयेत्, एतादृशं पारिश्रमिकं च प्राप्नुयात् यादृशं राज्यपालो निर्धारयेत् ।

### शासनकार्यस्य संचालनम्

राज्यशासनकार्यस्य संचालनम् ।

१६६. (१) राज्यस्य सर्वा कार्यपालिका कृतिः राज्यपालस्य नाम्ना कृतेति कथिता भवेत् ।

(२) राज्यपालस्य नाम्ना दत्तानां निष्पादितानां चादेशानामन्येषां लिखितानां च प्रमाणीकरणम् एतादृश्या रीत्या भवेत् यादृशी राज्यपालेन विधेयेषु नियमेषूल्लिखिता स्यात्, किंच एवं प्रमाणीकृतस्य

भागः ६.—प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

अनुच्छेदाः १६६–१६८

आदेशस्य लिखितस्य वा मान्यतायाम्, यद्यमादेश इदं वा लिखितं न प्रणीतं निष्पादितं वा राज्यपालेन, इति हेतुना नापत्तिः कृता भवेत्।

(३) राज्यशासनकार्यस्य अधिकसौकर्येण निर्वर्तनाय, यावत्पर्यन्तं यत्कार्यमुद्दिश्य राज्यपालोऽनेन संविधानेन तदधीनं वा स्वविवेकेन कृत्यं कर्तुमपेक्षितोऽस्ति तावत्पर्यन्तं तत्कार्यव्यतिरिक्तस्योक्तकार्यस्य मन्त्रिणां मध्ये भागकल्पनायै च राज्यपालो नियमान् प्रणयेत्।

१६७. प्रत्येकराज्यस्य मुख्यमन्त्रिणः— राज्यपालाय ज्ञपनस्य संप्रदानम् इत्यादिविषयकाणि मुख्यमन्त्रिणः कर्तव्यानि।

(क) राज्यकार्याणां प्रशासनेन संबध्यमानानां मन्त्रिपरिषदः सर्वेषां विनिश्चयानां विधानार्थप्रस्थापनानां च राज्यस्य राज्यपालाय निवेदनम्;

(ख) राज्यकार्यैः विधानार्थप्रस्थापनाभिश्च संबध्यमानस्यैतादृशस्य ज्ञपनस्य संप्रदानं यादृशं राज्यपालोऽपेक्षेत; तथा

(ग) यस्मिन् विषये केनापि मन्त्रिणा विनिश्चयः कृतोऽस्ति, मन्त्रिपरिषदा तु विचारो न कृतोऽस्ति, यदि राज्यपालः एवमपेक्षते तस्य कस्यापि विषयस्य मन्त्रिपरिषदो विचारार्थमास्थापनम्;

इत्येतत् कर्तव्यं भवेत्।

## अध्यायः ३.—राज्यस्य विधानमण्डलम्

## साधारणम्

१६८. (१) प्रत्येकराज्यस्य विधानमण्डलं भवेत् यत्— राज्यपालेन, तथा राज्यविधानमण्डलानां घटनम्।

(क) बिहारमुंबयीमद्रासपंजाबयुक्तप्रान्त [ उत्तरप्रदेश ]—पश्चिमवङ्गानां राज्येषु द्वाभ्यां सदनाभ्याम्;

## भागः ६.--प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

### अनुच्छेदाः १६८-१७०

(ख) अन्येषु राज्येषु च एकेन सदनेन;

भवेत् ।

(२) यत्र राज्यविधानमण्डलस्य द्वे सदने स्तः, तत्र तयोरेकं विधानपरिषदिति अपरं च विधानसभेति विज्ञातं भवेत्, यत्र च केवलमेकं सदनमस्ति तत्र तत् विधानसभेति विज्ञातं भवेत् ।

राज्येषु विधानपरिषदामुत्सादनं सर्जनं च ।

१६९. (१) १६८– तमानुच्छेदगतं सर्वमविगणय्य, विधानपरिषद्वति राज्ये एतादृश्याः परिषद उत्सादनाय, एतादृश्या परिषदा रहिते राज्ये एतादृश्याः परिषदः सर्जनाय वा संसद् विधिनोपबन्धयितुं क्षमते, यदि राज्यस्य विधानसभा एतदुद्दिश्य संकल्पं तत्सभायाः सदस्यानां समस्तसंख्याया बहुमतेन, उपस्थितानां मतं ददतां च सदस्यानां संख्यायाः तृतीयांशद्वयादन्यूनेन बहुमतेन च पारयति ।

(२) (१)–खण्डे निर्दिष्टः कोऽपि विधिः अस्य संविधानस्य संशोधनाय एतादृशानुपबन्धानन्तर्निवेशयेत् यादृशाः तद्विधेरुपबन्धान् कार्यक्षमान् कर्तुमावश्यकाः स्युः, किंच एतादृशाननुपूरकान् प्रासङ्गिकानानुषङ्गिकांश्चोपबन्धानन्तर्निवेशयितुं क्षमते यादृशान् संसद् आवश्यकान् मन्येत ।

(३) पूर्वोक्तसदृशः कोऽपि विधिः ३६८–तमानुच्छेदस्य प्रयोजनानां कृते अस्य संविधानस्य संशोधनमिति न मन्येत ।

विधानसभानां रचना ।

१७०. (१) ३३३–तमानुच्छेदीयोपबन्धानामधीनम्, प्रत्येकराज्यस्य विधानसभा साक्षात् निर्वाचनेन वृतैः सदस्यैः रचिता भवेत् ।

(२) यस्या जनगणनाया अपेक्षणीया अङ्काः प्रकाशिताः सन्ति तस्यामन्तिमायां पूर्ववृत्तायां जनगणनायां या निश्चिता कृताऽस्ति तस्यास्तन्निर्वाचनक्षेत्रीयाया जनसंख्याया आधारेण प्रादेशिकस्य प्रत्येकनिर्वाचनक्षेत्रस्य प्रतिनिधित्वं राज्यविधानसभायां भवेत्, किंच आसामस्य

भागः ६.--प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

अनुच्छेदौ १७०-१७१

स्वायत्तमण्डलानि शिलांगस्य नगरक्षेत्रकटकयोः समावेशकं निर्वाचन-क्षेत्रं च विहाय, सहस्राणां प्रतिपञ्चसप्तति एकानधिकः सदस्यः इत्यनु-पातेन तत्प्रतिनिधित्वं भवेत्—

परन्तु राज्यविधानसभायाः सदस्यानां समस्तसंख्या कस्यामप्यव-स्थायां पञ्चभ्यः शतेभ्यः अधिका षष्टितो न्यूना च न भवेत् ।

(३) राज्ये प्रादेशिकं प्रत्येकनिर्वाचनक्षेत्रं प्रति संविभाजनीयायाः सदस्यसंख्यायाः, यस्या अपेक्षिता अङ्काः प्रकाशिताः सन्ति तस्या-मन्तिमायां पूर्ववृत्तायां जनगणनायां निश्चितायाः तन्निर्वाचनक्षेत्रीयाया जनसंख्यायाश्च मध्ये अनुपातः राज्ये सर्वत्र समानो भवेत् ।

(४) प्रत्येकजनगणनायाः समाप्तौ प्रत्येकराज्यस्य विधानसभायां विभिन्नानां प्रादेशिकानां निर्वाचनक्षेत्राणां प्रतिनिधित्वम् एतादृशेन प्राधि-कारिणा, एतादृश्या रीत्या, कार्यकरतायै एतादृशे दिनाङ्के च पुनःसमा-योजितं भवेत् यादृशान् संसद् विधिना निर्धारयेत्—

परंतु यावत् तदानीं वर्तमानविधानसभायाः विघटनं न भवति तावत् एतादृशं पुनःसमायोजनं विधानसभायाः प्रतिनिधितां न स्पृशेत् ।

१७१. (१) विधानपरिषद्वतो राज्यस्य विधानपरिषदः सदस्यानां समस्तसंख्या तद्राज्यविधानसभायाः सदस्यानां समस्तसंख्यायाः चतुर्थांशात् अधिका न भवेत्— विधानपरिषदां रचना ।

परन्तु कस्यामप्यवस्थायां राज्यविधानपरिषदः सदस्यानां समस्तसंख्या चत्वारिंशत्तो न्यूना न भवेत् ।

(२) यावत् संसद् विधिनाऽन्यथा नोपबन्धयति तावत् राज्य-विधानपरिषदो रचना (३)–खण्डे उपबन्धितेन सदृशी भवेत् ।

(३) राज्यविधानपरिषदः सदस्यानां समस्तसंख्यायाः—

## भागः ६.--प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

### अनुच्छेदः १७१

(क) यथाशक्यं तृतीयांशः, तस्य राज्यस्य नगरपालिकानां मण्डलमण्डलीनाम् एतादृशानामन्येषां च स्थानीयानां प्राधिकारिणां, यादृशान् संसद् विधिनोल्लेखयेत्, सदस्यैः संभूय भूतैर्निर्वाचकमण्डलैर्निर्वाचितो भवेत्;

(ख) यथाशक्यं द्वादशांशः तस्मिन् राज्ये निवासिभिस्तैर्जनैः संभूय भूतैर्निर्वाचकमण्डलैर्निर्वाचितो भवेत् ये भारतराज्यक्षेत्रीयस्य कस्यापि विश्वविद्यालयस्यान्ततो वर्षत्रयं स्नातकाः सन्ति अथवा ये न्यूनान्न्यूनं वर्षत्रयं संसत्प्रणीतेन केनापि विधिना तदधीनं वा विहिताः कस्याप्येतादृशस्य विश्वविद्यालयस्य स्नातकेन तुल्या अर्हताः धारितवन्तः सन्ति;

(ग) यथाशक्यं द्वादशांशः तैर्जनैः संभूय भूतैर्निर्वाचकमण्डलैर्निर्वाचितो भवेत् ये तद्राज्याभ्यन्तरीयमाध्यमिकपाठशालाभ्योऽनिम्नतरस्तरीयास्वेतादृशीषु शिक्षासंस्थास्वध्यापने न्यूनान्न्यूनं वर्षत्रयं व्यापृताः सन्ति यादृश्यः संसत्प्रणीतेन केनापि विधिना तदधीनं वा विहिताः सन्ति;

(घ) यथाशक्यं तृतीयांशः तद्राज्यविधानसभायाः सदस्यैस्तत्सभाया असदस्येभ्यो निर्वाचितो भवेत्;

(ङ) शेषाः राज्यपालेन (५)-खण्डगतोपबन्धानामनुसारेण नामनिर्देशिता भवेयुः ।

(४) (३)-खण्डस्थ-(क)-(ख)-(ग)-उपखण्डानामधीनं निर्वाचनीयाः सदस्याः एतादृशेषु प्रादेशिकेषु निर्वाचनक्षेत्रेषु वृता भवेयुः

## भागः ६.—प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

### अनुच्छेदाः १७१-१७३

यादृशाः संसत्प्रणीतेन केनापि विधिना तदधीनं वा विहिता भवेयुः; किंच उक्तखण्डस्योक्तोपखण्डानामधीनं (घ)-उपखण्डस्याधीनं च निर्वाचनानि अनुपातिप्रतिनिधित्वपद्धतिमनुसृत्यैकलसंक्रमणीयमतेन कृतानि भवेयुः ।

(५) (३)-खण्डस्य-(ङ)-उपखण्डाधीनं राज्यपालेन नाम-निर्देशनीयाः सदस्याः एतादृशेषु विषयेषु लौकिकानुभवं विशेषज्ञानं वा भजमानैर्जनैः संभूय भवेयुः, यादृशा निम्नलिखिता वर्तन्ते, यथा—

साहित्यम्, विज्ञानम्, कला, सहकार्यान्दोलनम्, सामाजिकसेवा च ।

१७२. (१) प्रत्येकराज्यस्य प्रत्येकविधानसभा—यदि पूर्वतरं न विघटिता—स्वीयाय प्रथमायाधिवेशनाय नियुक्तदिनाङ्कात् पञ्च वर्षाण्य-नुवर्तेत न चाधिकम्; किंच पञ्चानां वर्षाणामुक्तस्य कालावधेः समाप्तिः तस्या विधानसभाया विघटनरूपेण वर्तेत । राज्यविधान-मण्डलाना-मवधिः ।

परन्तु यावत् आपातस्योद्घोषणा प्रवर्तमानाऽस्ति तावत् उक्त-कालावधिम् एकस्मिन् काले एकवर्षानधिकम्, तस्या उद्घोषणायाः प्रवर्तनान्तात् परं कस्यामप्यवस्थायां षण्मासावधिमनतीत्य, संसद् विधिना वर्धयितुं क्षमते ।

(२) राज्यविधानपरिषद् विघटनस्य विषयो न भवेत्, किन्तु यावच्छक्यं सदस्यानां तृतीयांशः; यथासंभवं शीघ्रम्, प्रत्येकद्वितीयवर्षस्य समाप्तौ, संसदा तदर्थं विधिना प्रणीतानुपबन्धाननुसृत्य निवर्तेत ।

१७३. कोऽपि जनो राज्यविधानमण्डले स्थानस्य पूर्तये वरणार्हो न भवेत् यदि न सः—— राज्यविधान-मण्डलस्य सद-स्यत्वस्यार्हताः।

(क) भारतस्य नागरिकोऽस्ति;

(ख) अन्यूनपञ्चविंशतिवर्षवयस्कः विधानसभायाः स्थानाय, अन्यूनत्रिंशद्वर्षवयस्कश्च विधानपरिषदः स्थानाय विद्यते; किंच

## भागः ६.--प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

### अनुच्छेदाः १७३-१७६

(ग) एतादृशीरन्या अर्हताः धारयति यादृश्यः संसत्प्रणीतेन केनापि विधिना तदधीनं वा तदर्थं विहिताः स्युः ।

राज्यविधान-मण्डलस्य सत्राणि, सत्रा-वसानं, विघ-टनं च ।

१७४. (१) राज्यविधानमण्डलस्य सदनं सदने वाऽधिवेशनाय प्रति-वत्सरं न्यूनान्न्यूनं द्विवारमाहूते भवेताम्, तयोः एकसत्रीयान्तिमोपवेश-नस्य तयोः अनन्तरसत्रीयप्रथमोपवेशनाय नियुक्तदिनाङ्कस्य चान्तरा षण्णां मासानां व्यवधानं न भवेत् ।

(२) (१)–खण्डस्थोपबन्धानामधीनम्, राज्यपालः कालेकाले—

(क) सदनमन्यतरत्सदनं वाऽधिवेशनाय यादृशं स उचितं मन्यते एतादृशे काले स्थाने च आह्वातुम्;

(ख) सदनस्य सदनयोर्वा सत्रावसानं कर्तुम्;

(ग) विधानसभां विघटयितुम्;

क्षमते ।

राज्यपालस्य सदनं सदने वा प्रति संबोधने संदेशप्रेषणे चाधिकारः ।

१७५. (१) राज्यपालो विधानसभाम्, अथवा, विधानपरिषद्वतो राज्यस्य संबन्धे तद्राज्यविधानमण्डलस्यान्यतरत्सदनं सहसमवेते उभे वा सदने संबोधयितुं क्षमते, तदर्थं सदस्यानामुपस्थितिमपेक्षितुं च क्षमते ।

(२) राज्यपालस्तद्राज्यविधानमण्डलस्य सदनं प्रति सदने वा प्रति तदानीं तद्विधानमण्डले लम्बितं विधेयकमुद्दिश्य अन्यथा वा संदेशान् प्रेषयितुं क्षमते; किंच यत् सदनं प्रति कोऽपि संदेश एवं प्रेषितोऽस्ति तत्सदनं यथानुकूलशीघ्रं तत्संदेशेन विचारणीयत्वेनापेक्षितं कमपि विषयं विचारयेत् ।

प्रत्येकसत्रस्य प्रारम्भे राज्य-पालस्याभि-भाषणम् ।

१७६. (१) राज्यपालः प्रत्येकसत्रस्य प्रारम्भे विधानसभां प्रति, अथवा, विधानपरिषद्वतो राज्यस्य संबन्धे सहसमवेते उभे सदने प्रति अभिभाषणेन, विधानमण्डलं प्रति आह्वानस्य कारणं च ज्ञपयेत् ।

## भागः ६.—प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

### अनुच्छेदाः १७६–१७९

(२) एतादृशेऽभिभाषणे निर्दिष्टानां विषयाणां चर्चार्थं कालसंविभजनाय, तत्सदनस्यान्यकार्यादस्याश्चर्चायाः पूर्ववर्तितायै च तत्सदनस्यान्यतरस्य सदनस्य वा प्रक्रियाया विनियामकैर्नियमैरुपबन्धः प्रणीतो भवेत्।

१७७. प्रत्येकमन्त्री महाधिवक्ता च तद्राज्यविधानसभायाम्, अथवा, विधानपरिषद्वतो राज्यस्य संबन्धे उभयोः सदनयोः भाषितुमन्यथा कार्यप्रवृत्तिषु भागग्रहणे चाधिकारं भजते; यस्यां विधानमण्डलस्य समितौ स नामनिर्देशनीयः सदस्यो भवेत्, किन्तु एतस्यानुच्छेदस्य हेतोः मतदाने स्वत्ववान् न भवेत् तस्यां स भाषितुमन्यथा कार्यप्रवृत्तिषु भागग्रहणे चाधिकारं भजेत।

मन्त्रिणां महाधिवक्तुश्च सदनयोः संबन्धिनोऽधिकाराः।

विधानमण्डलस्य पदाधिकारिणः

१७८. राज्यस्य प्रत्येकविधानसभा यथासंभवं शीघ्रं विधानसभाया द्वौ सदस्यौ क्रमेण स्वस्याध्यक्षरूपेणोपाध्यक्षरूपेण च वृणीत, किंच यदायदा अध्यक्षस्योपाध्यक्षस्य वा पदं रिक्तं भवति तदातदा सा सभा अन्यं सदस्यं यथायथम् अध्यक्षरूपेणोपाध्यक्षरूपेण वा वृणीत।

विधानसभाया अध्यक्ष उपाध्यक्षश्च।

१७९. विधानसभाया अध्यक्षरूपेणोपाध्यक्षरूपेण वा पदं धारयन् सदस्यः—

अध्यक्षस्योपाध्यक्षस्य च पदरिक्तता, पदत्यागः, पदादपसारणं च।

(क) स्वपदं रिक्तीकुर्यात् यदि स तस्याः सभायाः सदस्यत्वाद् विरमेत्;

(ख) यद्येतादृशः सदस्योऽध्यक्षोऽस्ति तर्ह्युपाध्यक्षम्, यदि चैतादृशः सदस्यः उपाध्यक्षोऽस्ति तर्ह्यध्यक्षं संबोध्य लिखितेन स्वहस्ताङ्कितेन लेखेन यदाकदाऽपि स्वपदं त्यक्तुं क्षमते; किंच

(ग) तदानींतनानां तस्याः सभायाः सर्वेषां सदस्यानां मध्ये बहुमतेन पारितेन तस्याः सभायाः संकल्पेन स्वपदादपसारितो भवितुमर्हति—

## भागः ६.--प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

### अनुच्छेदाः १७९-१८१

परन्तु (ग)-खण्डस्य प्रयोजनाय कोऽपि संकल्पस्तावन्न प्रस्तावितो भवेत् यावत् तत्संकल्पप्रस्तावाभिप्रायस्य न्यूनान्न्यूनं चतुर्दशानां दिवसानां सूचना न दत्ता स्यात्--

परन्तु अन्यदपि, यदायदा सा सभा विघटिता भवति तदातदाऽध्यक्षस्तद्विघटनात् परं तस्याः सभायाः प्रथमोपवेशनस्याव्यवहितपूर्वकालपर्यन्तं स्वपदं न रिक्तं कुर्यात् ।

उपाध्यक्षस्यान्यस्य वाऽध्यक्षपदीयकर्तव्यपालनेऽध्यक्षरूपेण वा कार्यकरणे शक्तिः ।

१८०. (१) यदाऽध्यक्षस्य पदं रिक्तमस्ति तदोपाध्यक्षेण तत्पदस्य कर्तव्यानि पालितानि भवेयुः, अथवा, यद्युपाध्यक्षस्यापि पदं रिक्तमस्ति तदा तस्याः सभाया एतादृशेन सदस्येन, यादृशं तदर्थं राज्यपालो नियोजयेत् ।

(२) तस्याः सभायाः कस्मिन्नप्युपवेशनेऽध्यक्षस्यानुपस्थितावुपाध्यक्षोऽध्यक्षरूपेण कार्यं कुर्वीत, अथवा, यदि सोऽप्यनुपस्थितोऽस्ति तर्ह्येतादृशो जनः, यादृशस्तस्याः सभायाः प्रक्रियाया नियमैर्निर्धारितो भवेत्, अथवा, यदि न कोऽप्येतादृशो जन उपस्थितोऽस्ति तर्ह्यन्य एतादृशो जनः, यादृशस्तया सभया निर्धारितो भवेत् ।

यावत् तस्य पदादपसारणाय संकल्पो विचाराधीनोऽस्ति तावदध्यक्ष उपाध्यक्षो वा न पीठासीनो भवेत् ।

१८१. (१) विधानसभायाः कस्मिन्नप्युपवेशने यदाऽध्यक्षस्य स्वपदादपसारणाय कोऽपि संकल्पो विचाराधीनोऽस्ति तदाऽध्यक्षः, अथवा यदोपाध्यक्षस्य स्वपदादपसारणाय कोऽपि संकल्पो विचाराधीनोऽस्ति तदोपाध्यक्षः; यद्यप्यसावुपस्थितोऽस्ति, पीठासीनो न भवेत्; किंच १८०-तमानुच्छेदीय-(२)-खण्डस्योपबन्धा एतादृशस्य प्रत्येकम् उपवेशनस्य संबन्धं विषयीकुर्युः यथा ते यत्राध्यक्ष उपाध्यक्षो वा यथायथमनुपस्थितो भवति तस्य कस्याप्युपवेशनस्य संबन्धं विषयीकुर्वन्ति ।

(२) यदा स्वपदादपसारणाय विधानसभायां कश्चिदपि संकल्पो विचाराधीनोऽस्ति तदाऽध्यक्षस्तस्यां सभायां भाषणेऽन्यथा कार्यप्रवृत्तिषु भागग्रहणे चाधिकारं भजेत; किंच १८९-तमानुच्छेदगतं सर्वमविगणय्य, एतादृशे संकल्पे, अथवा, एतादृशकार्यप्रवृत्तिष्वन्यस्मिन्

कस्मिन्नपि विषये प्रथमत एव मतदाने स्वत्ववान् भवेत्, मतसाम्यदशायां तु न भवेत्।

१८२. एतादृशपरिषद्गतः प्रत्येकराज्यस्य विधानपरिषद् यथासंभवं शीघ्रं तस्याः परिषदो द्वौ सदस्यौ क्रमेण तस्याः सभापतिरूपेणोपसभापतिरूपेण च वृणीत, यदायदा सभापतेरुपसभापतेर्वा पदं रिक्तं भवति तदातदा सा परिषद् अन्यं सदस्यं यथायथं सभापतिरूपेणोपसभापतिरूपेण वा वृणीत। विधानपरिषदः सभापतिरुपसभापतिश्च।

१८३. विधानपरिषदः सभापतिरूपेणोपसभापतिरूपेण वा पदं धारयन् सदस्यः— सभापतेरुपसभापतेश्च पदरिक्तता, पदत्यागः, पदादपसारणं च।

(क) स्वपदं रिक्तीकुर्यात् यदि स तस्याः परिषदः सदस्यत्वाद् विरमेत्;

(ख) यद्येतादृशः सदस्यः सभापतिरस्ति तर्हि उपसभापतिम्, यदि च एतादृशः सदस्यः उपसभापतिरस्ति तर्हि सभापतिम्, संबोध्य लिखितेन स्वहस्ताङ्कितेन लेखेन यदाकदापि स्वपदं त्यक्तुं क्षमते; किंच

(ग) तदानींतनानां तस्याः परिषदः सर्वेषां सदस्यानां बहुमतेन पारितेन तस्याः परिषदः संकल्पेन स्वपदादपसारितो भवितुं शक्नोति—

परन्तु (ग)—खण्डस्य प्रयोजनाय कोऽपि संकल्पस्तावन्न प्रस्तावितो भवेत् यावत् तत्संकल्पप्रस्तावाभिप्रायस्य न्यूनान्न्यूनं चतुर्दशानां दिवसानां सूचना न दत्ता भवेत्।

## भागः ६.--प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

### अनुच्छेदाः १८४-१८६

उपसभापतेरन्यस्य वा जनस्य सभापतिपदीयकर्तव्यपालने सभापतिरूपेण वा कार्यकरणे शक्तिः ।

१८४. (१) यदा सभापतेः पदं रिक्तमस्ति तदोपसभापतिना तत्पदस्य कर्तव्यानि पालितानि भवेयुः ; यद्युपसभापतेः पदं रिक्तमस्ति तदा तस्याः परिषदः एतादृशेन सदस्येन, यादृशं तदर्थं राज्यपालो नियोजयेत् ।

(२) तस्याः परिषदः कस्मिन्नप्युपवेशने सभापतेरनुपस्थितावुपसभापतिः सभापतिरूपेण कार्यं कुर्वीत; अथवा, यदि सोऽप्यनुपस्थितोऽस्ति तर्ह्येतादृशो जनः, यादृशस्तस्याः परिषदः प्रक्रियाया नियमैर्निर्धारितो भवेत् ; अथवा, यदि न कोऽप्येतादृशो जन उपस्थितोऽस्ति तर्ह्यन्य एतादृशो जनः, यादृशस्तया परिषदा निर्धारितो भवेत् ।

यावत् तस्य पदादपसारणाय संकल्पो विचाराधीनोऽस्ति तावदध्यक्ष उपाध्यक्षो वा न पीठासीनो भवेत् ।

१८५. (१) विधानपरिषदः कस्मिन्नप्युपवेशने यदा सभापतेः स्वपदादपसारणाय कोऽपि संकल्पो विचाराधीनोऽस्ति तदा सभापतिः, अथवा, यदोपसभापतेः स्वपदादपसारणाय कोऽपि संकल्पो विचाराधीनोऽस्ति तदोपसभापतिः, यद्यप्यसावुपस्थितोऽस्ति, पीठासीनो न भवेत्; किंच १८४-तमानुच्छेदीय-(२)-खण्डोपबन्धा एतादृशस्य प्रत्येकोपवेशनस्य संबन्धं विषयीकुर्युः, यथा ते तस्योपवेशनस्य संबन्धं विषयीकुर्वन्ति यत्र सभापतिरुपसभापतिर्वा यथायथमनुपस्थितो भवति ।

(२) यदा स्वपदादपसारणाय कश्चित् संकल्पो विचाराधीनोऽस्ति तदा सभापतिस्तस्यां परिषदि भाषणेऽन्यथा कार्यप्रवृत्तिषु भागग्रहणे चाधिकारं भजेत; किंच १८९-तमानुच्छेदगतं सर्वमविगणय्य, एतादृशे संकल्पे, अथवा, एतादृशकार्यप्रवृत्तिष्वन्यस्मिन् कस्मिन्नपि विषये वा प्रथमत एव मतदाने स्वत्ववान् भवेत्, मतसाम्यदशायां तु न भवेत् ।

अध्यक्षोपाध्यक्षयोः सभापत्युपसभापत्योश्च वेतनानि भक्तानि च ।

१८६. विधानसभाया अध्यक्षायोपाध्यक्षाय च तथा विधानपरिषदः सभापतय उपसभापतये चैतादृशानि वेतनानि भक्तानि च दत्तानि भवेयुः यादृशानि क्रमशस्तद्राज्यविधानमण्डलं विधिना नियतानि कुर्यात्; किंच यावत्तदर्थं नोपबन्धः कृतोऽस्ति तावत् एतादृशानि वेतनानि भक्तानि च, यादृशानि द्वितीयानुसूच्यामुल्लिखितानि सन्ति ।

## भागः ६.--प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

### अनुच्छेदाः १८७-१८९

१८७. (१) विधानमण्डलीयस्य सदनस्य प्रत्येकसदनस्य वा साचिविकः कर्मचारिवृन्दो भवेत्—

राज्यविधानमण्डलस्य सचिवालयः।

परन्तु विधानपरिषद्गतः राज्यस्य विषये एतत्खण्डगतस्य कस्यापि नैवमर्थः कृतो भवेत् यदेतत् एतादृशविधानमण्डलस्योभयसदनार्थं साधारणपदानां सर्जनं निवारयतीति।

(२) राज्यविधानमण्डलं विधिना तद्राज्यविधानमण्डलीयस्य सदनस्य सदनयोर्वा साचिविके कर्मचारिवृन्दे संग्रहणं सेवायां नियुक्तानां जनानां सेवाप्रतिबन्धांश्च विनियमयेत्।

(३) यावत् (२)-खण्डाधीनं तद्राज्यविधानमण्डलेनोपबन्धो न कृतोऽस्ति तावत् राज्यपालो यथायथं विधानसभाया अध्यक्षेण विधानपरिषदः सभापतिना वा परामृश्य तस्याः सभायाः तस्याः परिषदो वा साचिविके कर्मचारिवृन्दे संग्रहणस्य नियुक्तजनसेवाप्रतिबन्धानां च विनियमनाय नियमान् प्रणयेत्; किंच केऽपि एवं प्रणीता नियमा उक्तखण्डाधीनं प्रणीतस्य कस्यापि विधेरुपबन्धानामधीनं कार्यक्षमा भवेयुः।

### कार्यसंचालनम्

१८८. राज्यविधानसभाया राज्यविधानपरिषदो वा प्रत्येकं सदस्यः स्वस्थानग्रहणात् प्राक् राज्यपालस्य तेन तदर्थं नियुक्तस्य जनस्य वा समक्षं तृतीयानुसूच्यामेतदर्थं कृतप्रपत्रमनुसृत्य शपथं प्रतिज्ञानं वा कुर्वीत स्वहस्ताङ्कितं च कुर्यात्।

सदस्यानां शपथः प्रतिज्ञानं वा।

१८९. (१) अस्मिन् संविधानेऽन्यथोपबन्धितादन्यत्र, राज्यविधानमण्डलसदनस्य कस्मिन्नप्युपवेशनेऽध्यक्षात् सभापतेरेतादृशरूपेण कार्यकारिणो वा जनादन्येषामुपस्थितानां मतं ददतां च सदस्यानां मध्ये बहुमतेन सर्वे प्रश्ना निर्धारिता भवेयुः।

सदनेषु मतदानम्, रिक्ततामविगणय्य सदनानां कार्यकरणे शक्तिः, गणपूर्तिश्च।

अध्यक्षः सभापतिः एतादृशरूपेण कार्यकारी जनो वा प्रथमतो मतं न दद्यात्, मतसाम्यावस्थायां तु निर्णायकं मतं भजेत प्रयुञ्जीत च।

## भागः ६.--प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

### अनुच्छेदौ १८९-१९०

(२) राज्यविधानमण्डलसदनम्, तत्रत्यस्य सदस्यत्वस्य कामपि रिक्ततामविगणय्य, कार्यकरणे शक्तिं भजेत; किंच यत्, कोऽपि एवं करणे अस्वत्ववान् जनः उपाविशत्, मतमदाद्वा, अन्यथा कार्यप्रवृत्तिषु भागग्रहणमकरोद्वेत्यनन्तरमाविष्कृतमिति अविगणय्य, राज्यविधानमण्डले का अपि कार्यप्रवृत्तयो मान्या भवेयुः ।

(३) यावत् तद्राज्यविधानमण्डलं विधिना नान्यथोपबन्धयति तावत् तद्राज्यविधानमण्डलसदनस्याधिवेशनसंघटनाय गणपूर्तिः तत्सदनस्य सदस्यानां समस्तसंख्याया दशमांशेन दशभिः सदस्यैर्वा, अत्र यत् अधिकतरं भवति तेन, भवेत् ।

(४) यदि यदाकदापि राज्यविधानसभाया राज्यविधानपरिषदो वाऽधिवेशने गणपूर्तिर्नास्ति तर्ह्यध्यक्षस्य सभापतेरेतादृशरूपेण कार्यकारिणो वा जनस्य वैतत् कर्तव्यं भवेत् यत् यावन्न गणपूर्तिरस्ति तावत् तत्सदनस्य स्थगनमधिवेशनस्य वा निलम्बनमिति ।

### सदस्यानामनर्हताः

स्थानानां रिक्तता ।

१९०. (१) कोऽपि जनो द्वयोः राज्यविधानमण्डलसदनयोः सदस्यो न भवेत्; किंच यो जनो द्वयोः सदनयोर्वृतः सदस्योऽस्ति तेनैकस्मिन्नन्यस्मिन् वा सदने स्थानं रिक्तं कारयितुं तद्राज्यविधानमण्डलं विधिनोपबन्धं कुर्यात् ।

(२) कोऽपि जनः प्रथमानुसूच्यामुल्लिखितयोर्द्वयोरधिकानां वा राज्यानां विधानमण्डलेषु सदस्यो न भवेत्; किंच यदि कोऽपि जनो द्वयोरधिकानां वैतादृशराज्यानां विधानमण्डलेषु वृतः सदस्यो भवति तर्हि तस्य जनस्यैतादृशसर्वराज्यानां विधानमण्डलेषु स्थानम्, एतादृशस्य कालावधेः समाप्त्युत्तरं रिक्तं भवेत् यादृशो राष्ट्रपतिना प्रणीतेषु नियमेषूल्लिखितः स्यात् यदि तेनैकराज्यादतिरिक्तानां सर्वेषां राज्यानां विधानमण्डलेषु स्थानं न त्यक्तं स्यात् ।

भागः ६.--प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

अनुच्छेदौ १९०-१९१

(३) यदि राज्यविधानमण्डलसदनस्य सदस्यः—

(क) १९१-तमानुच्छेदीय-(१)-खण्डे वर्णितानामनर्हतानामन्यतमस्य कस्यापि भागी जायते;

(ख) यथायथम् अध्यक्षं सभापतिं वा संबोध्य स्वहस्ताङ्कितेन लिखितेन लेखेन स्वस्थानं त्यजति;

तर्हि तदुत्तरं तस्य स्थानं रिक्तं भवेत् ।

(४) यदि राज्यविधानमण्डलस्य सदस्यः तत्सदनस्यानुज्ञां विना सर्वेषु तस्याधिवेशनेषु षष्टिदिवसकालावधावनुपस्थितो भवति तर्हि तत्सदनं तस्य स्थानं रिक्तं घोषयितुं क्षमते—

परन्तु उक्तस्य षष्टिदिवसकालावधेः संगणनायां स कालावधिर्न संमिलितः कृतो भवेत् यस्मिन् सदनम् अवसितसत्रमास्ति, निरन्तरं चतुर्भ्यो दिवसेभ्योऽधिकं स्थगितं वाऽस्ति ।

१९१. (१) स कोऽपि जनो राज्यविधानसभाया राज्यविधानपरिषदो वा सदस्यरूपेण वृतत्वे स्थितौ चानर्हो भवेत्— सदस्यतायै अनर्हताः ।

(क) यदि स भारतशासनस्य प्रथमसूच्यामुल्लिखितस्य किंचिद्राज्यशासनस्य वाधीनं किमपि लाभस्य तत् पदं धारयति यत् तस्मात् पदादन्यदस्ति यस्य धारको नानर्हीकरणीय इति तद्राज्यविधानमण्डलेन विधिना घोषितम्;

(ख) यदि स विकृतचित्तोऽस्ति, क्षमेण न्यायालयेन एवं घोषितश्च तिष्ठति;

(ग) यदि स अनुन्मुक्तः ऋणशोधनाशक्तोऽस्ति ;

भागः ६.—प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

अनुच्छेदौ १९१–१९२

(ग) यदि स भारतस्य नागरिको नास्ति; अथवा, वैदेशिक-राज्यस्य स्वेच्छयाऽर्जितां नागरिकतां भजते; अथवा, वैदेशिकराज्यं प्रति निष्ठाया अनुषक्तेर्वा कमपि अङ्गीकारं कुर्वन् वर्तते;

(घ) यदि स संसदा प्रणीतेन केनापि विधिना तदधीनं वा एवमनर्हः कृतोऽस्ति ।

(२) कोऽपि जनो भारतशासनस्य प्रथमसूच्यामुल्लिखितराज्यशासनस्य वाधीनं लाभस्य पदं धारयतीति न मन्येत अस्मादेव हेतोः, यत् सः संघस्यैतादृशराज्यस्य वा मन्त्री वर्तते इति ।

सदस्यानामनर्हतानां प्रश्नेषु विनिश्चयनम् ।

१९२. (१) यदि कोऽपि प्रश्न उत्पद्यते यत्, राज्यविधानमण्डल-सदनस्य सदस्यः १९१–तमानुच्छेदस्य (१)–खण्डे वर्णितानामनर्हताना-मन्यतमां कामपि भजते किमिति, तर्हि स प्रश्नो राज्यपालस्य विनिश्च-याय प्रदत्तो भवेत् ; किंच तस्य विनिश्चयोऽन्तिमो भवेत् ।

(२) एतादृशे कस्मिन्नपि प्रश्ने विनिश्चयस्य प्रदानात् पूर्वं राज्यपालो निर्वाचनायोगस्य मतिमाप्नुयात् ; किंच एतादृश्या मतेरनुसारेण कार्यं कुर्यात् ।

१८८-अनुच्छेदानुसारेण शपथस्य प्रतिज्ञानस्य वा करणात् पूर्वम् अथवा अनर्हे अनर्हीकृते वा स्थानग्रहणात् मतदानाद्वा दण्डः ।

१९३. यदि कोऽपि जनः १८८–तमानुच्छेदस्यापेक्षाणां पूर्तेः पूर्वम्, यदा स जानाति यत् तस्याः सदस्यतायां नार्होऽस्मि अनर्हः कृतोऽस्मि वा संसदा तद्राज्यविधानमण्डलेन वा प्रणीतस्य कस्यापि विधे-रुपबन्धैः प्रतिषिद्धोऽस्मि वा तदा, राज्यविधानसभायां राज्यविधानपरिषदि वोपविशति मतं वा ददाति तर्हि, यस्मिन् दिवसे स उपविशति मतं वा ददाति तं प्रत्येकं दिवसं तस्य राज्यदेयस्य ऋणस्य रूपेण प्रत्या-देयानि पञ्च शतानि रूप्याणि दण्डो भवेत् ।

## भागः ६.—प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

### अनुच्छेदौ १९४-१९५

### राज्यविधानमण्डलानां तत्सदस्यानां च शक्तयो विशेषाधिकारा उन्मुक्तयश्च

१९४. (१) एतत्संविधानोपबन्धानां विधानमण्डलप्रक्रियाविनियामकानां नियमानां च स्थाय्यादेशानां चाधीनं प्रत्येकराज्यस्य विधानमण्डलेषु भाषणस्य स्वातन्त्र्यं भवेत् । विधानमण्डलसदनानां तत्सदस्यानां तत्समितीनां च शक्तयो विशेषाधिकारा इत्यादि ।

(२) राज्यविधानमण्डलस्य कोऽपि सदस्यः तद्विधानमण्डले तस्य कस्यामपि समित्यां वा स्वस्य कामप्युक्तिं किमपि मतदानं वोद्दिश्य कस्मिन्नपि न्यायालये कार्यप्रवृत्तीनां भाजनं न भवेत्; किंच, कोऽपि जनः एतादृशविधानमण्डलसदनस्य प्राधिकारैः तदधीनं वा कस्यापि प्रतिवेदनस्य पत्रस्य मतानां कार्यप्रवृत्तीनां वा प्रकाशनमुद्दिश्य एवं भाजनं न भवेत् ।

(३) अन्येषु विषयेषु राज्यविधानमण्डलसदनस्यैतादृशविधानमण्डलीयानां सदस्यानां समितीनां च शक्तयो विशेषाधिकारा उन्मुक्तयश्चैतादृशा भवेयुः यादृशास्तद्विधानमण्डलेन कालेकाले विधिना परिभाषिता भवेयुः, किंच यावन्नैवं परिभाषिताः तावत् ते भवेयुः ये अस्य संविधानस्य प्रारम्भे 'युनायटेड किङ्डम्'— संसत्साधारणसदनस्य तत्सदस्यानां तत्समितीनां च सन्ति ।

(४) ये जना अस्य संविधानस्याश्रयेण राज्यविधानमण्डलसदने तस्य कस्यामपि समितौ वा भाषितुम् अन्यप्रकारेण तस्य कार्यप्रवृत्तिषु भागं ग्रहीतुं वा अधिकारवन्तः सन्ति तेषां संबन्धं (१)-(२)-(३)-खण्डानामुपबन्धा विषयीकुर्युः यथा ते तद्विधानमण्डलस्य सदस्यानां संबन्धं विषयीकुर्वन्ति ।

**१९५.** राज्यविधानसभाया राज्यविधानपरिषदश्च सदस्या एतादृशानां वेतनानां भक्तानां च प्राप्तौ स्वत्ववन्तो भवेयुः यादृशानि तद्राज्यविधानमण्डलेन विधिना कालेकाले निर्धारितानि भवेयुः; किंच यावत् तद्विषये उपबन्धा एवं न कृतास्तावदेतादृशैर्मानैः एतादृशैः प्रतिबन्धैश्च सदस्यानां वेतनानि भक्तानि च ।

## भागः ६.--प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

### अनुच्छेदाः १९५-१९७

वेतनानां भक्तानां च, यादृशानि अस्य संविधानस्य प्रारम्भाद्व्यवहित-पूर्वम् एतद्राज्यस्थानिप्रान्तस्य विधानसभायाः सदस्यानामवस्थां विषयी-कुर्वाणानि आसन् ।

### विधानप्रक्रिया

विधेयकानां पुरःस्थापनस्य पारणस्य चोपबन्धाः ।

१९६. (१) धनविधेयकैरन्यैर्वित्तविधेयकैश्च संबद्धानां १९८–२०७–तमानुच्छेदीयोपबन्धानामधीनं कस्यापि विधानपरिषद्वतो राज्यस्य विधान-मण्डलस्यान्यतरस्मिन् कस्मिन्नपि सदने किमपि विधेयकम् आरम्भमर्हति ।

(२) १९७–१९८–तमानुच्छेदयोरुपबन्धानामधीनं किमपि विधेयकं कस्यापि विधानपरिषद्वतो राज्यस्य विधानमण्डलसदनाभ्यां पारितमिति न तावन्मन्येत यावत् उभाभ्यां सदनाभ्यां संशोधनेन विना केवलैरेतादृशैः संशोधनैः सह वा तत् न स्वीकृतं भवति यादृशान्युभाभ्यां सदनाभ्यां स्वीकृतानि सन्ति ।

(३) राज्यविधानमण्डले लम्बितं विधेयकं तदीयस्य सदनस्य सदनयोर्वा सत्रावसानेन हेतुना व्यपगतं न भवेत् ।

(४) तद्राज्यविधानपरिषदि लम्बितं यद् विधेयकं विधानसभया न पारितं भवति तत् तत्सभाया विघटने न व्यपगतं भवेत् ।

(५) यद् विधेयकं राज्यविधानसभायां लम्बितं भवति, अथवा, विधानसभया पारितं भूत्वा विधानपरिषदि लम्बितं भवति तत् तत्सभाया विघटने व्यपगतं भवेत् ।

धनविधेयकेभ्योऽन्यविधेयकसंबन्धिषु विधानपरिषच्छक्तिषु निर्बन्धनानि ।

१९७. (१) यदि कस्यापि विधानपरिषद्वतो राज्यस्य विधानसभया विधेयकं पारितमस्ति, विधानपरिषदं च प्रेषितमस्ति, तत्पश्चात्—

(क) तद्विधेयकं तत्परिषदा निराकृतमस्ति; अथवा

(ख) तत्परिषदः समक्षं यस्मिन् दिनाङ्के तद्विधेयकं संस्थापितम्, तया तद्विधेयकं पारितमकृत्वा

भागः ६.—प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

अनुच्छेदः १९७

तस्माद्दिनाङ्कात् त्रिभ्यो मासेभ्योऽधिकः कालोऽत्येति; अथवा

(ग) यैः संशोधनैस्तद्विधानसभा सहमता न भवति तैः सह तद्विधेयकं तत्परिषदा पारितं भवति,

तर्हि विधानसभा स्वप्रक्रियाविनियामकनियमानामधीनम्, तद्विधेयकं तस्मिन्नेव सत्रे कस्मिन्नप्युत्तरसत्रे वैतादृशैः संशोधनैः सह विना वा, कान्यपि चेत् सन्ति, पारयितुं क्षमते, यादृशानि विधानपरिषदा कृतानि व्यञ्जितानि स्वीकृतानि वा सन्ति; किंच ततः परम् एवं पारितं तद्विधेयकं विधानपरिषदं प्रेषयितुं क्षमते ।

(२) यदि विधानसभया द्वितीयवारं तद्विधेयकम् एवं पारितमस्ति विधानपरिषदं च प्रेषितमस्ति ततः परम्—

(क) तद्विधेयकं तत्परिषदा निराकृतमस्ति; अथवा

(ख) तत्परिषदः समक्षं यस्मिन् दिनाङ्के तद्विधेयकं स्थापितम्, तस्माद्दिनाङ्कात् एकस्मात् मासादधिकः कालोऽत्येति; अथवा

(ग) यैः संशोधनैस्तद्विधानसभा सहमता भवति तैः सह तद्विधेयकं तत्परिषदा पारितं भवति,

तर्हि तद्राज्यविधानमण्डलसदनाभ्यां तद्विधेयकं तेन रूपेण पारितमिति मतं भवेत् येन रूपेण तत् तद्विधानसभया द्वितीयवारमेतादृशैः संशोधनैः सह, कान्यपि चेत् सन्ति, पारितमासीत्, यादृशानि कृतानि व्यञ्जितानि वा सन्ति तद्विधानसभया च स्वीकृतानि सन्ति ।

(३) एतदनुच्छेदगतं किमपि न धनविधेयकं विषयीकरोति ।

## भागः ६.--प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

### अनुच्छेदौ १९८-१९९

धनविधेयकानां विषये विशेष-प्रक्रिया ।

१९८. (१) धनविधेयकं विधानपरिषदि पुरःस्थापितं न भवेत् ।

(२) कस्यापि विधानपरिषद्वतो राज्यस्य विधानसभया धन-विधेयकं पारितमस्ति ततः पश्चात् तत् विधानपरिषदं तस्याः पुरःप्रशंसनानामर्थे प्रेषितं भवेत्; सा विधानपरिषद् तद्विधेयकस्य प्राप्तेर्दिनाङ्कात् चतुर्दशानां दिवसानां कालावधेरभ्यन्तरे तद्विधेयकं स्वस्य पुरःप्रशंसनैः सह तां विधानसभां प्रति निवर्तयेत्; सा विधानसभा च ततः पश्चात् तस्याः विधानपरिषदः सर्वाणि पुरःप्रशंसनानि तदन्यतमं किमपि वा स्वीकुर्यात् निराकुर्याद्वा ।

(३) यदि तस्याः विधानपरिषदः पुरःप्रशंसनानामन्यतमं सर्वं सा विधानसभा स्वीकरोति तर्हि तद्धनविधेयकं विधानपरिषदा पुरःप्रशंसितैः विधानसभया च स्वीकृतैः संशोधनैः सह उभाभ्यां सदनाभ्यां पारितमिति मन्येत ।

(४) यदि तस्याः विधानपरिषदः प्रशंसनानामन्यतमं किमपि सा विधानसभा न स्वीकरोति तर्हि तद्धनविधेयकं विधानपरिषदा पुरःप्रशंसितानां संशोधनानामन्यतमेन केनापि विना तेन रूपेण पारितमिति मन्येत येन रूपेण विधानपरिषदा तत् पारितमासीत् ।

(५) यदि तया विधानसभया पारितं तां विधानपरिषदं तस्याः पुरःप्रशंसनानां कृते प्रेषितं च धनविधेयकं चतुर्दशानां दिवसानामुक्त-कालावधेरभ्यन्तरे तां विधानसभां प्रति न निवर्तितमस्ति तर्हि उक्तकाला-वधेः समाप्तौ उभाभ्यां सदनाभ्यां तेन रूपेण तत् पारितमिति मन्येत येन रूपेण लोकसभया तत् पारितमासीत् ।

"धनविधेयकानां" परिभाषा ।

१९९. (१) एतदध्यायस्य प्रयोजनानां कृते किमपि विधेयकं धन-विधेयकमिति मतं भवेत् यदि निम्नलिखितैः सर्वविषयैः तेषामन्यतमेन केनापि वा संबध्यमानानुपबन्धानेव तत् अन्तर्निवेशयति, यथा—

(क) कस्यापि करस्य आरोपणम्, विलोपनम्, परिहारः, परिवर्तनम्, विनियमनं वा;

भागः ६.—प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

अनुच्छेदः १९९

(ख) तद्राज्येन कर्तव्यस्य धनोद्धारस्य किंचित्प्रत्याभूति-दानस्य वा, अथवा तद्राज्येन अङ्गीकृतैः अङ्गीकर्तव्यैर्वा वित्तीयाभारैः संबन्धिनो विधेः संशोधनस्य, विनियमनम्;

(ग) तद्राज्यस्य संचितनिधेराकस्मिकतानिधेर्वा अभिरक्षा, एतादृशे निधौ धनस्य प्रवेशनं तस्मात् धनस्य प्रत्याहरणं वा;

(घ) तद्राज्यस्य संचितनिधेर्मध्यात् धनस्य विनियोगः;

(ङ) कस्यापि व्ययस्य राज्यस्य संचितनिधौ भारितव्यय-रूपेण घोषणम् एतादृशस्य कस्यापि व्ययस्य राशेर्वर्धनं वा;

(च) राज्यस्य संचितनिधौ राज्यस्य लोकलेखायां वा धनस्य प्रापणम्, अथवा एतादृशस्य धनस्य अभिरक्षा प्रचालनं वा; अथवा

(छ) (क)–आरभ्य (च)– पर्यन्तेषूपखण्डेषूल्लिखितविष-याणामन्यतमस्य कस्यापि कोऽप्यानुषङ्गिको विषयः ।

(२) किमपि विधेयकं धनविधेयकमस्तीति केवलमेतेनैव हेतुना न मतं भवेत् यत्, तत् अर्थदण्डानामन्यासां वा आर्थिकशास्तीनामारोपणाय, अनुज्ञप्तीनामर्थे यानि देयानि आचरितसेवानामर्थे वा यानि देयानि तेषां देयानामभियाचनार्थे प्रदानाय वोपबन्धयतीति; अथवा एतेनैव हेतुना यत्, तत् केनापि स्थानीयेन प्राधिकारिणा निकायेन वा स्थानीयप्रयोजना-नामर्थे कस्यापि करस्यारोपणायोत्सादनाय परिहाराय परिवर्तनाय विनिय-मनाय वोपबन्धयतीति ।

## भागः ६.--प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

### अनुच्छेदौ १९९-२००

(३) किमपि कस्यापि विधानपरिषद्वतो राज्यस्य विधानमण्डले पुरःस्थापितं विधेयकं धनविधेयकमस्ति न वेति यदि कोऽपि प्रश्नः उत्पद्यते तत्र एतादृशराज्यस्य विधानसभाया अध्यक्षस्य विनिश्चयोऽन्तिमो भवेत् ।

(४) १९८-तमानुच्छेदाधीनं यदा धनविधेयकं विधानपरिषदं प्रति प्रेषितं भवेत्; किंच यदा २००-तमानुच्छेदाधीनं तत् राज्यपालस्य समक्षम् अनुमत्यर्थमुपस्थापितं भवेत् तदा प्रत्येकस्मिन् धनविधेयके विधानसभाया अध्यक्षस्य हस्तसहितम् एतत् धनविधेयकमिति प्रमाणपत्रम् अङ्कितं भवेत् ।

विधेयकान् प्रत्यनुमतिः ।

२००. यदा किमपि विधेयकं राज्यविधानसभया पारितमस्ति, अथवा, कस्यापि विधानपरिषद्वतो राज्यस्य संबन्धे तद्राज्यविधानमण्डलस्योभाभ्यां सदनाभ्यां पारितमस्ति तदा तत् राज्यपालस्य समक्षमुपस्थापितं भवेत्; राज्यपालश्च घोषयेत् यदसौ तद् विधेयकमनुमन्यते वा यदसौ तस्यानुमतिं निरुणद्धि वेति—

परन्तु, राज्यपालः तद्विधेयकस्य स्वानुमत्यर्थमुपस्थापनात् परं तद्विधेयकम्, यदि तन्न धनविधेयकम्, यथाशीघ्रं निवर्तयितुं क्षमते एवं प्रार्थयता संदेशेन सह यत्,--तत् सदनं ते सदने वा तद् विधेयकं तस्मिन्नुल्लिखितानुपबन्धान् वा पुनर्विचारयेताम्, विशेषतश्च, एतादृशानां केषामपि संशोधनानां पुरःस्थापनाया वाञ्छनीयतां विचारयेताम्,— यादृशानि स स्वीये संदेशे पुरः प्रशंसयेत्; किंच यदा विधेयकमेवं निवर्तितं भवति तदा तत् सदनं ते सदने वा तद्विधेयकं तदनुसारेण पुनर्विचारयेताम्; किंच यदि तद्विधेयकं तत्सदनेन ताभ्यां सदनाभ्यां वा संशोधनेन सह विना वा पुनः पारितम्, अनुमत्यर्थं च राज्यपालस्य समक्षम् उपस्थापितं भवति तर्हि राज्यपालः तस्यानुमतिं न निरुन्ध्यात्—

परन्तु अन्यदपि, यदि यत्किमपि विधेयकं विधिर्जायेत तर्हि स उच्चन्यायालयस्य शक्तीः एवमुपकर्षयेत् येन स न्यायालयः अनेन

संविधानेन यत्स्थानस्य पूर्त्यै विरचितोऽस्ति तत्स्थानं भयापन्नं भवेत् इत्येवं राज्यपालस्य मतौ सत्यां राज्यपालः तद्विधेयकं नानुमन्येत किन्तु राष्ट्रपतेर्विचारार्थं रक्षेत् ।

२०१. यदा राज्यपालेन राष्ट्रपतेर्विचारार्थं किमपि विधेयकं रक्षितं भवति तदा राष्ट्रपतिर्घोषयेत् यदसौ तद्विधेयकमनुमन्यते वा यदसौ तस्यानुमतिं निरुणद्धि वेति— विचारार्थं रक्षितानि विधेयकानि ।

परन्तु, यत्र तद्विधेयकं धनविधेयकं नास्ति, तत्र राष्ट्रपतिः राज्यपालं निदेशयेत् यत् तद्विधेयकं यथायथं राज्यविधानमण्डलस्य सदनं सदने वा प्रति एतादृशेन संदेशेन सह निवर्तय यादृशः २००-तमानुच्छेदस्थे प्रथमपारन्तुके वर्णितोऽस्ति, किंच यदा किमपि विधेयकमेवं निवर्तितमस्ति तदा तत् सदनं ते सदने वा एतादृशस्य संदेशस्य प्राप्तेर्दिनाङ्कात् षण्णां मासानां कालावधेरभ्यन्तरे तदनुसारेण तत् पुनर्विचारयेताम्; किंच यदि तत् तत्सदनेन तत्सदनाभ्यां वा संशोधनेन सह विना वा पुनः पारितं भवति तर्हि तत् राष्ट्रपतेः समक्षं तस्य विचारार्थं पुनः उपस्थापितं भवेत् ।

## वित्तीयविषयाणां प्रक्रिया

२०२. (१) राज्यपालः प्रत्येकं वित्तीयवर्षस्य विषये तद्वर्षार्थम् अस्मिन् भागे "वार्षिकवित्तविवरणम्" इति निर्दिष्टं राज्यसंबन्धिनां प्राक्कलितानां प्राप्तीनां व्ययानां च विवरणं राज्यविधानमण्डलीयस्य सदनस्य सदनयोर्वा समक्षं निधापयेत् । वार्षिकवित्तविवरणम् ।

(२) वार्षिकवित्तविवरणे निरूपितानि व्ययस्य प्राक्कलनानि—

(क) यो व्ययोऽस्मिन् संविधाने राज्यस्य संचितनिधेरुपरि भारितव्ययरूपेण वर्णितः तस्य पूर्तये अपेक्षितान् राशीन्; तथा

## भागः ६.--प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

### अनुच्छेदः २०२

(ख) राज्यस्य संचितनिधितः करिष्यमाणत्वेन प्रस्थापितानामन्येषां व्ययानां पूर्तये अपेक्षितान् राशीन्;

पृथक् प्रदर्शयेयुः; किंच राज्यस्वगणनार्थं व्ययस्य अन्यस्मात् व्ययात् भेदं कुर्युः ।

(३) निम्नलिखितो व्ययः प्रत्येकराज्यस्य संचितनिधौ भारितो व्ययो भवेत्—

(क) राज्यपालस्य उपलब्धयो भक्तानि च; किंच तस्य पदेन संबध्यमानोऽन्यो व्ययः;

(ख) विधानसभाया अध्यक्षस्योपाध्यक्षस्य च तथा विधानपरिषदः सभापतेरुपसभापतेश्च वेतनानि भक्तानि च;

(ग) वृद्धिं निक्षेपनिधिभारं मोचनभारं च तथा उद्धारग्रहणेन ऋणसेवया ऋणमोचनेन च संबध्यमानमन्यं व्ययं चान्तर्भावयन्तः ऋणभाराः येषां तद्राज्यं दायि भवति;

(घ) कस्यापि उच्चन्यायालयस्य न्यायाधीशानां वेतनानि भक्तानि चोद्दिश्य व्ययः;

(ङ) कस्यापि न्यायालयस्य मध्यस्थन्यायाधिकरणस्य वा निर्णयस्याज्ञप्तेः मध्यस्थनिर्णयस्य वा निस्तारार्थं अपेक्षिता राशयः;

(च) अनेन संविधानेन राज्यविधानमण्डलेन वा विधिना एवं भारितः करणीयः इति घोषितः कोऽप्यन्यो व्ययः ।

## भागः ६.—प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

### अनुच्छेदौ २०३-२०४

२०३. (१) तस्य राज्यस्य संचितनिधौ भारितव्ययेन यादृक् संबध्यते तादृक् प्राक्कलनीयं विधानसभाया मतदानार्थं न आस्थापितं भवेत्; किन्तु एतत्खण्डगतस्य कस्यापि एवमर्थो न कृतो भवेत् यत् एतत् तेषां प्राक्कलनानामन्यतमस्य कस्यापि चर्चां विधानमण्डले निवारयति। प्राक्कलनानां विषये विधान-मण्डलस्य प्रक्रिया।

(२) उक्तप्राक्कलनानां यादृक् अन्यव्ययेन संबध्यते तादृक् विधानसभायाः पुरतः अनुदानानामभियाचनारूपेण स्थापितं भवेत्; किंच विधानसभा कस्या अप्यभियाचनाया अनुमतौ अनुमतेः प्रत्याख्याने वा कस्या अप्यभियाचनायाः तस्यामुल्लिखितं राशिमपकृष्य अनुमतौ वा शक्तिं भजेत।

(३) राज्यपालस्य पुरःप्रशंसनमन्तरेण अनुदानस्य काप्यभि-याचना न कृता भवेत्।

२०४. (१) २०३-तमानुच्छेदाधीनं तत्सभया अनुदानानि यदा कृतानि सन्ति तदुत्तरं यथासंभवं शीघ्रं राज्यस्य संचितनिधितः— विनियोगविधे-यकानि।

(क) तत्सभया एवं कृतानामनुदानानाम्; तथा

(ख) तस्य राज्यस्य संचितनिधौ भारितस्य किन्तु तत्सद-नस्य तयोः सदनयोर्वा समक्षं पूर्वं निहिते विवरणे प्रदर्शितराशेः कस्यामप्यवस्थायामनधि-कस्य व्ययस्य;

पूर्त्यर्थमपेक्षितानां सर्वधनानां विनियोगार्थमुपबन्धयितुं विधेयकं पुरःस्थापितं भवेत्।

(२) एवं कृतस्यानुदानस्य राशिं परिवर्तयितुं तस्य लक्ष्यं वा परि-वर्तयितुं राज्यस्य संचितनिधौ भारितस्य व्ययस्य राशिं परिवर्तयितुं वा यत् किमपि संशोधनं कार्यक्षमं भवेत् तत् राज्यविधानमण्डलस्य सदने कस्मि-

न्नपि अन्यतरस्मिन् सदने वा एतादृशे कस्मिन्नपि विधेयके प्रस्थापितं न भवेत्; किंच किमपि संशोधनम् एतत्खण्डाधीनमग्राह्यमस्ति न वा इत्य-स्मिन् पीठासीनस्य जनस्य विनिश्चयोऽन्तिमो भवेत्।

(३) एतदनुच्छेदीयोपबन्धानामनुसारेण पारितेन विधिना कृतस्य विनियोगस्यानुसारमन्तरेण २०५-२०६-तमानुच्छेदयोरुपबन्धानामधीनं राज्यस्य संचितनिधितः किमपि धनं प्रत्याहृतं न भवेत्।

अनुपूरकाणि, अपराणि, अधिकानि वानुदानानि।

२०५. (१) यदि—

(क) २०४-तमानुच्छेदीयोपबन्धानामनुसारेण प्रणीतेन विधिना कस्यामपि विशेषसेवायां वर्तमाने वित्तीय-वर्षे व्ययार्थं प्राधिकृतो राशिः तद्वर्षस्य प्रयो-जनानां कृते अपर्याप्त इत्यवगतोऽस्ति; अथवा तस्य वित्तीयवर्षस्य वार्षिकवित्तविवरणेन अचिन्तितायां सेवायामनुपूरकस्य अपरस्य वा व्ययस्य वर्तमाने वित्तीयवर्षे आवश्यकतोत्पन्नाऽस्ति; अथवा

(ख) वित्तीयवर्षस्य कस्यामपि सेवायां तत्सेवार्थं तद्वर्षा-र्थम् अनुदत्ताद् राशेरधिकं धनं व्ययितमस्ति,

तर्हि यथायथं राज्यपालः राज्यविधानमण्डलीयस्य तस्य सदनस्य तयोः सदनयोर्वा समक्षं तस्य व्ययस्य प्राक्कलितं राशिं प्रदर्शयदन्यद्विवरणं निधापयेत्; अथवा, तद्विधानसभायामेतादृश्या अधिकताया अभियाचना-मुपस्थितां कारयेत्।

(२) एतादृशस्य कस्यापि विवरणस्य तथा व्ययस्य अभियाच-नाया वा संबन्धे, तस्य राज्यस्य संचितनिधितः एतादृशस्य व्ययस्य अभि-याचनाया वा संबन्धे च, अनुदानस्य पूर्तये विनियोगं प्राधिकृतं कुर्वा-णस्य प्रणेतव्यस्य कस्यापि विधेः संबन्धेऽपि च २०२-२०३-२०४-तमानुच्छेदीयोपबन्धास्तथा प्रभावशालिनः भवेयुः यथा ते वार्षिकवित्तविवरणस्य

भागः ६.--प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

अनुच्छेदौ २०५-२०६

तस्मिन् वर्णितव्ययस्य च संबन्धे, अनुदानस्य कस्या अप्यभियाचनायाः संबन्धे च, तस्य राज्यस्य संचितनिधितः एतादृशस्य कस्यापि व्ययस्यानुदानस्य वा पूर्तये धनानां विनियोगं प्राधिकृतं कुर्वतः प्रणेतव्यस्य विधेः संबन्धे च कार्यक्षमा भवन्ति ।

२०६. (१) अस्याध्यायस्य पूर्वगाम्युपबन्धेषु सर्वमविगणय्य— लेखानुदानम्, प्रत्ययानुदानम्, अपवादानुदानं च ।

(क) कस्यापि वित्तीयवर्षस्य भागार्थं प्राक्कलितव्ययस्य संबन्धे कस्याप्यनुदानस्य, एतादृशानुदाने मतदानार्थं २०३-तमानुच्छेदे विहितायाः प्रक्रियायाः पूर्तौ लम्बितायां सत्याम्, तथा तस्य व्ययस्य संबन्धे २०४-तमानुच्छेदस्योपबन्धानामनुसारेण विधेः पारणे लम्बिते सति, तत्पूर्वं कर्तुम् ;

(ख) यदा कस्या अपि सेवाया महत्तया अनिश्चितरूपतया वा अभियाचना वार्षिकवित्तविवरणे साधारणतया वर्णितांशप्रपञ्चेन सह वर्णयितुं न शक्यते तदा राज्यस्य संपत्तिसाधनेषु अतर्किताया अभियाचनायाः पूर्त्यै अनुदानं कर्तुम् ;

(ग) कस्यापि वित्तीयवर्षस्य वर्तमानसेवाया यत् न भागो भवति तत् अपवादानुदानं कर्तुम् ;

राज्यविधानसभा शक्तिं भजेत; किंच उक्तानुदानानि येभ्यः प्रयोजनेभ्यः कृतानि भवन्ति तान्युद्दिश्य तस्य राज्यस्य संचितनिधितो धनस्य आदानं विधिना प्राधिकृतं कर्तुं तद्राज्यविधानमण्डलं शक्तिं भजेत ।

(२) २०३-२०४-तमानुच्छेदीयोपबन्धाः (१)-खण्डाधीनमनुदानस्य तथा तत्खण्डानुसारेण प्रणेतव्यस्य कस्यापि विधेश्च संबन्धे एतादृशा कार्यक्षमा भवेयुः, यथा ते वार्षिकवित्तविवरणे वर्णितं कमपि व्ययमुद्दिश्य किमप्यनुदानं कर्तुम्, तस्य राज्यस्य संचितनिधितः एता-

दृशस्य व्ययस्य पूर्त्यै धनानां विनियोगं कर्तुं च प्रणेतव्यस्य विधेः संबन्धे कार्यक्षमा भवन्ति ।

वित्तविधेयकानां संबन्धे विशेषा उपबन्धाः ।

२०७. (१) १९९–तमानुच्छेदीय (१)–खण्डस्य (क)–उपखण्डमारभ्य (च)–पर्यन्तेषूपखण्डेषूल्लिखितविषयाणामन्यतमाय कस्मै अपि उपबन्धं कुर्वद्विधेयकं संशोधनं वा राज्यपालस्य पुरःप्रशंसनमन्तरेण पुरःस्थापितं प्रस्तावितं वा न भवेत्; किंच एतादृशमुपबन्धं कुर्वद्विधेयकं विधानपरिषदि न पुरःस्थापितं भवेत्—

परन्तु कस्यापि करस्यापकर्षाय विलोपनाय वोपबन्धं कुर्वतः संशोधनस्य प्रस्तावार्थमेतत्खण्डाधीनं किमपि पुरःप्रशंसनं नापेक्षितं भवेत् ।

(२) किमपि विधेयकं संशोधनं वा उक्तविषयाणामन्यतमाय कस्मै अपि उपबन्धं करोतीति केवलेन एतेनैव हेतुना न मतं भवेत् यत्, तत् अर्थशास्तीनामन्येषां वा अर्थदण्डानामारोपणाय अनुज्ञप्तीनामर्थे देयानां निर्वृत्तसेवानामर्थे वा देयानाम् अभियाचनायै प्रदानाय वोपबन्धयतीति; अथवा एतेन हेतुना यत्, कस्यापि स्थानीयस्य प्राधिकारिणो निकायस्य वा स्थानीयप्रयोजनानामर्थे कस्यापि करस्य आरोपणाय उत्सादनाय परिहाराय परिवर्तनाय विनियमनाय वोपबन्धयतीति ।

(३) यद् विधेयकं यद्यधिनियमितं प्रवर्तितं च तर्हि राज्यस्य संचितनिधितः व्ययमन्तर्गृह्णाति; तत् राज्यविधानमण्डलसदनेन पारितं तावन्न भवेत् यावत् एतादृशे विधेयके विचारार्थं राज्यपालः तत्सदनस्य कृते पुरःप्रशंसनं न कुर्यात् ।

### साधारणतया प्रक्रिया

प्रक्रियाया नियमाः ।

२०८. (१) अस्य संविधानस्योपबन्धानामधीनं राज्यविधानमण्डलसदनं स्वीयप्रक्रियायाः स्वीयकार्यसंचालनस्य च विनियमनार्थं नियमान् प्रणेतुं क्षमम् ।

(२) यावत् (१)-खण्डाधीनं नियमा न प्रणीताः सन्ति तावत् अस्य संविधानस्य प्रारम्भादव्यवहितपूर्वं स्थानिप्रान्तस्य विधानमण्डलमुद्दिश्य ये प्रक्रियाया नियमाः स्थाय्यादेशाश्च प्रवृत्ता आसन् ते एतादृशानां रूपभेदानाम् अनुकूलनानां चाधीनं राज्यविधानमण्डलस्य संबन्धे कार्यक्षमा भवेयुः, यादृशानि यथायथं विधानसभाया अध्यक्षो विधानपरिषदः सभापतिर्वा तत्र कर्तुं क्षमते ।

(३) राज्यपालो विधानपरिषद्वति राज्ये विधानसभाया अध्यक्षेण विधानपरिषदः सभापतिना च परामृश्य तयोरुभयोः सदनयोः परस्परं संव्यवहारानुद्दिश्य प्रक्रियाया नियमान् प्रणेतुं क्षमते ।

२०९. वित्तीयकार्यस्य यथाकालं समाप्त्यर्थं राज्यविधानमण्डलं केनापि वित्तीयविषयेण राज्यस्य संचितनिधितः धनस्य विनियोगं कुर्वता केनापि विधेयकेन वा संबन्धे राज्यविधानमण्डलीयस्य सदनस्य सदनयोर्वा प्रक्रियां कार्यसंचालनं च विधिना विनियमयितुं क्षमते; किंच, यदि यावच्च एवं प्रणीतस्य कस्यापि विधेरुपबन्धः २०८-तमानुच्छेदीय-(१)-खण्डाधीनं राज्यविधानमण्डलस्य सदनेन अन्यतरेण केनापि सदनेन प्रणीतैर्नियमैः तदनुच्छेदीय-(२)-खण्डाधीनं वा राज्यविधानमण्डलस्य संबन्धे कार्यक्षमेण केनापि नियमेन स्थाय्यादेशेन वा असंगतोऽस्ति तर्ह्येतादृशः उपबन्धः अभिभावी भवेत् ।

वित्तीयकार्यस्य संबन्धे प्रक्रियाया राज्यविधानमण्डले विधिना विनियमनम् ।

२१०. (१) १७-भागगतं सर्वमविगणय्य, ३४८-तमानुच्छेदीयोपबन्धानामधीनं राज्यविधानमण्डलस्य कार्यं तस्य राज्यस्य राज्यभाषायां राज्यभाषासु हिन्दीभाषायाम् आङ्ग्लभाषायां वा निर्वर्तितं भवेत्—

विधानमण्डले प्रयोज्या भाषा ।

परन्तु यः पूर्वोक्तभाषासु स्वस्याभिव्यक्तिं पर्याप्तं कर्तुं न शक्नोति तस्मै सदस्याय यथायथं विधानसभाया अध्यक्षो विधानपरिषदः सभापतिर्वा एतादृशरूपेण कार्यकारी जनो वा स्वस्य मातृभाषायां तत्सदनं संबोधयितुम् अनुज्ञां दातुं क्षमते ।

## भागः ६.--प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

### अनुच्छेदाः २१०-२१३

(२) यदि राज्यविधानमण्डलं विधिना अन्यथा नोपबन्धयति तर्हि, अस्य संविधानस्य प्रारम्भात् पञ्चदशानां वर्षाणां कालावधेः समाप्तेः परम् अयमनुच्छेदः ईदृक् कार्यक्षमो भवेत् यत् एतस्मिन् "आङ्ग्लभाषायां वा" इत्येते शब्दा लुप्ता इव स्युः ।

विधानमण्डले चर्चायां निर्बन्धनम् ।

२११. उच्चतमन्यायालयस्योच्चन्यायालयस्य वा न्यायाधीशेन स्वकर्तव्यपालने कृतमाचरणमुद्दिश्य कापि चर्चा राज्यविधानमण्डले न भवेत् ।

न्यायालयाः विधानमण्डलस्य कार्यप्रवृत्तीनां परिप्रश्नं न कुर्युः ।

२१२. (१) प्रक्रियागतायाः कस्या अपि अभिकथिताया अनियमिततायाः आधारेण राज्यविधानमण्डलस्य कासामपि कार्यप्रवृत्तीनां मान्यतायां काप्यापत्तिः न कर्तव्या ।

(२) अनेन संविधानेनैतदधीनं वा राज्यविधानमण्डले प्रक्रियायाः कार्यसंचालनस्य वा विनियमनं कर्तुं व्यवस्थां रक्षितुं वा शक्तयो यस्मिन् निहिताः स राज्यविधानमण्डलस्य कोऽपि पदाधिकारी सदस्यो वा तासां शक्तीनां स्वकृतस्य प्रयोगस्य संबन्धे कस्यापि न्यायालयस्य क्षेत्राधिकारस्याधीनो न भवेत् ।

### अध्यायः ४.—राज्यपालस्य विधायिन्यः शक्तयः

विधानमण्डलस्य विश्रान्तिकाले राज्यपालस्य अध्यादेशप्रख्यापने शक्तिः ।

२१३. (१) राज्यविधानसभा यस्मिन् काले सत्रेऽस्ति, अथवा यत्र राज्ये विधानपरिषदस्ति तत्र विधानमण्डलस्योभे सदने यस्मिन् काले सत्रे स्तः, तस्मादन्यस्मिन् कस्मिन्नपि काले यदि राज्यपालः समाहितोऽस्ति यत् अचिरकार्यं तं अवश्यं प्रवर्तयन्त्यः परिस्थितयो विद्यन्ते तर्हि, असौ एतादृशानध्यादेशान् प्रख्यापयितुं क्षमते यादृशानपेक्षयन्त्यः परिस्थितयस्तेन प्रतीयन्ते—

परन्तु राज्यपालः, राष्ट्रपतेरनुदेशेन विना, कमप्येतादृशमध्यादेशं न प्रख्यापयेत्, यदि—

भागः ६.--प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

अनुच्छेदः २१३

(क) तानेवोपबन्धानन्तर्निवेशयद् विधेयकं विधानमण्डले स्वस्य पुरःस्थापनार्थम् अस्य संविधानस्याधीनं राष्ट्रपतेः पूर्वानुग्रहमपेक्षितमकरिष्यत्; अथवा

(ख) तानेवोपबन्धानन्तर्निवेशयद् विधेयकं राष्ट्रपतेर्विचारार्थं रक्षितुं तेन आवश्यकं मतमभविष्यत्; अथवा

(ग) तानेवोपबन्धानन्तर्निवेशयन् राज्यविधानमण्डलस्याधिनियमोऽस्य संविधानस्याधीनममान्योऽभविष्यत् यदि राष्ट्रपतेर्विचारार्थं तस्मिन् रक्षिते सति राष्ट्रपतेरनुमतिं स न प्राप्स्यत्।

(२) एतदनुच्छेदाधीनं प्रख्यापिते अध्यादेशे एतादृशमेव बलं कार्यक्षमता च विद्यते यादृशं राज्यपालेनानुमते राज्यविधानमण्डलस्याधिनियमेऽस्ति, किन्तु एतादृशः प्रत्येकमध्यादेशः—

(क) राज्यविधानसभायाः समक्षं निहितो भवेत्, अथवा, यत्र राज्ये विधानपरिषदस्ति तत्र उभयोः सदनयोः समक्षं निहितो भवेत्; किंच विधानमण्डलस्य पुनःसमागमात् षण्णां सप्ताहानां समाप्तौ, यदि तत्कालावधेः समाप्तेः प्राक् विधानसभया तस्य निरनुमोदनस्य संकल्पः पारितोऽस्ति विधानपरिषदा च--कापि चेदस्ति--स्वीकृतोऽस्ति तर्हि, यथायथं तत्संकल्पस्य पारणोत्तरं तत्परिषदा कृतस्य तत्संकल्पस्वीकरणस्योत्तरं वा, प्रवर्तनाद् विरमेत्;

(ख) राज्यपालेन कस्मिन्नपि काले प्रत्याहृतो भवितुमर्हति।

व्याख्याः--यदा विधानपरिषद्वतो राज्यस्य विधानमण्डलस्य सदने पुनः समागमार्थं भिन्नयोर्दिनाङ्कयोः आहूते भवतः तदा एतत्खण्डस्य प्रयो-

## भागः ६.--प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

## अनुच्छेदाः २१३-२१६

जनानामर्थे षण्णां सप्ताहानां कालावधिः तयोर्दिनाङ्कयोरुत्तराद्दिनाङ्कात् परिगणितो भवेत् ।

(३) य उपबन्धो यदि राज्यपालेनानुमते राज्यविधानमण्डलस्याधिनियमे अधिनियमितः तर्हि मान्यो न भवेत्, तमुपबन्धं यदि यावन्मात्रं चैतदनुच्छेदाधीनमध्यादेशः करोति तर्हि स शून्यो भवेत्—

परन्तु योऽधिनियमः संसदोऽधिनियमेन वर्तमानविधिना वा समवर्तिसूच्यां प्रगणितविषयस्य संबन्धे विरुद्धोऽस्ति तस्य राज्यविधानमण्डलीयस्याधिनियमस्य कार्यक्षमतया संबध्यमानानाम् एतत्संविधानीयोपबन्धानामर्थे राष्ट्रपतेर्नियोगानामनुसरणार्थम् एतदनुच्छेदाधीनं योऽध्यादेशः प्रख्यापितोऽस्ति स राज्यविधानमण्डलीयोऽधिनियम इति मतो भवेत् यो राष्ट्रपतेर्विचारार्थं रक्षितस्तेनानुमतश्चास्ति ।

### अध्यायः ५.—राज्यानामुच्चन्यायालयाः

राज्यानां कृते उच्चन्यायालयाः ।

२१४. (१) प्रत्येकराज्यस्योच्चन्यायालयो भवेत् ।

(२) अस्य संविधानस्य प्रारम्भादव्यवहितपूर्वं कस्यापि प्रान्तस्य संबन्धे क्षेत्राधिकारस्य प्रयोक्ता उच्चन्यायालयः तत्स्थानीयराज्यस्योच्चन्यायालय इति अस्य संविधानस्य प्रयोजनानां कृते मतो भवेत् ।

(३) अस्याध्यायस्योपबन्धा अस्मिन्ननुच्छेदे निर्दिष्टं प्रत्येकन्यायालयं विषयीकुर्यात् ।

उच्चन्यायालयाः अभिलेखन्यायालयाः ।

२१५. प्रत्येकोच्चन्यायालयोऽभिलेखन्यायालयो भवेत्, स्वावमाने दण्डनशक्तिमन्तर्भावयन्तीः एतादृशन्यायालयस्य सर्वाः शक्तीश्च भजेत ।

उच्चन्यायालये घटनम् ।

२१६. मुख्यन्यायाधिपतिना, एतादृशैरन्यैर्न्यायाधीशैश्च प्रत्येकोच्चन्यायालयो भवेत् यादृशान् राष्ट्रपतिः कालेकाले नियोक्तुमावश्यकान् मन्वीत—

परन्तु राष्ट्रपतिः यादृशीमधिकतमां संख्यां कालेकाले तन्न्यायालय-संबन्धे नियतां कुर्यात् तादृशीं संख्याम् एवं नियुक्ता न्यायाधीशाः कदापि नातिवर्तेरन् ।

२१७. (१) भारतस्य मुख्यन्यायाधिपतिना तद्राज्यस्य राज्यपालेन च, मुख्यन्यायाधिपतेरन्यन्यायाधीशस्य नियुक्तिविषये तद्राज्योच्चन्याया-लयस्य मुख्यन्यायाधिपतिना च सह परामृश्य राष्ट्रपतिः स्वहस्तेन स्व-मुद्रया चाङ्कितेनाधिपत्रेण उच्चन्यायालयस्य प्रत्येकं न्यायाधीशं नियुक्तं कुर्यात्; स च न्यायाधीशो यावत् वर्षाणां षष्टिः वयः नाप्नोति तावत् पदं धारयेत्—

उच्चन्यायालये न्यायाधीशस्य नियुक्तिस्तस्य पदस्य प्रति-बन्धाश्च ।

परन्तु —

(क) न्यायाधीशः राष्ट्रपतिं संबोध्य लिखितेन स्वहस्ताङ्कि-तेन लेखेन स्वपदं त्यक्तुं क्षमते;

(ख) उच्चतमन्यायालयस्य न्यायाधीशमपसारयितुं १२४-तमानुच्छेदस्य (४)-खण्डे उपबन्धितरीत्या राष्ट्र-पतिर्न्यायाधीशं स्वपदादपसारयितुं क्षमते;

(ग) कस्यापि न्यायाधीशस्य पदम्, राष्ट्रपतिनोच्चतमन्याया-लये न्यायाधीशरूपेण तस्य नियुक्तौ कृतायाम् अथवा राष्ट्रपतिना भारतस्य राज्यक्षेत्राभ्यन्तरेऽ-न्योच्चन्यायालये न्यायाधीशरूपेण तस्य स्थानान्तरे कृते, रिक्तं भवेत् ।

(२) कोऽपि जनः उच्चन्यायालयस्य न्यायाधीशरूपेण नियु-क्तेरर्हो न तावत् भवेत् यावदसौ भारतस्य नागरिको न भवति; किंच यावत्—

(क) भारतस्य राज्यक्षेत्रे न्यूनान्न्यूनं दश वर्षाणि न्याय-संबन्धिपदं न धारितवानस्ति; अथवा

(ख) प्रथमानुसूच्यामुल्लिखिते कस्मिन्नपि राज्ये उच्चन्यायालयस्य अथवा एतादृशयोर्द्वयोरधिकानां वा न्यायालयानां न्यूनान्न्यूनं दश वर्षाणि निरन्तरक्रमेण अधिवक्ता न भूतोऽस्ति ।

व्याख्या.—अस्य खण्डस्य प्रयोजनानां कृते—

(क) कोऽपि जनो यस्मिन् कालावधौ उच्चन्यायालयस्याधिवक्ता भूतोऽस्ति तस्य संगणनायां स कोऽपि कालावधिरन्तर्भावितो भवेत् यस्मिन् स जनोऽधिवक्ता भूतोऽस्ति ततः परं न्यायसंबन्धिपदं च धारितवान्;

(ख) कोऽपि जनो यस्मिन् कालावधौ भारतस्य राज्यक्षेत्रे न्यायसंबन्धिपदं धारितवान् अथवा कस्याप्युच्चन्यायालयस्याधिवक्ता भूतोऽस्ति तस्य संगणनायाम् अस्मात् संविधानात् प्राक्तनीयः स कोऽपि कालावधिरप्यन्तर्भावितो भवेत् यस्मिन् सः, १९४७–तमवत्सरीयस्य अगस्तस्य १५–तः प्राक् १९३५–तमवत्सरीयभारतशासनाधिनियमेन परिभाषिते भारते यत् समाविष्टमभूत् तस्मिन् कस्मिन्नपि राज्यक्षेत्रे, न्यायसंबन्धिपदं धारितवान्, अथवा एतादृशे कस्मिन्नपि राज्यक्षेत्रे उच्चन्यायालयस्याधिवक्ता भूतोऽस्ति ।

उच्चतमन्यायालयेन संबध्यमानैरुपबन्धविशेषैरुच्चन्यायालयानां विषयीकरणम् ।

२१८. यथा १२४–तमानुच्छेदीय–(४)--(५)–खण्डयोरुपबन्धाः उच्चतमन्यायालयं विषयीकुर्वन्ति तथा ते उच्चतमन्यायालयस्य निर्देशानां स्थानेषु उच्चन्यायालयस्य निर्देशानां संनिवेशेन कमप्युच्चन्यायालयं विषयीकुर्युः ।

## भागः ६.--प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

### अनुच्छेदाः २१९-२२२

२१९. राज्ये उच्चन्यायालयस्य न्यायाधीशरूपेण नियुक्तः प्रत्येकं जनः स्वपदारोहणात् पूर्वं तृतीयानुसूच्यां तदर्थं प्रोक्तप्रपत्रमनुसृत्य राज्य-संबन्धिराज्यपालस्य तदर्थं तेन नियुक्तस्य जनस्य वा समक्षं शपथं प्रतिज्ञानं वा कुर्यात् स्वहस्ताङ्कितं च तत् कुर्यात् । उच्चन्यायालयस्य न्यायाधीशानां शपथः प्रतिज्ञानं वा ।

२२०. यः उच्चन्यायालयस्य न्यायाधीशरूपेण पदं धारितवान् स कोऽपि जनोऽस्य संविधानस्य प्रारम्भात् परं भारतराज्यक्षेत्रस्याभ्यन्तरे कस्मिन्नपि न्यायालये कस्यापि प्राधिकारिणः समक्षं विधिवृत्तिं तत्संबद्धं कार्यं वा न कुर्यात् । न्यायाधीशैर्न्यायालयेषु कस्यापि प्राधिकारिणः समक्षं विधिवृत्तेः करणे प्रतिषेधः ।

२२१. (१) प्रत्येकोच्चन्यायालयस्य न्यायाधीशेभ्यः एतादृशानि वेतनानि प्रदत्तानि भवेयुः यादृशानि द्वितीयानुसूच्यामुल्लिखितानि सन्ति । न्यायाधीशानां वेतनानि इत्यादि ।

(२) प्रत्येकं न्यायाधीशः एतादृशेषु भक्तेषु अनुपस्थित्यनुमते-र्निवृत्तिवेतनस्य च संबन्धे एतादृशेष्वधिकारेषु च स्वत्ववान् भवेत् यादृशानि कालेकाले संसदा विधिना तदधीनं वा निर्धारितानि भवेयुः; किंच यावत् एवं न निर्धारितानि तावत् एतादृशेषु भक्तेषु अधिकारेषु च, यादृशानि द्वितीयानुसूच्यामुल्लिखितानि सन्ति——

परन्तु न्यायाधीशस्य भक्तानि अनुपस्थित्यनुमतेर्निवृत्तिवेतनस्य च संबन्धे अधिकारा वा तस्य नियुक्तेः परं तस्य लाभापकर्षकारित्वेन परि-वर्तितानि भवेयुः ।

२२२. (१) राष्ट्रपतिः भारतस्य मुख्यन्यायाधिपतिना परामर्शात् परम् एकस्मादुच्चन्यायालयात् भारतराज्यक्षेत्रेऽन्यस्मिन् कस्मिन्नप्युच्चन्याया-लये न्यायाधीशं स्थानान्तरितं कर्तुं क्षमते । एकस्मादुच्चन्यायालयात् न्यायाधीशस्य अन्यस्मिन् स्थानान्तरम् ।

(२) यदा न्यायाधीश एवं स्थानान्तरितोऽस्ति तदा सः, यस्मिन् कालावधावन्यस्मिन् न्यायालये न्यायाधीशरूपेण सेवां करोति तस्मिन् काला-वधौ, स्ववेतनादतिरिक्तेषु प्रतिकरात्मकेष्वेतादृशेषु भक्तेषु स्वत्ववान् भवेत् यादृशानि संसदा विधिना निर्धारितानि भवेयुः किंच यावत् एवं न

निर्धारितानि, तावत् तादृशेषु प्रतिकरात्मकेषु भक्तेषु यादृशानि राष्ट्रपति-रादेशेन नियतानि कुर्यात् ।

कार्यकारिणो मुख्यन्यायाधिपतेर्नियुक्तिः ।

२२३. यदोच्चन्यायालयस्य मुख्यन्यायाधिपतेः पदं रिक्तमस्ति यदा वैतादृशो मुख्यन्यायाधिपतिरनुपस्थित्या अन्येन वा हेतुना स्वपदकर्तव्यानां पालनेऽसमर्थोऽस्ति तदा तत्पदस्य कर्तव्यानि तन्न्यायालयस्य न्यायाधीशानामन्यतमेन केनाप्येतादृशेनैकेन पालितानि भवेयुर्यादृशं राष्ट्रपतिः तदर्थं नियोजयितुं क्षमते ।

उच्चन्यायालयानामुपवेशनेषु निवृत्तन्यायाधीशानामुपस्थितिः

२२४. एतदध्यायगतं सर्वमविगणय्य, कस्यापि राज्यस्योच्चन्यायालयस्य मुख्यन्यायाधिपतिः कस्मिन्नपि काले, राष्ट्रपतेः पूर्वसंमत्या, तद्राज्यस्योच्चन्यायालये न्यायाधीशरूपेणोपवेशनं कार्यकरणं च तं कमपि जनं प्रार्थयितुं क्षमते यस्तन्न्यायालयस्यान्यस्य कस्याप्युच्चन्यायालयस्य वा पदं धारितवान्; किंच एवं प्रार्थितः एतादृशः प्रत्येकं जनः एवमुपविशन् कार्यं कुर्वंश्च यदा भवेत् तदा एतादृशेषु भक्तेषु स्वत्ववान् भवेत् यादृशानि राष्ट्रपतिरादेशेन निर्धारयेत्, तदुच्चन्यायालयीयन्यायाधीशस्य सर्वान् क्षेत्राधिकारान् शक्तीर्विशेषाधिकारांश्च भजेत, किन्तु अन्यथा तस्योच्चन्यायालयस्यान्यथा न्यायाधीश इति न मतो भवेत्—

परन्तु यावत् पूर्वोक्तः कोऽपि एतादृशो जनः एवं कर्तुं न संमनुते तावत्, स तदुच्चन्यायालयस्य न्यायाधीशरूपेणोपविशेत् कार्यं कुर्याच्च इति एतदनुच्छेदगतं किमप्यपेक्षते इति न मन्येत ।

विद्यमानानामुच्चन्यायालयानां क्षेत्राधिकाराः ।

२२५. अस्य संविधानस्योपबन्धानामधीनम् अनेन संविधानेन विधानमण्डलाय प्रदत्तानां शक्तीनाम् आश्रयेण समुचितेन विधिमण्डलेन प्रणीतस्य कस्यापि विधेरनुबन्धानामधीनं च, कस्यापि वर्तमानस्योच्चन्यायालयस्य क्षेत्राधिकारः प्रशासितो विधिश्च तथा तन्न्यायालयस्य न्यायाधीशानां तस्मिन्न्यायालये न्यायप्रशासनस्य संबन्धे प्रातिस्विकाः शक्तयश्च तन्न्यायालयस्य नियमानां प्रणयने तथा तन्न्यायालये उपवेशनानां नियमने तथा तत्सदस्यानामेकाकिभिः खण्डन्यायालयेषु वोपवेशनानां

भागः ६.—प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

अनुच्छेदाः २२५-२२७

नियमने सर्वां शक्तिमन्तर्भावयन्त्यः तथैव भवेयुः यथा अस्य संविधानस्य प्रारम्भात् पूर्वमासन्—

परन्तु राजस्वस्य संबन्धिनि तस्य संग्रहार्थमादेशितस्य कृतस्य वा कस्यापि कार्यस्य संबन्धिनि वा कस्मिन्नपि विषये उच्चन्यायालयानामन्यतमस्य कस्याप्यारम्भिकक्षेत्राधिकारप्रयोगोऽस्य संविधानस्य प्रारम्भात् पूर्वं यस्य कस्यापि निर्बन्धनस्य अधीनम् आसीत् तन्निर्बन्धनमेतादृशं क्षेत्राधिकारं न विषयीकुर्यात् ।

२२६. (१) ३२–तमानुच्छेदगतं सर्वमविगणय्य, प्रत्येकमुच्चन्यायालयः, येषां संबन्धे स स्वीयं क्षेत्राधिकारं प्रयोजयति तेषु सर्वेषु राज्यक्षेत्रेषु, अस्य संविधानस्य तृतीयभागेन प्रदत्तानामधिकाराणामन्यतमस्य कस्यापि प्रवर्तनार्थमन्यस्मै कस्मै अपि प्रयोजनाय वा तेषां राज्यक्षेत्राणामभ्यन्तरे समुचितविषयानधिकृत्य केनापि शासनेन सहितस्य कस्यापि जनस्य प्राधिकारिणो वा कृते बन्दीप्रत्यक्षीकरणपरमादेशप्रतिषेधाधिकारपृच्छोत्प्रेषणस्वरूपान् तदन्यतमस्य कस्यापि वा स्वरूपलेखान् अन्तर्भावयतां निदेशानाम् आदेशानां लेखानां वा प्रचालने शक्तिं भजेत । लेखविशेषाणां प्रचालने उच्चन्यायालयानां शक्तिः ।

(२) (१)–खण्डेनोच्चन्यायालयाय प्रदत्ता शक्तिः ३२–तमानुच्छेदीय–(२)–खण्डेनोच्चतमन्यायालयाय प्रदत्तायाः शक्तेरपकर्षाय न भवेत् ।

२२७. (१) प्रत्येकमुच्चन्यायालयः तेषु सर्वेषु राज्यक्षेत्रेषु सर्वेषां न्यायालयानां न्यायाधिकरणानां चाधीक्षणं कुर्यात्, येषां संबन्धे स क्षेत्राधिकारं प्रयुङ्क्ते । सर्वेषां न्यायालयानामधीक्षणे उच्चतमन्यायालयस्य शक्तिः ।

(२) पूर्वगाम्युपबन्धस्य व्यापकतायां प्रतिकूलं प्रभावमकृत्वा, उच्चन्यायालयः—

## भागः ६.—प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

### अनुच्छेदौ २२७–२२८

(क) एतादृशे न्यायालये विवरणीः प्रेष्यताम् इत्याज्ञां कर्तुं क्षमते;

(ख) एतादृशानां न्यायालयानां कार्यप्रणाल्याः कार्यप्रवृत्तीनां च विनियमनाय साधारणान् नियमान् प्रणेतुं प्रचालयितुं च प्रपत्राणि विधातुं क्षमते; किंच

(ग) एतादृशानां केषामपि न्यायालयानां पदाधिकारिभिः येषामनुसारेण पुस्तकानि प्रविष्टयो लेखाश्च गोप्याः तानि प्रपत्राणि विधातुं क्षमते ।

(३) एतादृशन्यायालयानां शेरिफाय सर्वेभ्यो लिपिकारेभ्यो पदाधिकारिभ्यश्च तथा तेषु वृत्तिं कुर्वद्भ्यो न्यायवादिभ्योऽधिवक्तृभ्यो विधिवृत्तिकरेभ्यो यानि देयान्यनुमन्तव्यानि तेषां देयानां सारणीरप्युच्च-न्यायालयः स्थापयेत्—

परन्तु (२)–खण्डस्य (३)–खण्डस्य वाधीनं प्रणीताः केऽपि नियमाः विहितानि कान्यपि प्रपत्राणि व्यवस्थापिताः का अपि सारण्यो वा तत्काले प्रवृत्तस्य कस्यापि विधेरुपबन्धेन विसंगता न भवेयुः; किंच राज्यपालस्य पूर्वानुमोदनं चापेक्षेरन् ।

(४) एतदनुच्छेदगतं किमपि उच्चन्यायालयाय सशस्त्रबलैः संबध्यमानेन केनापि विधिना तदधीनं वा संघटिते कस्मिन्नपि न्यायालये न्यायाधिकरणे वा अधीक्षणस्य शक्तीः प्रददातीति मतं न भवेत् ।

वादविशेषाणाम् उच्चन्यायालयाय हस्तान्तरणम् ।

२२८. यद्युच्चन्यायालयः समाहितो भवति यत् स्वाधीने न्यायालये लम्बितः कोऽपि वादोऽस्य संविधानस्य निर्वचनेन संबन्धिनं कमपि सारवन्तं विधिप्रश्नमन्तर्गृह्णाति यस्य निर्धारणं तस्य वादस्य व्यवस्थादानाय आवश्यकमस्ति तर्हि, स तं वादं प्रत्याहरेत्; किंच—

(क) तस्मिन् वादे स्वयमेव व्यवस्थादानं कर्तुं क्षमते;

अथवा

(ख) उक्तं विधिप्रश्नं निर्धारयितुं क्षमते, तथा तं वादं तं न्यायालयं प्रति तत्प्रश्ननिर्णयस्य प्रतिलिप्या सह निवर्तयितुं क्षमते यस्मात् स वादः प्रत्याहृत आसीत्; किंचोक्तो न्यायालयः तस्य प्राप्तेः पश्चात् एतादृशनिर्णयमनुरुध्य तस्य वादस्य व्यवस्थादानाय प्रक्रमेत ।

२२९. (१) उच्चन्यायालयस्य पदाधिकारिणां सेवकानां च नियुक्तयः तन्न्यायालयस्य मुख्यन्यायाधिपतिना तन्निर्दिष्टेन तन्न्यायालयस्यान्येनैतादृशेन न्यायाधीशेन पदाधिकारिणा वा कृता भवेयुः— उच्चन्यायालयानां पदाधिकारिणश्च सेवकाश्च व्ययाश्च ।

परन्तु यस्मिन् न्यायालयस्य स्वीयं मुख्यं स्थानमस्ति तस्य राज्यस्य राज्यपालो नियमेनैतदपेक्षेत यत् नियमे यादृश्योऽवस्था उल्लिखिताः स्युः एतादृशीष्ववस्थासु यः कोऽपि जनः तन्न्यायालयेन पूर्वमेवासंलग्नः राज्यलोकसेवायोगेन परामर्शमन्तरेण तन्न्यायालयेन संपृक्ते कस्मिन्नपि पदे न नियुक्तो भवेत् ।

(२) राज्यस्य विधानमण्डलेन प्रणीतस्य कस्यापि विधेरुपबन्धानामधीनम्, उच्चन्यायालयस्य पदाधिकारिणां सेवकानां च सेवायाः प्रतिबन्धा एतादृशा भवेयुः यादृशाः तन्न्यायालयस्य मुख्यन्यायाधिपतिना तदर्थं नियमानां प्रणयनार्थं मुख्यन्यायाधिपतिप्राधिकृतेन तन्न्यायालयस्यान्येन न्यायाधीशेन पदाधिकारिणा वा प्रणीतैर्नियमैर्विहिता भवेयुः—

परन्तु एतत्खण्डानुसारेण प्रणीता नियमाः, यावत्पर्यन्तं वेतनैर्भक्तैर्विरामानुमत्या निवृत्तिवेतनैर्वा संबध्यन्ते तावत्पर्यन्तम्, यस्मिन् उच्चन्यायालयस्य स्वीयं मुख्यं स्थानमस्ति तद्राज्यसंबन्धिराज्यपालस्यानुमोदनमपेक्षेरन् ।

(३) उच्चन्यायालयस्य प्रशासनव्ययाः, तन्न्यायालयस्य पदाधिकारिभ्यः सेवकेभ्यश्च तेषां संबन्धे च प्रदेयानि सर्वाणि वेतनानि भक्तानि

निवृत्तिवेतनानि चान्तर्भावयन्तः, तद्राज्यस्य संचिते निधौ भारिता भवेयुः; किंच तन्न्यायालयेन आदेयानि देयान्यन्यानि च धनानि तस्य निधेर्भागा भवेयुः।

उच्चन्यायालयानां क्षेत्राधिकारस्य विस्तारोऽपवर्जनं च।

२३०. संसद् विधिना--

(क) यस्मिन्नुच्चन्यायालयस्य मुख्यं स्थानमस्ति तद्राज्याभ्यन्तरे अनन्तर्गते क्षेत्रे तस्माद्राज्याद्भिन्ने वा प्रथमानुसूच्यामुल्लिखिते राज्ये उच्चन्यायालयस्य क्षेत्राधिकारं विस्तारयितुं क्षमते; अथवा

(ख) तादृशात् क्षेत्रात् तादृशात् प्रथमानुसूच्यामुल्लिखिताद्राज्याद्वा;

उच्चन्यायालयस्य क्षेत्राधिकारमपवर्जयितुं क्षमते।

कस्यापि राज्यस्योच्चन्यायालयस्य तद्राज्याद्बहिः क्षेत्राधिकारं भजमानस्य क्षेत्राधिकारमुद्दिश्य विधीनां प्रणयने विधानमण्डलानां शक्तिषु निर्बन्धनानि।

२३१. यत्रोच्चन्यायालयः, यस्मिन्नस्य मुख्यं स्थानमस्ति तस्माद्राज्याद् बहिर्भूतस्य क्षेत्रस्य संबन्धे क्षेत्राधिकारं प्रयुङ्क्ते तत्र एतत्संविधानस्थस्य कस्याप्येवमर्थो न कृतो भवेत्, यत् तत्--

(क) यस्मिन्नस्य मुख्यं स्थानमस्ति तस्य राज्यस्य विधानमण्डलाय तं क्षेत्राधिकारं वर्धयितुं निर्बन्धयितुं विलोपयितुं वा शक्तिप्रदानं करोतीति;

(ख) प्रथमानुसूच्याः (क)--भागे (ख)--भागे वोल्लिखितस्य--यस्मिन्नेतादृशं क्षेत्रमवस्थितमस्ति-- तस्य राज्यस्य विधानमण्डलाय तं क्षेत्राधिकारं विलोपयितुं शक्तिप्रदानं करोतीति; अथवा

(ग) एतादृशाय कस्मा अपि क्षेत्राय तदर्थं विधीनां प्रणयने शक्तिं भजमानं विधानमण्डलं तन्न्यायालयस्य तत्क्षेत्रसंबन्धे तन्न्यायालयस्य (ख)--खण्डा-

धीनं क्षेत्राधिकारमुद्दिश्यैतादृशविधीनां पारणान्निवारयतीति, यादृशानां तद्विधानमण्डलं यदि तन्न्यायालयस्य मुख्यं स्थानं तस्मिन् क्षेत्रेऽभविष्यत् तर्हि पारणे क्षममभविष्यत् ।

२३२. यत्रोच्चन्यायालयः प्रथमानुसूच्यामुल्लिखितानामनेकराज्यानां संबन्धे तादृशराज्यभागभूतस्य राज्यस्य क्षेत्रस्य वा क्षेत्राधिकारं प्रयुङ्क्ते तत्र— निर्वचनम् ।

(क) अस्मिन्नध्याय उच्चन्यायालयस्य न्यायाधीशानां संबन्धे राज्यपालस्य निर्देशाः यास्मिन्न्यायालयस्य मुख्यं स्थानमस्ति तद्राज्यस्य राज्यपालस्य निर्देशाः, इत्यर्थः कृतो भवेत्;

(ख) अधीनन्यायालयानामर्थे राज्यपालस्य नियमेषु प्रपत्रेषु सारणीषु चानुमोदनस्य निर्देशो यस्मिन्नधीनन्यायालयोऽवस्थितोऽस्ति तद्राज्यस्य राज्यप्रमुखेन राज्यपालेन वा दत्तस्य तत्संबन्ध्यनुमोदनस्य निर्देश इत्यर्थः, अथवा, स यदि प्रथमानुसूच्याः (क)–भागे (ख)–भागे वोल्लिखितस्य कस्यापि राज्यस्याभागभूते क्षेत्रेऽवस्थितोऽस्ति तर्हि राष्ट्रपतिना दत्तस्य तत्संबन्ध्यनुमोदनस्य निर्देश इत्यर्थः, कृतो भवेत्; किंच

(ग) तद्राज्यस्य संचितस्य निधेर्निर्देशा यस्मिन् तन्न्यायालयस्य मुख्यं स्थानमस्ति तस्य राज्यस्य संचितस्य निधेर्निदशाः इत्यर्थः कृतो भवेत् ।

## अध्यायः ६.—अधीनन्यायालयाः

२३३. (१) कस्मिन्नपि राज्ये जनानां मण्डलन्यायाधीशरूपेण नियुक्तयः मण्डलन्यायाधीशानां च पदान्तरणं पदोन्नतिश्च एतादृशस्य मण्डलन्यायाधीशानां नियुक्तिः ।

## भागः ६.--प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

### अनुच्छेदाः २३३-२३६

राज्यस्य संबन्धे क्षेत्राधिकारं प्रयुञ्जानेनोच्चन्यायालयेन परामृश्य, तद्राज्यस्य राज्यपालेन कृता भवेयुः ।

(२) संघस्य राज्यस्य वा सेवायां पूर्वमसन् जनः, यद्यसौ सप्तभ्यो वर्षेभ्योऽन्यूनकालमधिवक्ता विधिवृत्तिकरो वा भूतोऽस्ति, उच्चन्यायालयेन नियुक्तये प्रशंसितश्चास्ति तर्हि, मण्डलन्यायाधीशरूपेण नियुक्तेः पात्रं भवेत् ।

न्यायसंबन्धिसेवायां मण्डलन्यायाधीशेभ्योऽन्येषां जनानां संग्रहणम् ।

२३४. राज्यस्य न्यायसंबन्धिसेवायां मण्डलन्यायाधीशेभ्योऽन्येषां जनानां नियुक्तयो राज्यलोकसेवावेक्षकेनैतादृशस्य राज्यस्य संबन्धे क्षेत्राधिकारं प्रयुञ्जानेनोच्चन्यायालयेन च परामर्शात् परं तद्राज्यस्य राज्यपालेन तदर्थं तेन प्रणीतानां नियमानामनुरोधेन कृता भवेयुः ।

अधीनन्यायालयानां नियन्त्रणम् ।

२३५. राज्यस्य न्यायसंबन्धिसेवायां स्थितानां मण्डलन्यायाधीशपदादवरं किमपि पदं धारयमाणानां च जनानां पदान्तरणं पदोन्नतिं विरामानुमतिं चान्तर्भाव्य मण्डलन्यायालयानां तदधीनानां न्यायालयानां च नियन्त्रणं उच्चन्यायालये निहितं भवेत्; एतदनुच्छेदगतं तु किमपि एतादृशाज्जनात्, स स्वस्य सेवायाः प्रतिबन्धानां विनियमयितुः अथवा एतादृशस्य विधेरधीनं विहितानां सेवाप्रतिबन्धानामनुरोधादन्यथोच्चन्यायालयं प्राधिकृतं कुर्वाणस्य विधेरधीनं यमधिकारं भक्तुं क्षमते तस्य पुनर्विचारप्रार्थनाया अधिकारस्य हरणकारि, इत्यर्थो न कृतो भवेत् ।

निर्वचनम् ।

२३६. अस्मिन्नध्याये—

(क) " मण्डलन्यायाधीशः " इति शब्दसमूहे नगरव्यवहारन्यायालयस्य न्यायाधीशः, अपरो मण्डलन्यायाधीशः, संयुक्तो मण्डलन्यायाधीशः, मण्डलोपन्यायाधीशः, लघुवादन्यायालयस्य मुख्यो न्यायाधीशः, मुख्यः 'प्रेसिडेन्सी' दण्डाधिकारी, अपरो मुख्यः 'प्रेसिडेन्सी' दण्डाधिकारी, आपरा-

भागः ६.--प्रथमानुसूचीस्थ-(क)-भागीयराज्यानि

अनुच्छेदौ २३६-२३७

धिकन्यायाधीशः, अपरः आपराधिकन्यायाधीशः, आपराधिकोपन्यायाधीशश्च अन्तर्भवति;

(ख) "न्यायपालिका सेवा" इति शब्दसमूहेन मण्डल-न्यायाधीशपदस्य मण्डलन्यायाधीशपदादवराणां व्यवहारन्यायसंबन्धिपदानां च पूर्तय उद्दिष्टैरेव केवलैर्जनैः भूता सेवाऽभिधीयते ।

वर्गविशेषस्य वर्गविशेषाणां वा दण्डाधिकारिणामेतदध्यायस्थोपबन्धैर्विषयीकरणम् ।

२३७. राज्यपालः सार्वजनिकाधिसूचनया निदेशं दातुं क्षमते, यत् अस्याध्यायस्य पूर्वगता उपबन्धास्तदधीनं प्रणीता नियमाश्च, स यादृशं दिनाङ्कं नियमयेत् एतादृशात् दिनाङ्कात् तद्राज्यस्थानां केषामपि दण्डाधिकारिणां कस्यापि वर्गस्य वर्गाणां वा संबन्धम्, यादृशा अधिसूचनायामुल्लिखिता भवेयुः एतादृशानामपवादानां रूपभेदानां चाधीनं विषयीकुर्युः, यथा ते राज्यस्य न्यायसंबन्धिसेवासु नियुक्तानां जनानां संबन्धं विषयीकुर्वन्ति ।

# भागः ७

## प्रथमानुसूचीस्थ–(ख)–भागीयराज्यानि

प्रथमानुसूच्याः (ख)-भाग उल्लिखितानां राज्यानां ६-भागस्योपबन्धैर्विषयीकरणम् ।

२३८. ६–भागस्योपबन्धाः निम्नलिखितानां रूपभेदानां लोपानां चाधीनं प्रथमानुसूच्याः (ख)–भाग उल्लिखितानां राज्यानां संबन्धं विषयीकुर्युः यथा ते तत्सूच्याः (क)–भाग उल्लिखितानां राज्यानां संबन्धं विषयीकुर्वन्ति; यथा :—

(१) "राज्यपाल" शब्दात् प्रति, २३२–तमानुच्छेदीय–(ख)–खण्डे यत्र स द्वितीयवारं प्रवर्तते तस्मादन्यत्र यत्रयत्र स प्रवर्तते तत्रतत्र "राज्यप्रमुख" शब्दः संनिविष्टो भवेत् ।

(२) १५२–तमानुच्छेदे "(क)–भागे" इति शब्दादक्षराच्च प्रति "(ख)–भागे" इति शब्दः अक्षरं च संनिविष्टं भवेत् ।

(३) १५५–१५६–१५७–तमानुच्छेदा लोपिताः भवेयुः ।

(४) १५८–तमानुच्छेदे—

(१) (१)–खण्डे "नियुक्तो भवेत्" इति शब्दसमूहात् प्रति "जायते" इति शब्दः संनिविष्टो भवेत् ।

(२) (३)–खण्डात् प्रति निम्नलिखितः खण्डः संनिविष्टो भवेत्, यथा :—

"(३) राजप्रमुखः यदि तस्य स्वीयं निवासगृहं तद्राज्यशासनस्य मुख्ये स्थाने नास्ति तर्हि भाटकस्य प्रदानं विनाऽसौ पदावासस्योपयोगे स्वत्ववान् भवेत्; किंच एतादृशेषु भत्तेषु विशेषाधिकारेषु च स्वत्ववान् भवेत्

भागः ७.--प्रथमानुसूचीस्थ-(ख)-भागीयराज्यानि

अनुच्छेदः २३८

यादृशानि राष्ट्रपतिः साधारणेन विशेषेण वाऽऽदेशेन निर्धारयेत् । ”

(३) (४)-खण्डे “ उपलब्धयः...च ” इति शब्दसमूहो लोपितो भवेत् ।

(५) १५९-तमानुच्छेदे “तन्न्यायालयीयस्य प्राप्यस्याग्रतमस्य न्यायाधीशस्य ” इति शब्दसमूहात् परं “ अथ-वैतादृश्या भिन्नया रीत्या, यादृशी तदर्थं राष्ट्रपतिना निर्धारिता भवेत् ” इति शब्दसमूहः प्रविष्टो भवेत् ।

(६) १६४-तमानुच्छेदीय-(१)-खण्डस्य पारन्तुकात् प्रति निम्नलिखितं सनिविष्टं भवेत् , यथाः—

“ परन्तु मध्यभारतराज्ये जनजातीनां कल्याणाय भारसाधको मन्त्री भवेत् य आधिक्येनानुसूचितजातीनाम-प्रगतवर्गाणां च कल्याणाय अन्यस्य कार्यस्य च भारसाधको भवेत् । ”

(७) १६८-तमानुच्छेदस्थ-(१)-खण्डात् प्रति निम्नलिखितः खण्डः संनिविष्टो भवेत् , यथाः—

“ (१) एकैकस्य राज्यस्य विधानमण्डलं भवेत् यत् राज-प्रमुखेन ; किंच

(क) मायसोरराज्ये द्वाभ्यां सदनाभ्याम् ;

(ख) अन्येषु राज्येष्वेकेन सदनेन ;

भवेत् । ”

(८) १८६-तमानुच्छेदे “ यादृशानि द्वितीयानुसूच्यामुल्लिखि-तानि सन्ति ” इति शब्दसमूहात् प्रति “ यादृशानि

भागः ७.--प्रथमानुसूचीस्थ-(ख)-भागीयराज्यानि

अनुच्छेदः २३८

राजप्रमुखो निर्धारयेत् " इति शब्दसमूहः संनिविष्टो भवेत् ।

(९) १९५-तमानुच्छेदे " यादृशान्यस्य संविधानस्य प्रारम्भादव्यवहितं प्रागेतद्राज्यस्थानीयप्रान्तविधानसभायाः सदस्यान् विषय्यकुर्वन् " इति शब्दसमूहात् प्रति " यादृशानि राज्यप्रमुखो निर्धारयेत् " इति शब्दसमूहः संनिविष्टो भवेत् ।

(१०) २०२-तमानुच्छेदस्थ-(३)-खण्डे—

(१) (क)-उपखण्डात् प्रति निम्नलिखित उपखण्डः संनिविष्टो भवेत्, यथाः—

"(क) राजप्रमुखस्य भक्तानि तत्पदेन संबध्यमानोऽन्यो व्ययश्च, राष्ट्रपतिना साधारणेन विशेषेण चादेशेन यथा निर्धारितो भवेत् ; "

(२) (च)-उपखण्डात् प्रति निम्नलिखिता उपखण्डाः संनिविष्टा भवेयुः, यथाः—

"(च) तिरुवांकुरकोचीनराज्यस्य विषये एकपञ्चाशतो लक्षाणां रूप्याणां राशिः; तिरुवांकुराणां कोचीनानां च देश्यराज्ययोः शासकाभ्यां वृताया अस्य संविधानस्य प्रारम्भात् प्राक् तिरुवांकुराणां कोचीनानां च संयुक्तराज्यस्य निर्माणार्थं कृतायाः प्रसंविदाया अधीनम्, प्रतिवर्षं देवस्वं--निधये यस्य प्रदानमपेक्षितमस्ति;

(छ) अनेन संविधानेन राज्यविधानमण्डलेन वा विधिना एवं भारित इति घोषितः कोऽपि व्ययः । "

भागः ७.---प्रथमानुसूचीस्थ-(ख)-भागीयराज्यानि

अनुच्छेदः २३८

(११) २०८–तमानुच्छेदस्य –(२)– खण्डात् प्रति निम्नलिखितः खण्डः संनिविष्टो भवेत्, यथाः—

"(२) यावत् (१)–खण्डानुसारेण नियमा न प्रणीता भवन्ति तावत् राज्यविधानमण्डलसदनमुद्दिश्यास्य संविधानस्य प्रारम्भादव्यवहितपूर्वं प्रवृत्ताः प्रक्रियाया नियमाः स्थाय्यादेशाश्च, अथवा यत्र राज्यविधानमण्डलस्य किमपि सदनं नासीत् तत्र एतादृशप्रारम्भात् प्राक् एतादृशप्रान्तस्य विधानसभामुद्दिश्य प्रवृत्ताः प्रक्रियाया नियमाः स्थाय्यादेशाश्च, यादृशाः तद्राज्यस्य राजप्रमुखेनोल्लिखिता भवेयुः, राज्यविधानमण्डलस्य संबन्धे, एतादृशानां रूपभेदानामनुकूलनानां चाधीनम्, कार्यक्षमा भवेयुः, यादृशानि यथायथं विधानसभाया अध्यक्षेण विधानपरिषदः सभापतिना वा प्रणीतानि भवेयुः।"

( १२ ) २१४–तमानुच्छेदस्थ–(२)–खण्डे "प्रान्त" इति शब्दात् प्रति "भारतीयराज्य" इति शब्दसमूहः संनिविष्टो भवेत्।

( १३ ) २२१–तमानुच्छेदात् प्रति निम्नलिखितः अनुच्छेदः संनिविष्टो भवेत्, यथाः—

"न्यायाधीशानां वेतनानि इत्यादि।

२२१. ( १ ) एकैकस्योच्चन्यायालयस्य न्यायाधीशेभ्य एतादृशानि वेतनानि प्रदत्तानि भवेयुः यादृशानि राज्यप्रमुखेन परामर्शात् परं राष्ट्रपतिना निर्धारितानि भवेयुः।

( २ ) एकैको न्यायाधीशोऽनुपस्थित्यनुमतिं निवृत्तिवेतनं चोद्दिश्य, एतादृशेषु भक्तेष्वेताद-

## भागः ७.--प्रथमानुसूचीस्थ-(ख)-भागीयराज्यानि

### अनुच्छेदः २३८

शेष्वधिकारेषु च स्वत्ववान् भवेत् यादृशानि संसदा प्रणीतेन विधिना तदधीनं वा निर्धारितानि भवेयुः; यावदेवं न निर्धारितानि भवेयुस्तावदेतादृशेषु भक्तेष्वधिकारेषु च, यादृशानि राजप्रमुखेन परामर्शात् परं राष्ट्रपतिना निर्धारितानि भवेयुः—

परन्तु अनुपस्थित्यनुमतिं निवृत्तिवेतनं वोद्दिश्य कस्यापि न्यायाधीशस्य भक्तानि तस्याधिकाराश्च, तस्य नियुक्तेः परम्, तस्य लाभापकर्षकारित्वेनान्यथा कृता न भवेयुः।"

# भागः ८

## प्रथमानुसूचीस्थ-(ग)-भागीयराज्यानि

२३९. (१) एतद्भागस्यान्येषामुपबन्धानामधीनम्, राष्ट्रपतिना स्वनियोज्यस्यायुक्तस्य उपराज्यपालस्य वा द्वारा संनिकृष्टराज्यशासनस्य द्वारा वा, यावदसावुचितं मनुते तावन्मात्रं कार्यं कुर्वाणेन प्रथमानुसूच्याः (ग)-भाग उल्लिखितानि राज्यानि प्रशासितानि भवेयुः— प्रथमानुसूच्याः (ग)-भागस्य राज्यानां प्रशासनम् ।

परन्तु राष्ट्रपतिः—

(क) संबन्धितेन शासनेन परामर्शमकृत्वा, अथवा

(ख) राष्ट्रपतिर्यादृशीं समुचिततमां मनुते एतादृश्या रीत्या एवं प्रशासनीयजनताया अभिमतमनिश्चित्य,

संनिकृष्टराज्यस्य शासनस्य द्वारा कार्यं न कुर्यात् ।

(२) अस्मिन्ननुच्छेदे राज्यस्य निर्देशा राज्यभागस्य निर्देशान् अन्तर्भावयेयुः ।

२४०. (१) प्रथमानुसूच्याः (ग)-भाग उल्लिखितस्य आयुक्तेनोपराज्यपालेन वा प्रशासितस्य राज्यस्य कृते संसद् विधिना— स्थानीयविधिमण्डलानां मन्त्रणादातृपरिषदां मन्त्रिपरिषदां वा सर्जनमनुवर्तनं च ।

(क) राज्यविधानमण्डलरूपेण कृत्यकरणार्थं नामनिर्देशितं वा निर्वाचितं वांऽशतो नामनिर्देशितं सन्तम् अंशतो निर्वाचितं वा निकायम्, अथवा

(ख) मन्त्रणादातॄणां मन्त्रिणां वा परिषदम् उभये वा एतादृशेन संविधानेन एतादृशैः शक्तिभिः कृत्यैश्च सह स्रष्टुमनुवर्तयितुं वा क्षमते, यादृशानि विधावुल्लिखितानि भवेयुः ।

(२) यादृशः (१)-खण्डे निर्दिष्टोऽस्ति एतादृशः कोऽपि विधिः ३६८-तमानुच्छेदस्य प्रयोजनानां कृतेऽस्य संविधानस्य संशोधनमस्तीति

## भागः ८.—प्रथमानुसूचीस्थ-(ग)-भागीयराज्यानि

### अनुच्छेदाः २४०–२४२

न मतं भवेत्, स तं कमप्युपबन्धमन्तर्भावयति य एतत्संविधानं संशोधयति तत्संविधानस्य संशोधनरूपेण वा कार्यक्षमो भवतीति एतदविगणय्य ।

प्रथमानुसूच्याः (ग)-भागस्य राज्येभ्य उच्चन्यायालयाः ।

२४१. (१) संसद् विधिना प्रथमानुसूच्याः (ग)—भाग उल्लिखिताय राज्यायोच्चन्यायालयं संघटयितुं क्षमते, अथवाऽस्य संविधानस्य सर्वेभ्यः प्रयोजनेभ्यस्तदन्यतमाय वा प्रयोजनाय कस्याप्येतादृशस्य राज्यस्य कमपि न्यायालयमुच्चन्यायालयरूपेण घोषयितुं क्षमते ।

(२) षष्ठभागस्य पञ्चमाध्यायस्यानुबन्धाः, यादृशान् संसद् विधिनोपबन्धयितुं क्षमते एतादृशानां रूपभेदानामपवादानां वाधीनम् (१)—खण्डे निर्दिष्टस्य प्रत्येकोच्चन्यायालयस्य संबन्धं तथा विषयीकुर्युः, यथा ते २१४—तमानुच्छेदे निर्दिष्टस्योच्चन्यायालयस्य संबन्धं विषयीकुर्वन्ति ।

(३) अस्य संविधानस्यानुबन्धानां तथैतत्संविधानेन तदधीनं वा तस्मै विधानमण्डलाय प्रदत्तशक्तीनामाश्रयेण प्रणीतस्य समुचितविधिमण्डलविधेरुपबन्धानां चाधीनं प्रथमानुसूच्याः (क)—भाग उल्लिखितस्य कस्यापि राज्यस्य तस्मिन्नन्तर्भावितस्य क्षेत्रस्य वा संबन्धेऽस्य संविधानस्य प्रारम्भादव्यवहितपूर्वं क्षेत्राधिकारं प्रयुञ्जानः प्रत्येकोच्चन्यायालयः, एतादृशप्रारम्भात् परं तद्राज्यस्य तत्क्षेत्रस्य वा संबन्धे एतादृशं क्षेत्राधिकारं प्रयुञ्जानोऽनुवर्तेत ।

(४) प्रथमानुसूच्याः (क)—भागे (ख)—भागे वोल्लिखितस्य कस्यापि राज्यस्योच्चन्यायालयस्य क्षेत्राधिकारं तदनुसूच्याः (ग)—भाग उल्लिखिते राज्ये तद्राज्याभ्यन्तरेऽन्तर्भाविते क्षेत्रे वा विस्तारयितुं तादृशाद्राज्यात् तादृशात् क्षेत्रादपवर्जयितुं वा सत्याः संसच्छक्तेरपकर्षम् एतदनुच्छेदगतं किमपि न करोति ।

कोडगू ।

२४२. (१) यावत् संसद् विधिनाऽन्यथा नोपबन्धयति तावत् कोडगूविधानपरिषदः संविधानं शक्तयः कृत्यानि च तान्येव स्युः यान्येतत्संविधानस्य प्रारम्भादव्यवहितपूर्वमासन् ।

## भागः ८.—प्रथमानुसूचीस्थ-(ग)-भागीयराज्यानि

### अनुच्छेदः २४२

(२) कोडगूप्रदेशमध्ये संगृहीतानि राजस्वानि कोडगूसंबन्धान् व्ययांश्चोद्दिश्य व्यवस्थाः, यावद्राष्ट्रपतिनाऽऽदेशेन तदर्थमुपबन्धो न प्रणीतस्तावत्, अपरिवर्तिता अनुवर्तेरन् ।

# भागः ९

## प्रथमानुसूचीस्थ-(घ)-भागीयराज्यक्षेत्राणि तदनुसूच्यां नोल्लिखितान्यन्यानि राज्यक्षेत्राणि च

प्रथमानुसूच्याः (घ)-भागस्य राज्यक्षेत्राणां तदनुसूच्यां नोल्लिखितानामन्येषां राज्यक्षेत्राणां च प्रशासनम्।

२४३. (१) प्रथमानुसूचीस्थ–(घ)–भाग उल्लिखितं किमपि राज्यक्षेत्रं भारतराज्यक्षेत्राभ्यन्तरे समाविष्टं तदनुसूच्यां नोल्लिखितमन्यद्राज्यक्षेत्रं च राष्ट्रपतिना यावत्स उचितं मनुते तावन्मात्रं कार्यं कुर्वता, स्वनियुक्तस्य मुख्यायुक्तस्यान्यस्य वा प्राधिकारिणो द्वारा, प्रशासितं भवेत्।

(२) राष्ट्रपतिरेतादृशस्य कस्यापि राज्यक्षेत्रस्य शान्तये सुशासनाय च विनियमान् प्रणेतुं क्षमते; किंच, एवं प्रणीतः कोऽपि विनियमः संसदा प्रणीतं कमपि विधिं वर्तमानं कमपि तं विधिं च निरसितुं संशोधितुं च क्षमते यो विधिस्तत्काले एतादृशं राज्यक्षेत्रं विषयीकुर्वाणोऽस्ति; किंच, यदा राष्ट्रपतिना [विनियमः] प्रख्यापितो भवति तदा सः, य एतादृशं राज्यक्षेत्रं विषयीकरोति स संसदधिनियमो यथा, तथा बलं कार्यक्षमतां च भजेत।

# भागः १०

## अनुसूचितक्षेत्राणि जनजातिक्षेत्राणि च

२४४. (१) पञ्चमानुसूच्या उपबन्धाः, प्रथमानुसूच्याः (क)–भागे (ख)–भागे वोल्लिखितस्य आसामराज्यातिरिक्तस्य कस्यापि राज्यस्यानुसूचितक्षेत्राणां जनजातीनां च प्रशासनं नियन्त्रणं च विषयीकुर्युः । अनुसूचितक्षेत्राणां जनजातिक्षेत्राणां च प्रशासनम् ।

(२) षष्ठानुसूच्या उपबन्धाः आसामराज्यस्य जनजातिक्षेत्राणां प्रशासनं विषयीकुर्युः ।

# भागः ११

## संघस्य राज्यानां च परस्परं संबन्धाः

### अध्यायः १.—विधायिनः संबन्धाः

### विधायिनीनां शक्तीनां विभजनम्

संसदा राज्यविधानमण्डलैश्च प्रणीतानां विधीनां विस्तारः।

२४५. (१) अस्य संविधानस्याधीनम्, संसद् संपूर्णस्य भारतराज्यक्षेत्रस्य कृते कस्यापि तद्भागस्य वा कृते विधीन् प्रणेतुं क्षमते; किंच राज्यविधानमण्डलं संपूर्णस्य तस्य राज्यस्य कृते कस्यापि तस्य भागस्य वा कृते विधीन् प्रणेतुं क्षमते ।

(२) संसदा प्रणीतः कोऽपि विधिः, अयं राज्यक्षेत्रातीतं प्रवर्तनवान् भवति इत्यनेन आधारेणामान्यो न भवेत् ।

संसदा राज्यविधानमण्डलेन च प्रणीतानां विधीनां विषयीभूतार्थः।

२४६. (१) (२)–(३)–खण्डगतं सर्वमविगणय्य, संसद् सप्तमानुसूच्याः ( अस्मिन् संविधाने “ संघसूची ” इति निर्दिष्टायां ) प्रथमसूच्यां प्रगणितानां विषयाणामन्यतमं कमप्युद्दिश्य विधीनां प्रणयनेऽनन्यां शक्तिं भजते ।

(२) (३)–खण्डगतं सर्वमविगणय्य संसद्, तथा (१)–खण्डस्याधीनं प्रथमानुसूच्याः (क)–भागे (ख)–भागे वोल्लिखितस्य कस्यापि राज्यस्य विधानमण्डलमपि सप्तमानुसूच्याः ( अस्मिन् संविधाने “ समवर्तिनी सूची ” इति निर्दिष्टायां ) तृतीयसूच्यां प्रगणितानां विषयाणामन्यतमं कमप्युद्दिश्य विधीन् प्रणेतुं शक्तिं भजते ।

( ३ ) ( १ )–( २ )–खण्डयोरधीनम्, प्रथमानुसूच्याः ( क )–भागे ( ख )–भागे वोल्लिखितस्य कस्यापि राज्यस्य विधानमण्डलं सप्तमानुसूच्याः ( अस्मिन् संविधाने “ राज्यसूची ” इति निर्दिष्टायां ) द्वितीयसूच्यां प्रगणितानां विषयाणामन्यतमं कमप्युद्दिश्य एतादृशराज्यस्य कृते कस्यापि तद्भागस्य वा कृते विधीन् प्रणेतुमनन्यां शक्तिं भजते ।

## भागः ११.--संघस्य राज्यानां च परस्परं संबन्धाः

### अनुच्छेदाः २४६-२४९

(४) एतादृशो विषयो राज्यसूच्यां प्रगणितो विषयोऽस्तीत्य-विगणय्य, संसद् कमपि विषयमुद्दिश्य प्रथमानुसूच्याः (क)-भागे (ख)-भागे वाऽनन्तर्भावितस्य कस्यापि भारतराज्यक्षेत्रभागस्य कृते विधीन् प्रणेतुं शक्तिं भजते।

अपरन्यायालयविशेषाणां स्थापनायै उपबन्धयितुं संसदः शक्तिः।

२४७. एतदध्यायगतं सर्वमविगणय्य, संसदा प्रणीतानां विधीनां, संघसूच्यां प्रगणितं विषयमुद्दिश्य वर्तमानस्य कस्यापि विधेर्वा साधुतरप्रशासनार्थमपरन्यायालयानां स्थापनायै, संसद् विधिनोपबन्धयितुं क्षमते।

अवशिष्टा विधानशक्तयः।

२४८. (१) समवर्तिसूच्यां राज्यसूच्यां वाऽप्रगणितं कमपि विषयमुद्दिश्य कस्यापि विधेः प्रणयने संसद् अनन्यां शक्तिं भजते।

(२) एतादृशी शक्तिस्तयोः सूच्योरन्यतरस्मिन् कस्मिन्नप्य-वर्णितमारोपयतः कस्यापि विधेः प्रणयनस्य शक्तिमन्तर्भावयति।

राष्ट्रियहितार्थं राज्यसूच्याः कमपि विषयमुद्दिश्य विधेर्विधाने संसदः शक्तिः।

२४९. (१) अस्याध्यायस्य पूर्वगाम्युपबन्धेषु स्थितं सर्वमविगणय्य, यदि द्वाभ्यां तृतीयांशाभ्यामन्यूनैरुपस्थितैर्मतं च ददद्भिः सदस्यैः समर्थितेन संकल्पेन राज्यपरिषदा घोषितं भवति यत्, राष्ट्रियहितार्थमेतदावश्यकं प्रसङ्गोचितं वाऽस्ति यत् राज्यसूच्यां प्रगणितं तत्संकल्पोल्लिखितं च कमपि विषयमुद्दिश्य संसदा विधयः प्रणेतव्या इति, तर्हि यावत् स संकल्पः प्रवृत्तोऽस्ति तावत् तं विषयमुद्दिश्य संपूर्णस्य भारतराज्यक्षेत्रस्य कृते कस्यापि तद्भागस्य वा कृते विधीनां संसदा प्रणयनं विधिसंगतं भवेत्।

(२) (१)-खण्डाधीनं पारितः संकल्पः एकस्मात् वर्षादन्यूनमेतादृशं कालावधिं प्रवृत्तो भवेत् यादृशस्तत्रोल्लिखितो भवेत्—

परन्तु यदि यावद्वारं च (१)-खण्ड उपबन्धितया रीत्या, एतादृशसंकल्पप्रवर्तनस्यानुवर्तनमनुमोदयन् संकल्पः पारितो भवति तर्हि स एतादृशः संकल्पस्तस्मादिनाङ्कादेकं वर्षं यावत् अधिकावधि प्रवर्तमानोऽनुवर्तेत, यस्मिन् दिनाङ्के एतत्खण्डाधीनं स प्रवर्तनाद्विरतोऽभविष्यत्।

## भागः ११.--संघस्य राज्यानां च परस्परं संबन्धाः

### अनुच्छेदाः २४९-२५१

(३) (१)--खण्डाधीनं संकल्पस्य पारणेऽकृते सति संसद् यं प्रणेतुं क्षमा नाभविष्यत् स संसदा प्रणीतो विधिः, यदा स संकल्पः प्रवर्तनात् विरतो भवति ततः परं षण्णां मासानां कालावधेः समाप्तौ, उक्त-कालावधेः समाप्तेः पूर्वं कृतान् कर्तव्यत्वाल्लोपितान् पदार्थान् विहाय याव-दक्षमता प्रसरति तावन्मात्रं कार्यक्षमताया विरतो भवति।

यद्यापातघोषणा प्रवृत्ताऽस्ति तर्हि राज्य-सूच्याः कमपि विषयमुद्दिश्य विधेर्विधाने संसदः शक्तिः।

२५०. (१) एतदध्यायगतं सर्वमविगणय्य, यदाऽऽपातस्योद्-घोषणा प्रवृत्ताऽस्ति तदा राज्यसूच्यां प्रगणितानां विषयाणामन्यतमं कम-प्युद्दिश्य संपूर्णस्य भारतराज्यक्षेत्रस्य कृते कस्यापि तद्भागस्य वा कृते विधीन् प्रणेतुं संसद् शक्तिं भजेत।

(२) आपातोद्घोषणायाः प्रचालनेऽकृते सति संसद् यं प्रणेतुं क्षमा नाऽभविष्यत्, संसदा प्रणीतः स विधिः, यदा तदुद्घोषणा प्रवर्त-नाद् विरता भवति ततः परं षण्णां मासानां कालावधेः समाप्तौ, उक्तकाला-वधेः समाप्तेः प्राक् कृतान् कर्तव्यत्वाल्लोपितान् पदार्थान् विहाय यावदक्षमता प्रसरति तावन्मात्रं कार्यक्षमताया विरतो भवति।

२४९-२५०-तमानुच्छेदयो-रधीनं संसदा प्रणीतानां विधीनां राज्य-विधानमण्डलैः प्रणीतानां विधीनां च मध्ये विसं-गतिः।

२५१. २४९-२५०-तमानुच्छेदगतं किमपि तस्य कस्यापि विधेः प्रणयने राज्यविधानमण्डलस्य शक्तिं न निर्बन्धयेत् यं विधिं प्रणे-तुमस्य संविधानस्याधीनं तत् शक्तिं भजते, यदि तु संसदा प्रणीतो विधिः राज्यविधानमण्डलेन प्रणीतस्य तस्य विधेः केनाप्युपबन्धेन सुतरां विरुद्धोऽस्ति यं [ विधिं ] प्रणेतुम् उक्तानुच्छेदयोरन्यतरस्याधीनं संसद् शक्तिं भजते तर्हि राज्यविधानमण्डलेन प्रणीताद् विधेः प्राक् परं वा पारितोऽस्तु, अभिभावी भवेत्, किंच, राज्यविधानमण्डलेन प्रणीतो विधिः यावत्तु संसत्प्रणीतो विधिः कार्यक्षमतयाऽनुवर्तते तावत्, यावद्विरोधमात्रम्, प्रवर्तनशून्यो भवेत्।

## भागः ११.--संघस्य राज्यानां च परस्परं संबन्धाः

### अनुच्छेदाः २५२-२५४

२५२. (१) यदि द्वयोरधिकानां वा राज्यानां विधानमण्डलानि एतद् वाञ्छनीयं पश्यन्ति यत् २४९-२५०-तमानुच्छेदयोरुपबन्धितेभ्योऽन्यत्र येषां विषयाणामन्यतमं कमप्युद्दिश्य राज्यानां कृते विधीनां प्रणयने संसद् शक्तिं न भजते तेषामन्यतमः स विषयः संसदा विधिना विनियमितः कर्तव्यः, यदि च तेषां राज्यानां विधानमण्डलानां सर्वैः सदनैस्तदर्थं संकल्पाः पारिता भवन्ति तर्हि तदनुरुध्य तस्य विषयस्य विनियमनार्थमधिनियमस्य पारणं संसदः कृते विधिसंगतं भवेत्; किंच, एवं पारितः कोऽप्यधिनियमः एतादृशानि राज्यानि तदन्यत् किमपि राज्यं च विषयीकुर्यात् येन पश्चात् तदर्थं सदनेन, यत्र वा द्वे सदने स्तः तत्र तद्राज्यविधानमण्डलस्य द्वाभ्यां सदनाभ्यां पारितेन संकल्पेनाङ्गीकृतं भवति । द्वयोरधिकानां वा राज्यानां कृते संमत्या विधाने संसदः शक्तिः, अन्येन केनापि राज्येनैतादृशस्य विधानस्य स्वीकरणम् ।

(२) संसदा कोऽप्येवं पारितोऽधिनियमः सदृशरीत्या पारितेनाङ्गीकृतेन च संसदोऽधिनियमेन संशोधितो निरस्तो वा भवितुं क्षमते, किंतु किमपि यद्राज्यं स विषयीकरोति तदुद्दिश्य तद्राज्यविधानमण्डलस्याधिनियमेन स संशोधितो निरस्तो वा न भवेत् ।

२५३. एतदध्यायस्थपूर्वगाम्युपबन्धेषु सर्वमविगणय्य, संपूर्णस्य भारतराज्यक्षेत्रस्य कृते कस्यापि तद्भागस्य वा कृते केनाप्यन्येन देशेन देशैर्वा कृतस्य संधेः समयस्याभिसमयस्य वा आन्ताराष्ट्रिके संमेलने सभायामन्यस्मिन् वा निकाये कृतस्य कस्यापि विनिश्चयस्य वा परिपालनाय कस्यापि विधेः प्रणयने संसद् शक्तिं भजते । आन्ताराष्ट्रिकसमयानां कार्यक्षमतायै विधानम् ।

२५४. (१) यदि राज्यविधानमण्डलेन प्रणीतस्य विधेः कोऽप्युपबन्धः, यं विधिं संसद् अधिनियमितुं क्षमाऽस्ति तस्य संसत्प्रणीतस्य विधेः कस्याप्युपबन्धस्य सुतरां विरुद्धः, समवर्तिसूच्यां प्रगणितानां विषयाणामन्यतमं कमप्युद्दिश्य विद्यमानस्य वा विधेः कस्याप्युपबन्धस्य सुतरां विरुद्धोऽस्ति तर्हि, (२)-खण्डस्थोपबन्धानामधीनम्, एतादृशस्य राज्यस्य विधानमण्डलेन प्रणीताद् विधेः प्राक् परं वा पारितः संसदा प्रणीतो संसदा प्रणीतानां विधीनां राज्यविधानमण्डलैः प्रणीतानां विधीनां च मध्ये विसंगतिः ।

**भागः ११.—संघस्य राज्यानां च परस्परं संबन्धाः**

**अनुच्छेदौ २५४–२५५**

विधिर्विद्यमानो वा विधिः यथायथम्, अभिभावी भवेत्; किंच, तद्राज्यविधानमण्डलेन प्रणीतो विधिः यावद्विरोधमात्रं शून्यो भवेत्।

(२) यत्र प्रथमानुसूच्याः (क)–भागे (ख)–भागे वोल्लिखितस्य राज्यस्य विधानमण्डलेन समवर्तिसूच्यां प्रगणितविषयाणामन्यतममेकमुद्दिश्य प्रणीतो विधिः संसदा प्रणीतस्य पूर्वतरस्य विधेस्तद्विषयमुद्दिश्य विद्यमानस्य वा विधेरुपबन्धैर्विरुद्धं कमप्युपबन्धमन्तर्निवेशयति, तत्र, एतादृशस्य राज्यस्य विधानमण्डलेन एवं प्रणीतो विधिः—यदि स राष्ट्रपतेर्विचारार्थं रक्षितः तस्य चानुमतिं प्राप्तवान्—तस्मिन् राज्येऽभिभावी भवेत्—

परन्तु एतत्खण्डगतं किमपि, राज्यविधानमण्डलेन एवं प्रणीतस्य विधेः परिवर्धनं संशोधनमन्यथाकरणं निरसनं वा कुर्वन्तं विधिमन्तर्भावयतः कस्यापि विधेरधिनियमनात् संसदं न निवारयेत्।

पुरःप्रशंसनानां पूर्वस्वीकृतीनां चापेक्षाः केवलं प्रक्रियाया विषया इत्यनुदर्शनम्।

२५५. संसदः वा प्रथमानुसूच्याः (क)–भागे (ख)–भागे वोल्लिखितराज्यविधानमण्डलस्य वाऽधिनियम एतादृशाधिनियमस्य कोऽप्युपबन्धश्चैतस्मादेव हेतोः शून्यो न भवेत् यदनेन संविधानेनापेक्षितं पुरःप्रशंसनं पूर्वस्वीकृतिर्वा न प्रदत्ता आसीदिति, यदि—

(क) यत्र राज्यपालस्य पुरःप्रशंसनमपेक्षितमासीत् तत्र राज्यपालेन राष्ट्रपतिना वा;

(ख) यत्र राज्यप्रमुखस्य पुरःप्रशंसनमपेक्षितमासीत् तत्र राजप्रमुखेन राष्ट्रपतिना वा;

(ग) यत्र राष्ट्रपतेः पुरःप्रशंसनं पूर्वस्वीकृतिर्वाऽपेक्षिता आसीत् तत्र राष्ट्रपतिना;

अनुमतिस्तदधिनियमादेशेन प्रदत्ताऽभूत्।

## भागः ११.—संघस्य राज्यानां च परस्परं संबन्धाः

### अनुच्छेदौ २५६–२५७

### अध्यायः २.— प्रशासनसंबन्धाः

### साधारणम्

२५६. प्रत्येकराज्यस्य कार्यपालिका शक्तिस्तथा प्रयुक्ता भवेत् यथा संसदा प्रणीतानां विधीनाम्, तद्राज्यं ये विषयीकुर्वन्ति तेषां केषामपि विद्यमानानां विधीनां च पालनं सुनिश्चयं भवेत्; किंच, संघस्य कार्यपालिका शक्तिः राज्यायैतादृशानां निदेशानां प्रदानपर्यन्तं विस्तारमाप्नुयात् यादृशान् भारतशासनं तदर्थमावश्यकान् प्रतीयात् । संघस्य राज्यानां च आभाराः ।

२५७. (१) प्रत्येकराज्यस्य कार्यपालिका शक्तिस्तथा प्रयुक्ता भवेत् यथा संघस्य कार्यपालिकायाः शक्तेः प्रयोगं न प्रतिरुन्ध्यात् न वा तादृश-प्रयोगे प्रतिकूलं प्रभावमापादयेत्; किंच संघस्य कार्यपालिका शक्तिः राज्यायैतादृशानां निदेशानां प्रदानपर्यन्तं विस्तारमाप्नुयात् यादृशान् भारतशासनं तदर्थमावश्यकान् प्रतीयात् । अवस्थाविशेषेषु संघस्य राज्येषु नियन्त्रणम् ।

(२) संघस्य कार्यपालिका शक्तिः संचारसाधनानां निर्माणे धारणे च राज्याय निदेशानां प्रदानपर्यन्तमपि विस्तारमाप्नुयात् येषां [संचारसाधनानां] राष्ट्रियं सैनिकं गौरवं तस्मिन् निदेशे घोषितं भवेत्—

परन्तु एतत्खण्डगतं किमपि, राजपथान् जलपथान् वा राष्ट्रियराज-पथरूपेण राष्ट्रियजलपथरूपेण वा घोषणे संघस्य शक्तेः, एवं घोषितान् राजपथान् जलपथान् वोद्दिश्य संघस्य शक्तेर्वा, नौबलस्थलबलविमानबल-कर्मान्तान् उद्दिश्य स्वकृत्यानां भागरूपेण संचारसाधनानां निर्माणे धारणे च संघस्य शक्तेर्वा निर्बन्धकमस्तीति न गृहीतं भवेत् ।

(३) संघस्य कार्यपालिका शक्तिः राजाभ्यन्तरस्थानां लोह-मार्गाणां रक्षार्थं ग्रहीतव्यानामुपायानां संबन्धे राज्याय निदेशानां प्रदान-पर्यन्तं विस्तारमाप्नुयात् ।

(४) यत्र (२)–खण्डाधीनं संचारसाधनानां निर्माणे धारणे वा (३)–खण्डाधीनं वा कस्यापि लोहमार्गस्य रक्षणायोपायानामवलम्बने

## भागः ११.—संघस्य राज्यानां च परस्परं संबन्धाः

### अनुच्छेदाः २५७–२५९

राज्याय प्रदत्तस्य कस्यापि निदेशस्य पालनेन तेभ्योऽधिकतराः परिव्ययाः कृताः सन्ति ये व्यया राज्यस्य नित्यप्राप्तकर्तव्यानामनुष्ठानेऽभविष्यन् यद्येतादृशो निदेशो न प्रदत्तोऽभविष्यत्, तत्र यादृशः समयेन निश्चितः स्यात् एतादृशो राशिः भारतशासनेन तस्मै राज्याय प्रदत्तो भवेत्; अथवा, समयाभावे, राज्येन एवं कृतानामधिकतराणां परिव्ययानां संबन्धे भारतमुख्यन्यायाधिपतिना नियुक्तेन मध्यस्थेन यादृशो निर्धारितो भवेत् ।

अवस्थाविशेषेषु राज्येभ्यः शक्त्यादीनां प्रदाने संघस्य शक्तिः ।

२५८. (१) एतत्संविधानगतं सर्वमविगणय्य, राष्ट्रपतिः, यत्पर्यन्तं संघस्य कार्यपालिका शक्तिर्विस्तारमाप्नोति तानि कस्यापि विषयस्य संबन्धीनि कृत्यानि राज्यशासनस्य संमत्या तच्छासने तत्पदाधिकारिषु वा सप्रतिबन्धमप्रतिबन्धं वा निक्षेप्तुं क्षमते ।

(२) यः सर्वं किमपि राज्यं विषयीकरोति स संसदा प्रणीतो विधिः, राज्यविधानमण्डलं यस्मिन् विषये विधीनां प्रणयने शक्तिं न भजते तेन विषयेण एष संबध्यते इत्यविगणय्य तस्मै राज्याय तदीयेभ्यः पदाधिकारिभ्यः प्राधिकारिभ्यश्च शक्तीन् प्रदातुं तेषु कर्तव्यानि चारोपयितुं शक्तीनां प्रदाने कर्तव्यानां चारोपणे तान् प्राधिकारयितुं वा क्षमते ।

(३) यत्र एतदनुच्छेदस्याश्रयेण राज्याय पदाधिकारिभ्यः प्राधिकारिभ्यो वा शक्तयः प्रदत्ताः तेषु वा कर्तव्यान्यारोपितानि तत्र भारतशासनेन तस्मै राज्याय, यादृशः समयेन निश्चितो भवेत् एतादृशो राशिः प्रदत्तो भवेत्; अथवा, समयाभावे, तासां शक्तीनां कर्तव्यानां च प्रयोगसंबन्धे तद्राज्येन कृतानामतिरिक्तानां प्रशासनस्य परिव्ययानां संबन्धे भारतमुख्यन्यायाधिपतिना नियुक्तेन मध्यस्थेन यादृशो निर्धारितो भवेत् ।

प्रथमानुसूच्याः (ख)-भागस्य राज्यानां सशस्त्रबलानि ।

२५९. (१) एतत्संविधानगतं सर्वमविगणय्य प्रथमानुसूच्याः (ख)–भाग उल्लिखितमस्य संविधानस्य प्रारम्भादव्यवहितपूर्वं कान्यपि सशस्त्रबलानि धारयत् राज्यम्, यावत् संसद् विधिनाऽन्यथा नोपबन्धयति

तावत्, एतादृशात् प्रारम्भात् परं साधारणानां विशेषाणां वा निदेशानामधीनम् उक्तबलानां धारणमनुवर्तयेत्।

(२) (१)–खण्डे यानि निर्दिष्टानि सन्ति तानि कान्यपि सशस्त्रबलानि संघस्य सशस्त्रबलानां भागो भवेत्।

२६०. भारतशासनम्, भारतराज्यक्षेत्रस्य यो न भागस्तस्य कस्यापि राज्यक्षेत्रस्य शासनेन समयं कृत्वा एतादृशस्य राज्यक्षेत्रस्य शासने निहितानि कार्यपालकानि विधायीनि न्यायसंबन्धीनि वा कृत्यानि स्वीकुर्यात्; किन्तु एतादृशः कोऽपि समयस्तत्काले प्रवृत्तस्य वैदेशिकक्षेत्राधिकारप्रयोगेन संबध्यमानस्य कस्यापि विधेरधीनः तेन शासितश्च भवेत्।

भारताद् बहिर्भूतानां राज्यक्षेत्राणां संबन्धे संघस्य क्षेत्राधिकारः।

२६१. (१) सर्वत्र भारतराज्यक्षेत्रे संघस्य प्रत्येकं राज्यस्य च सार्वजनिकीषु क्रियास्वभिलेखेषु न्यायसंबन्धिकार्यप्रवृत्तिषु पूर्णो विश्वासो विश्रम्भश्च भवेत्।

सार्वजनिक्यः क्रियाः, अभिलेखाः न्यायपालिकाः कार्यप्रवृत्तयश्च।

(२) (१)–खण्डे निर्दिष्टाः क्रिया अभिलेखाः कार्यप्रवृत्तयश्च यया रीत्या येषां प्रतिबन्धानामधीनं च सिद्धा भवेयुः तदीयः प्रभावश्च निर्धारितो भवेत् ते संसदा प्रणीतस्य विधेरुपबन्धितरूपा भवेयुः।

(३) भारतराज्यक्षेत्रस्य कस्मिन्नपि भागे व्यवहारन्यायालयैः पारिताः प्रतिपादिताश्च निर्णया आदेशा वा तद्राज्यक्षेत्राभ्यन्तरे विधेरनुरोधेन निष्पादनयोग्या भवेयुः।

### जलैः संबध्यमाना विवादाः

२६२. (१) आन्ताराज्यिकायाः कस्या अपि नद्याः नदीद्रोण्याः वा तत्रस्थानां वा जलानामुपयोगं विभाजनं नियन्त्रणं वोद्दिश्य कस्यापि विवादस्याक्षेपनिवेदनस्य वा न्यायनिर्णयनाय संसद् विधिनोपबन्धयितुं क्षमते।

आन्ताराज्यिकानां नदीनां नदीद्रोणीनां वा जलैः संबध्यमानानां विवादानां न्यायनिर्णयनम्।

## भागः ११.--संघस्य राज्यानां च परस्परं संबन्धाः

### अनुच्छेदौ २६२-२६३

(२) एतत्संविधानगतं सर्वमविगणय्य, संसद् उपबन्धयितुं क्षमते यत् नोच्चतमन्यायालयो न वाऽन्यो न्यायालयो यादृशः (१)-खण्डे निर्दिष्टोऽस्ति एतादृशं कमपि विवादमाक्षेपनिवेदनं वोद्दिश्य क्षेत्राधिकारं प्रयुञ्जीत।

### राज्यानां परस्परं समन्वयः

आन्ताराज्यिकपरिषदसुद्दिश्योपबन्धाः ।

२६३. यदि कस्मिन्नपि काले राष्ट्रपतिरेतत् प्रत्येति यदेतादृश्याः पारिषदः स्थापनया लोकहितानि सिध्येरन्, यस्याम्—

(क) राज्यानां परस्परं ये विवादा उत्पन्ना भवेयुः तेषु विवादेषु परिप्रश्नः मन्त्रणा च;

(ख) येषु विषयेषु कतिपयानि सर्वाणि वा राज्यानि, अथवा संघः एकं राज्यं चाधिकानि वा राज्यानि च समानं हितं भजन्ते तेषु विषयेष्वनुसंधानं चर्चा च;

(ग) कस्मिन्नप्येतादृशे विषये पुरःप्रशंसनानि, विशेषतः, तद्विषयमुद्दिश्य नीतेः कृतेश्च साधुतरसमन्वयार्थं पुरःप्रशंसनानि;

इत्येतस्य कर्तव्यस्य भारः, तद्यादेशेनैतादृश्याः पारिषदः स्थापना, तथा तयाऽनुष्ठेयानां कर्तव्यानां स्वरूपस्य च तस्याः संघटनस्य च प्रक्रियायाः परिभाषणं चेत्येतत् राष्ट्रपतिं प्रति विधिसंगतं भवेत् ।

# भागः १२

## वित्तम्, संपत्तिः, संविदः, व्यवहारवादाश्च

### अध्यायः १. —वित्तम्

### साधारणम्

२६४. भागेऽस्मिन्, प्रसङ्गेनान्यथा अपेक्षितं चेन्न भवति,— निर्वचनम्।

(क) "वित्तायोगः" इत्यनेन संविधानस्य २८०-तमानुच्छेदस्याधीनं घटितो वित्तायोगोऽभिप्रेयते;

(ख) "राज्ये" प्रथमानुसूच्या (ग)-भागोल्लिखितं किमपि राज्यं नान्तर्भवति;

(ग) प्रथमानुसूच्या (ग)-भाग उल्लिखितानां राज्यानां निर्देशेषु प्रथमानुसूच्या (घ)-भाग उल्लिखितस्य कस्यापि राज्यक्षेत्रस्य, भारतराज्यक्षेत्रे समाविष्टस्य किन्तु तस्यामनुसूच्यामनुल्लिखितस्य कस्याप्यन्यस्य राज्यक्षेत्रस्य च निर्देशा अपि अन्तर्भवेयुः।

२६५. विधेः प्राधिकारमन्तरेण कोऽपि करो नैवारोपितो न चापि संगृहीतो भवेत्। विधि-प्राधिकारमन्तरेण कराणामनारोपणीयत्वम्।

२६६. (१) २६७-तमानुच्छेदस्योपबन्धानाम्, केषाञ्चित् कराणां शुल्कानां च शुद्धागमानां राज्येभ्यः पूर्णतोंऽशतो वा अर्पणविषयकाणामस्याध्यायस्योपबन्धानां चाधीनत्वे सति, भारतशासनेन प्राप्तैः सर्वै राजस्वैः, तेन शासनेन राजकोशहुण्डिकानाम्, ऋणानाम्, अर्थोपायाग्रिमधनानां च प्रचालनेन गृहीतैरुद्धारैः, तथा उद्धाराणां प्रतिदाने च तेन शासनेन प्राप्तैः सर्वैर्धनैरेको "भारतसंचितनिधिः" इत्याख्यः संचितो निधिर्निष्पद्येत; किञ्च राज्यशासनेन प्राप्तैः सर्वै राजस्वैः, तेन शासनेन राजकोशहुण्डि- भारतस्य राज्यानां च संचितनिधयो लोकगणनाश्च।

## भागः १२.--वित्तम्, संपत्तिः, संविदः, व्यवहारवादाश्च

### अनुच्छेदौ २६६-२६७

कानाम्, ऋणानाम्, अर्थोपायाग्रिमधनानां च प्रचालनेन गृहीतैरुद्धारैः, उद्धाराणां प्रतिदाने च तेन शासनेन प्राप्तैः सर्वैर्धनैश्चैकः "तद्राज्यसंचितनिधिः" इत्याख्यः संचितो निधिर्निष्पद्येत।

(२) भारतशासनेन राज्यशासनेन वा, तयोः प्रतिनिधित्वेन वा, प्राप्तान्यन्यानि सर्वाणि सार्वजनिकधनानि यथायथं भारतस्य तद्राज्यस्य वा लोकगणनायामाकलितानि भवेयुः।

(३) भारतस्य कस्यापि राज्यस्य वा संचितनिधेः कान्यपि धनानि विधेरनुसारेण, संविधानेऽस्मिन्नुपबन्धिते रीतिप्रयोजने चान्तरेण विनियुक्तानि न भवेयुः।

आकस्मिकतानिधिः।

२६७. (१) संसद् विधिना अग्रदायस्वरूपेण "भारतीयाकस्मिकतानिधिः" इत्याख्ययाकस्मिकतानिधिं स्थापयितुमर्हति, यस्मिन् तद्विधिना निर्धारिता राशयः काले काले निहिता भवेयुः, तथोक्तो निधिश्च, ११५-तमानुच्छेदस्य ११६-तमानुच्छेदस्य वा अधीनं संसदा विधिना अतर्कितव्ययविषयकप्राधिकृतत्वस्य लम्बनावस्थायाम्, तस्मान्निधेरेतादृशस्य व्ययस्य पूर्तिनिमित्तमग्रिमधनं दातुं राष्ट्रपतेर्योग्यतायाः संपादनार्थम्, राष्ट्रपतेर्वशे स्थाप्येत।

(२) कस्यापि राज्यस्य विधानमण्डलं विधिना अग्रदायस्वरूपेण "तद्राज्यस्याकस्मिकतानिधिः" इत्याख्ययाकस्मिकतानिधिं स्थापयितुमर्हति, यस्मिन् तद्विधिना निर्धारिता राशयः काले काले निहिता भवेयुः, तथोक्तो निधिश्च, २०५-तमानुच्छेदस्य २०६-तमानुच्छेदस्य वा अधीनं तद्राज्यविधानमण्डलेन विधिना अतर्कितव्ययविषयकप्राधिकृतत्वस्य लम्बनावस्थायाम्, तस्मान्निधेरेतादृशस्य व्ययस्य पूर्तिनिमित्तमग्रिमधनं दातुं तद्राज्यस्य राज्यपालस्य राजप्रमुखस्य वा योग्यतायाः संपादनार्थम्, राज्यपालस्य राजप्रमुखस्य वा वशे स्थाप्येत।

## भागः १२.— वित्तम्, संपत्तिः, संविदः, व्यवहारवादाश्च

### अनुच्छेदौ २६८–२६९

### संघस्य राज्यानां च मध्ये राज्यस्वानां विभाजनम्

२६८. (१) एतादृशा मुद्राङ्कशुल्का औषधीय–प्रसाधनीय–सामग्र्युत्पादनशुल्काश्च यादृशाः संघसूच्यां वर्णिताः सन्ति भारतशासनेन आरोप्येरन्, किन्तु— संघेनारोपिता राज्यैस्तु संगृहीता विनियोजिताश्च शुल्काः ।

(क) तस्यामवस्थायां यस्यामेतादृशाः शुल्काः प्रथमानुसूच्या (ग)-भाग उल्लिखितस्य कस्यचिदपि राज्यस्याभ्यन्तर आरोप्याः स्युः, भारतशासनेन;

(ख) अन्यास्ववस्थासु, यस्य यस्याभ्यन्तर एतादृशाः शुल्का आरोप्याः स्युस्तत्तद्राज्येन च;

संगृह्येरन् ।

(२) कस्मिन्नपि वित्तीयवर्षे कस्यचिदपि राज्यस्याभ्यन्तर आरोप्यस्य कस्यापि एतादृशस्य शुल्कस्यागमा भारतसंचितनिधेर्भागा न भवेयुः किन्तु तस्मै राज्याय अर्प्येरन् ।

२६९. (१) निम्नलिखिताः शुल्काः कराश्च भारतशासनेन आरोपिताः संगृहीताश्च भवेयुः, किन्तु (२)-खण्ड उपबन्धितरीत्या राज्येभ्योऽर्प्येरन्, यथा— संघेनारोपिताः संगृहीताश्च, किन्तु राज्येभ्योऽर्पिताः कराः ।

(क) कृषिभूमेरन्यस्याः संपत्तेरुत्तराधिकारविषयकाः शुल्काः;

(ख) कृषिभूमिभिन्नसंपत्तिविषयकः संपच्छुल्कः ;

(ग) लोहमार्गेण समुद्रेण वायुना वा वाहितानां भाण्डानां यात्रिणां वा सीमाकराः ;

(घ) लोहमार्गभाटकेषु भाण्डभाटकेषु च कराः ;

(ङ) श्रेष्ठिचत्वराणां भविष्यापणानां च पण्यव्यवहारेषु मुद्राङ्कशुल्केतरे कराः ;

## भागः १२.--वित्तम्, संपत्तिः, संविदः, व्यवहारवादाश्च

### अनुच्छेदौ २६९-२७०

(च) समाचारपत्राणां क्रये विक्रये वा तेषु प्रकाशितविज्ञापनेषु च कराः ।

(२) कस्मिन्नपि वित्तीयवर्षे कस्याप्येतादृशस्य शुल्कस्य करस्य वा शुद्धागमाः, यावत्त आगमाः प्रथमानुसूच्या (ग)-भागे उल्लिखितराज्यैः संबन्धनीया आगमा मन्येरन् तावद्वर्जयित्वा, भारतसंचितनिधेर्भागा न भवेयुः, किन्तु तेभ्यो राज्येभ्योऽर्पिता भवेयुर्येषु स शुल्कः करो वा तस्मिन् वर्ष उद्ग्राह्यो भवति, किञ्च एतादृशानां विभाजनतत्त्वानामनुसारेण यादृशानि संसदा विधिना सूत्रितानि भवेयुस्तेभ्यो राज्येभ्यो विभाजिता भवेयुः ।

संघेनारोपिताः संगृहीताश्च तथा संघस्य राज्यानां च मध्ये विभाजिताः कराः ।

२७०. (१) कृष्यायेतरेष्वायेषु करा भारतशासनेनारोपिताः संगृहीताश्च भवेयुः, किञ्च (२)-खण्ड उपबन्धितरीत्या संघस्य राज्यानां च मध्ये विभाजिता भवेयुः ।

(२) कस्मिन्नपि वित्तीयवर्षे कस्याप्येतादृशस्य करस्य शुद्धागमानाम्, यावत्त आगमाः प्रथमानुसूच्या (ग)-भाग उल्लिखितराज्यैः संघोपलब्धिसंबन्धेन प्रदेयकरैर्वा संबन्धनीया आगमा मन्येरन् तावद्वर्जयित्वा, एतादृशः प्रतिशतं भागः, यादृशो विधीयेत, भारतस्य संचितनिधेर्भागो न भवेत्, किन्तु तेभ्यो राज्येभ्योऽर्पितो भवेद् येषामभ्यन्तरे स करस्तस्मिन्वर्षे उद्ग्राह्यो भवति, किञ्च तया रीत्या तस्माच्च कालाद्यथा तौ विधीयेयातां तेभ्यो राज्येभ्यो विभाजितो भवेत् ।

(३) द्वितीयखण्डस्य प्रयोजनार्थं प्रत्येकवित्तीयवर्षे आयेषु कराणां यावन्तः संघोपलब्धिसंबन्धेन प्रदेयकराणां शुद्धागमा न भवन्ति तावतां शुद्धागमानामेतादृशः प्रतिशतं भागो यादृशो विहितो भवेत् प्रथमानुसूच्या (ग)-भाग उल्लिखितराज्यैः संबन्धनीय आगमो मन्येत ।

(४) अस्मिन्ननुच्छेदे—

(क) "आयकरेषु" निगमकरो नान्तर्भवति;

(ख) "विहित" स्यार्थोऽस्ति यत्—

(१) यावद्वित्तायोगस्य घटनं न जायते तावद् राष्ट्रपतिना आदेशेन विहितम्; तथा

(२) वित्तायोगस्य घटनानन्तरम्, वित्तायोगस्य पुरःप्रशंसनानां विचारस्य पश्चाद् राष्ट्रपतिना आदेशेन विहितम्;

(ग) "संघोपलब्धिषु" भारतसंचितनिधेः प्रदेयानि तानि सर्वाणि उपलब्धयो निवृत्तिवेतनानि च अन्तर्भवन्ति येषां संबन्धेन आयकर आरोप्यो भवितुमर्हति ।

२७१. २६९-तम-२७०-तमानुच्छेदगतं सर्वमविगणय्य, संसत् तयोरनुच्छेदयोर्निर्दिष्टेषु शुल्केषु करेषु वा अन्यतमं कस्मिन्नपि काले संघस्य प्रयोजनार्थमधिभारेण वर्धयितुं क्षमते, एतादृशस्य च कस्याप्यधिभारस्य समस्ता आगमा भारतसंचितनिधेर्भागा भवेयुः । संघस्य प्रयोजनार्थमेकेषु शुल्केषु करेषु चाधिभारः ।

२७२. यादृशाः औषधीय–प्रसाधनीय–सामग्रीषु उत्पादनशुल्काः संघसूच्यां वर्णिताः सन्ति एतादृशेभ्य इतरे संघीयोत्पादनशुल्का भारतशासनेनारोपिताः संगृहीताश्च भवेयुः, किन्तु संसद् विधिना एवमुपबन्धयति चेत्, शुल्कमारोपयतो विधेर्ये विषयतां गच्छन्ति तेभ्यो राज्येभ्यस्तच्छुल्कसंपूर्णशुद्धागमानां तेषां कस्यापि भागस्य वा समानरूपो राशिर्भारतसंचितनिधितः प्रदीयेत, ते च राशयस्तेभ्यो राज्येभ्यो विधिना सूत्रितानां विभाजनतत्त्वानामनुसारेण विभाजिता भवेयुः । संघेनारोपिताः संगृहीताश्च कराः, ये संघस्य राज्यानां च मध्ये विभाजनमर्हन्ति ।

२७३. (१) पट्टशणे पट्टशणनिर्मितवस्तुषु वा निर्यातशुल्कप्रतिवार्षिकशुद्धागमानां कस्यचिद् भागस्य आसाम-उरिस्सा-पश्चिमबङ्गालबिहारराज्येभ्योऽर्पणस्य स्थाने, तेषां राज्यानां राज्यस्वे सहायकानुदान- पट्टशणे पट्टशणनिर्मितवस्तुषु वा निर्यातशुल्कस्य स्थानेऽनुदानानि ।

रूपेण, प्रतिवर्षं भारतसंचितनिधावेतादृशा राशयो भारिता भवेयुर्यादृशा विहिताः स्युः।

(२) पट्टशणे पट्टशणनिर्मितवस्तुषु वा यावद् भारतशासनं कस्यापि निर्यातशुल्कस्योद्ग्रहणमनुवर्तयति तावत्, एतत्संविधानस्य प्रारम्भाद्दशवर्षसमाप्तिं यावद्वा, यदप्येनयोः प्राक्तरं भवति, एवं विहिता राशयो भारतसंचितनिधौ भारितत्वेनानुवर्तेरन्।

(३) अस्मिन्ननुच्छेदे "विहित" शब्दस्य स एवार्थो योऽस्य संविधानस्य २७०-तमानुच्छेदे विद्यते।

राज्यानां हितैः संबद्धं करारोपणं स्पृशतां विधेयकानां कृते राष्ट्रपतेः पूर्वस्य प्रशंसनस्यापेक्षा।

२७४. (१) किमपि विधेयकं संशोधनं वा यद्राज्यानां हितेन संबद्धं कमपि करं शुल्कं वा आरोपयति परिवर्तयति वा, अथवा यद् भारतीयेनायकरेण संबद्धानामधिनियमनानां प्रयोजनार्थं परिभाषितस्य "कृष्याये"-ति शब्दसमूहस्य अर्थं परिवर्तयति, अथवा यत् तानि तत्त्वानि स्पृशति यदनुसारेण एतस्याध्यायस्य पूर्ववर्त्युपबन्धेषु अन्यतमस्याधीनत्वेन राज्येभ्यो धनानि विभाजनीयानि भवन्ति भवितुमर्हन्ति वा, अथवा यत् संघस्य प्रयोजनार्थं कमपि तादृशमधिभारमारोपयति यादृश एतस्याध्यायस्य पूर्ववर्त्युपबन्धेषु वर्णितो विद्यते, राष्ट्रपतेः पुरःप्रशंसनमन्तरेण संसदः कतरस्मिन्नपि सदने न हि पुरःस्थापितं नापि प्रस्तावितं भवेत्।

(२) अस्मिन्ननुच्छेदे "राज्यानां हितेन संबद्धः करः शुल्को वा" इति शब्दसमूहेनाभिप्रेतमस्ति—

(क) कश्चिदपि करः शुल्को वा यस्य शुद्धागमाः पूर्णतोऽशतो वा कस्मैचिद् अपि राज्याय अर्प्यन्ते; अथवा

(ख) कोऽपि करः शुल्को वा यस्य शुद्धागमानां निर्देशेन भारतसंचितनिधेस्तत्कालं कस्मैचिद् अपि राज्याय राशयः प्रदेया भवन्ति।

## भागः १२.—वित्तम्, संपत्तिः, संविदः, व्यवहारवादाश्च

### अनुच्छेदः २७५

२७५. (१) एतादृशा राशयो यादृशान् संसद् विधिना उपबन्धयेद् एतादृशानां राज्यानां राजस्वानां सहायकानुदानरूपेण प्रतिवर्षं भारतसंचितनिधौ भारिता भवेयुः यादृशानां विषये संसदेतन्निर्धारयेद् यत्तेषां कृते साहाय्यस्यावश्यकता विद्यते, किञ्च विभिन्नराज्येभ्यो विभिन्ना राशयो नियतीक्रियेरन्— एकेभ्यो राज्येभ्यः संघादनुदानम्।

परन्तु कस्यापि राज्यस्य राजस्वानां सहायकानुदानरूपेण भारतसंचितनिधेरेतादृशा मूलराशय आवर्तकराशयश्च प्रदीयेरन् यादृशास्तद्राज्यमेतादृशीनां विकासयोजनानां परिव्ययोद्वहनाय समर्थं विधातुमावश्यका भवेयुर्यादृश्यस्तद्राज्यान्तर्गतानामनुसूचितानां जनजातीनां कल्याणस्य संवर्धनार्थम्, तद्राज्यान्तर्गतानामनुसूचितक्षेत्राणां प्रशासनस्तरस्य तद्राज्यस्य शेषक्षेत्राणां प्रशासनस्तरं यावत् समुन्नयनार्थं वा तेन राज्येन भारतशासनस्यानुमोदनेनाङ्गीकृता भवेयुः;

परन्तु अन्यदपि, आसामराज्यस्य राज्यस्वानां सहायकानुदानरूपेण भारतसंचितनिधेस्ते मूलराशय आवर्तकराशयश्च प्रदीयेरन्—

(क) ये षष्ठानुसूच्या २०-तमकण्डिकया संलग्नसारिण्याः (क)-भाग उल्लिखितानां जनजातिक्षेत्राणां प्रशासने एतस्य संविधानस्य प्रारम्भादव्यवहितपूर्वं वर्षद्वयस्य राजस्वेभ्यो मध्यममानादधिकेन व्ययेन समा भवेयुः; किञ्च

(ख) ये एतादृशीनां विकासयोजनानां परिव्ययैः समा भवेयुर्यादृश्यस्तेन राज्येन भारतशासनस्यानुमोदनेन उक्तक्षेत्राणां प्रशासनस्तरस्य—तद्राज्यशेषक्षेत्राणां प्रशासनस्तरं यावत्—समुन्नयनार्थम् अङ्गीकृता भवेयुः।

(२) यावत् प्रथमखण्डस्यानुरोधेन संसदा नोपबन्धः क्रियते तावत्तत्खण्डानुरोधेन संसदे प्रदत्ताः शक्तयो राष्ट्रपतिना आदेशेन प्रयो-

भागः १२.--वित्तम्, संपत्तिः, संविदः, व्यवहारवादाश्च

अनुच्छेदौ २७५-२७६

क्तव्या भवेयुः, किञ्च एतत्खण्डानुरोधेन राष्ट्रपतिना दत्तः कोऽप्यादेशः संसदा एवं कृतस्य कस्याप्युपबन्धस्याधीनत्वेन कार्यकृद् भवेत्—

परन्तु वित्तायोगस्य घटनात्परं वित्तायोगस्य पुरःप्रशंसनानां विचारमन्तरेण एतत्खण्डानुरोधेन कोऽप्यादेशो राष्ट्रपतिना न दीयेत ।

वृत्तिषु, व्यापारेषु, आजीविकासु, नियोजनासु च कराः ।

२७६. (१) २४६-तमानुच्छेदगतं सर्वमविगणय्य, राज्यस्य, तत्रत्याया नगरपालिकायाः, मण्डलमण्डल्याः, स्थानीयमण्डल्याः, तत्रत्यस्य अन्यस्य स्थानीयप्राधिकारिणो वा हितसाधनार्थं वृत्तीनां व्यापाराणामाजीविकानां नियोजनानां वा संबन्धिभिः करैः संबद्धः कस्यापि राज्यस्य विधानमण्डलस्य कोऽपि विधिरेतदाधारेणामान्यो न भवेद्यत्स आयकरेण संबद्धोऽस्तीति ।

(२) राज्याय अथवा तत्रत्यायै कस्यैचिन्नगरपालिकायै, मण्डलमण्डल्यै, स्थानीयमण्डल्यै, अन्यस्मै स्थानीयप्राधिकारिणे वा कस्याप्येकस्य जनस्य विषये वृत्तिषु, व्यापारेषु, आजीविकासु, नियोजनासु च कररूपेण प्रदेयः समस्तो राशिः प्रतिवर्षं २५०-रूप्यकेभ्यो नाधिको भवेत् —

परन्तु यद्येतस्य संविधानस्य प्रारम्भादव्यवहितपूर्ववर्तिनि वित्तीयवर्षे—कस्मिंश्चिदपि राज्ये अथवा कस्यामप्येतादृश्यां नगरपालिकायाम्, मण्डल्याम्, कस्मिन्नप्येतादृशे प्राधिकारिणि वा—वृत्तिषु, व्यापारेषु, आजीविकासु, नियोजनासु वा स करः प्रवृत्त आसीद् यस्य मानम्, यस्याधिकतमं मानं वा प्रतिवर्षं २५०-रूप्यकेभ्योऽधिकमासीत् तर्हि एतादृशकरस्योद्ग्रहणं तावत्कालमनुवर्तेत यावत्संसद् विधिना एतत्प्रतिकूलं नोपबन्धयति, संसदा चैवं निर्मितः कोऽपि विधिरुत सामान्यरूपेण उत केषाञ्चिदुल्लिखितानां राज्यानाम्, नगरपालिकानाम्, मण्डलीनाम्, प्राधिकारिणां वा संबन्धे निर्मितो भवितुमर्हति ।

(३) वृत्तिषु, व्यापारेषु, आजीविकासु, नियोजनासु च कराणां विषये यथोक्तप्रकारेण विधीनां निर्माणार्थं राज्यविधानमण्डलस्य शक्तेर्नीय-

मर्थी भवेद्यद् वृत्तिभ्यो व्यापारेभ्य आजीविकाभ्यो नियोजनाभ्यश्च प्रोद्भूत उत्पन्ने वा आये कराणां विषये विधीनां निर्माणे संसदः शक्तिः केनापि प्रकारेण सीमितेति ।

२७७. ये कराः, शुल्काः, उपकराः, देयानि वा संविधानस्याव्यवहितपूर्वं कस्यचिदपि राज्यस्य शासनेन कयाचिन्नगरपालिकया वा केनाप्यन्येन प्राधिकारिणा निकायेन वा तस्य राज्यस्य, नगरपालिकायाः, मण्डलस्य अन्यस्य स्थानीयक्षेत्रस्य वा प्रयोजनार्थं यथाविधि उद्गृह्यमाणानि आसन्, ते कराः, शुल्काः, उपकराः, देयानि वा, तेषां संघसूच्यां वर्णितत्वेऽपि, उद्ग्राह्यत्वेन तेभ्य एव प्रयोजनेभ्य उपयोज्यत्वेन चानुवर्तितुमर्हन्ति यावत्संसद् विधिना तत्प्रतिकूलं नोपबन्धयति । व्यावृत्तयः ।

२७८. (१) एतत्संविधानगतं सर्वमविगणय्य, भारतशासनम्, द्वितीयखण्डस्योपबन्धानामधीनत्वे, प्रथमानुसूच्याः (ख)-भाग उल्लिखितराज्यस्य शासनेन सह— एकेषां वित्तीयविषयाणां संबन्धे प्रथमानुसूच्याः (ख)-भागस्य राज्यैः सह समयः ।

(क) एतादृशे राज्ये भारतशासनेनोद्ग्राह्यस्य करस्य शुल्कस्य वा आरोपणसंग्रहणयोस्तथा तस्यागमानाम् एतदध्यायोपबन्धानामनुसारादन्यथा विभाजनस्य ;

(ख) भारतशासनेन एतत्संविधानस्यानुरोधेनोद्ग्राह्यात् करात् शुल्काद्वा अथवा अन्येभ्यः केभ्योऽपि उद्गमस्थानेभ्यस्तेन राज्येन प्राप्यस्य कस्यापि राजस्वस्य हानिहेतोरेतादृशाय राज्याय भारतशासनेन वित्तीयसहायताया अनुदानस्य ;

(ग) २९१-तमानुच्छेदीयप्रथमखण्डस्यानुरोधेन भारतशासनेन कृतस्य कस्यापि प्रदानस्य विषये एतादृशेन राज्येन कर्तव्यस्यांशदानस्य ;

## भागः १२.--वित्तम्, संपत्तिः, संविदः, व्यवहारवादाश्च

### अनुच्छेदाः २७८–२८०

विषये समयं कर्तुमर्हति; किञ्च यदा समय एवं क्रियते तदा एतदध्यायोपबन्धा एतादृशस्य राज्यस्य संबन्धे एतादृशस्य समयस्य निबन्धनानामधीनत्वे कार्यकरा भवेयुः ।

(२) प्रथमखण्डस्यानुरोधेन कृतः कोऽपि समय एतत्संविधानस्य प्रारम्भाद्दशभ्यो वर्षेभ्योऽनधिककालं यावत् प्रवर्तेत——

परन्तु राष्ट्रपतिरेतादृशात्प्रारम्भात् पञ्चानां वर्षाणां समाप्तेरनन्तरं कस्मिन्नपि काले, यदि स वित्तायोगीयप्रतिवेदनस्य विचारानन्तरमेवं कर्तुमावश्यकं मन्यते, एतादृशस्य कस्यापि समयस्य समाप्तिं रूपभेदं वा कर्तुं क्षमते ।

शुद्धागमानां गणनादि ।

२७९. (१) अस्याध्यायस्य पूर्वगाम्युपबन्धेषु "शुद्धागमाः" इत्यस्य, कस्यापि करस्य शुल्कस्य वा संबन्धे तत्संग्रहपरिव्ययानां व्यवकलनानन्तरमवशिष्टास्तदीया आगमा इत्यर्थो भवति; किञ्च तेषामुपबन्धानां प्रयोजनार्थम्, कस्मिन्नपि क्षेत्रे प्राप्तस्य तस्मात् प्राप्यस्य वा कस्यापि करस्य शुल्कस्य वा, तदीयस्य कस्यापि भागस्य वा, शुद्धा आगमा भारतस्य नियन्त्रकमहालेखापरीक्षकेणाभिनिश्चिताः प्रमाणिताश्च भवेयुः, तस्य च प्रमाणपत्रमन्तिमं भवेत् ।

(२) कस्यामप्यवस्थायां यस्यामेतद्भागानुरोधेन कस्यापि शुल्कस्य करस्य वा आगमाः कस्मैचिद् अपि राज्याय अर्पिता भवन्ति भवेयुर्वा, उपर्युक्तोपबन्धस्य तथा अस्याध्यायस्य कस्याप्यन्यस्य स्पष्टोपबन्धस्याधीनत्वे संसन्निर्मितः कोऽपि विधिः राष्ट्रपतेः कोऽप्यादेशो वा, तस्या रीतिर्ययागमानां गणना करणीया भवति, तस्य कालस्य यतो यस्मिन्वा तस्या रीतेश्च यया कान्यपि प्रदानानि करणीयानि भवन्ति, एकस्य वित्तीयवर्षस्य अपरवित्तीयवर्षस्य च परस्परं समायोजनस्य, तथा अन्येषां केषांचित्प्रासङ्गिकानां सहायकानां च विषयाणामुपबन्धं कर्तुमर्हति ।

वित्तायोगः ।

२८०. (१) अस्य संविधानस्य प्रारम्भाद् वर्षद्वयाभ्यन्तरे तत्पश्चाच्च प्रतिपञ्चमवर्षसमाप्तौ, ततः पूर्वस्मिन्नेतादृशे काले वा यादृशं

## भागः १२.--वित्तम्, संपत्तिः, संविदः, व्यवहारवादाश्च

### अनुच्छेदः २८०

राष्ट्रपतिरावश्यकं मन्यते, राष्ट्रपतिरादेशेन वित्तायोगमेकं घटयेद् यश्च राष्ट्रपतिना नियुक्तैरेकेन सभापतिना चतुर्भिरन्यैः सदस्यैश्च भवेत्।

(२) संसद् विधिना तासामर्हतानां या आयोगस्य सदस्यत्वेन नियुक्त्यै अपेक्षिता भवेयुः तस्या रीतेश्च यया ते [ सदस्याः ] संव्रियेरन् निर्धारणं कर्तुमर्हति ।

(३) आयोगस्यैतत्कर्तव्यं भवेद् यत्सः--

(क) संघस्य राज्यानां च मध्ये करसंबन्धिशुद्धागमानाम्, य एतदध्यायाधीनं तेभ्यो विभाजनीया भवन्ति भवेयुर्वा, विभाजनविषये, तथा राज्यानां मध्ये एतादृशागमसंबन्धिनामंशानां भागकल्पनाविषये;

(ख) भारतस्य संचितनिधितो राज्यसंबन्धिनं राजस्वानां सहायकानुदाने पालनीयानां तत्त्वानां विषये;

(ग) २७८-तमानुच्छेदस्य प्रथमखण्डस्याधीनं ३०६-तमानुच्छेदस्याधीनं वा भारतशासनस्य प्रथमानुसूच्याः (ख)-भाग उल्लिखितस्य किञ्चिद्राज्यशासनस्य च मध्ये कृतस्य कस्यापि समयस्य निबन्धनानामनुवर्तनस्य रूपभेदस्य वा विषये; तथा

(घ) सुस्थितवित्तस्य हितार्थं राष्ट्रपतिना आयोगाय समर्पितस्य कस्याप्यन्यस्य पदार्थस्य विषये;

राष्ट्पतिं प्रति पुरःप्रशंसनं कुर्यात् ।

(४) आयोगः स्वकीयप्रक्रियां निर्धारयेत् स्वकीयकृत्यानां च पालने एतादृशीभिः शक्तिभिर्युक्तो भवेद्यादृशीः संसद् विधिना तस्मै प्रदद्यात् ।

## भागः १२.—वित्तम्, संपत्तिः, संविदः, व्यवहारवादाश्च

### अनुच्छेदाः २८१–२८४

वित्तायोगस्य पुरःप्रशंसनानि ।

२८१. राष्ट्रपतिरेतत्संविधानस्योपबन्धानामधीनं वित्तायोगेन कृतं प्रत्येकपुरःप्रशंसनम्, तद्विषये कृतायाः कार्यप्रवृत्तेर्व्याख्यात्मकज्ञापनेन सहितम्, संसदः प्रत्येकं सदनयोः पुरतः स्थापयेत् ।

### प्रकीर्णा वित्तीयोपबन्धाः

संघेन केनापि राज्येन वा स्वकीयराजस्वेभ्यः क्रियमाणो व्ययः ।

२८२. संघः किमपि राज्यं वा कस्यापि सार्वजनिकप्रयोजनस्य हेतोः किमप्यनुदानं दातुमर्हति, यद्यपि तत्प्रयोजनं तादृशं न भवेद् यद्विषये यथायथं संसत् तद्राज्यविधानमण्डलं वा विधिं निर्मातुमर्हति ।

संचितनिधीनामाकस्मिकतानिधीनां लोकगणनास्वाकलितधनानां चाभिरक्षादि ।

२८३. (१) भारतसंचितनिधेर्भारताकस्मिकतानिधेश्चाभिरक्षा, एतादृशनिधिषु धनानां निधानम्, ततो धनानां प्रत्याहरणम्, एतादृशनिधिष्वाकलितधनातिरिक्तानां भारतशासनेन तत्कृते वा प्राप्तानां लोकधनानामभिरक्षा, तेषां भारतस्य लोकगणनासु प्रदानं तथा तादृशगणनाभ्यो धनानां प्रत्याहरणं तथोपर्युक्तविषयैः संसक्तानां तेषां सहायकानां वा अन्येषां विषयाणां विनियमनं संसदा निर्मितेन विधिना भवेत्; किञ्च यावदुपबन्धस्तदर्थमेवं न क्रियते तावद्राष्ट्रपतिना कृतैर्नियमैर्भवेत् ।

(२) राज्यसंचितनिधे राज्याकस्मिकतानिधेश्चाभिरक्षा, एतादृशनिधिषु धनानां निधानम्, ततो धनानां प्रत्याहरणम्, एतादृशनिधिष्वाकलितधनातिरिक्तानां राज्यशासनेन तत्कृते वा प्राप्तानां लोकधनानामभिरक्षा, तेषां राज्यस्य लोकगणनासु प्रदानं तथा तादृशगणनाभ्यो धनानां प्रत्याहरणं तथोपर्युक्तविषयैः संसक्तानां तेषां सहायकानां वा अन्येषां विषयाणां विनियमनं राज्यविधानमण्डलेन निर्मितेन विधिना भवेत्; किञ्च यावदुपबन्धस्तदर्थमेवं न क्रियते तावत्तद्राज्यस्य राज्यपालेन राजप्रमुखेन वा कृतैर्नियमैर्भवेत् ।

लोकसेवकैर्न्यायालयैश्च प्राप्तानां वादिनिक्षेपाणामन्यधनानां चाभिरक्षा ।

२८४. सर्वाणि धनानि—

(क) यथायथं भारतशासनेन राज्यशासनेन वा संगृहीतानि प्राप्तानि वा राजस्वानि लोकधनानि वा वर्ज-

यित्वा, संघस्य कस्यापि राज्यस्य वा कार्याणां संबन्धे नियोजितेन केनापि पदाधिकारिणा पदाधिकारित्वरूपेण प्राप्तानि तस्मिन् निक्षिप्तानि वा; अथवा

(ख) कस्यापि वादस्य, विषयस्य, गणनायाः, जनानां वा नाम्नि भारतराज्यक्षेत्रस्यान्तः केनापि न्यायालयेन प्राप्तानि तस्मिन् निक्षिप्तानि वा;

यथायथं भारतस्य लोकगणनायां तद्राज्यस्य लोकगणनायां वा प्रदत्तानि भवेयुः ।

२८५. (१) यावत्संसद् विधिना अन्यथा नोपबन्धयति तावत्, केनापि राज्येन राज्यान्तर्गतेन केनापि प्राधिकारिणा वा आरोपितेभ्यः सर्वेभ्यः करेभ्यः संघसंपत्तिर्विमुक्ता भवेत् । संघसंपत्तेः राज्यकरेभ्यो विमुक्तिः ।

(२) यावत्संसद् विधिना अन्यथा नोपबन्धयति तावत्, प्रथमखण्डे किमपि कस्यापि राज्यस्यान्तः कमपि प्राधिकारिणं कस्यामपि संघसंपत्तौ कस्यापि तस्य करस्योद्ग्रहणान्न निवारयेद् यस्य विषये, एतस्य संविधानस्याव्यवहितपूर्वम्, एतादृक्संपत्तिर्दायिनी आसीद् दायिनीति व्यवहृता वा आसीत्, यावत्स करस्तस्मिन् राज्य उद्ग्राह्यत्वेनानुवर्तते।

२८६. (१) कस्यापि राज्यस्य कश्चिदपि विधिः, भाण्डानां क्रये विक्रये च, यत्रैतादृशः क्रयो विक्रयो वा— भाण्डानां क्रये विक्रये वा करारोपणविषये निर्बन्धनानि ।

(क) तस्माद् राज्याद्बहिः, अथवा

(ख) भारतराज्यक्षेत्रे भाण्डानामायातस्य ततो बहिर्निर्यातस्य वा क्रमे,

प्रवर्तते, तत्र करारोपणं न कुर्यात् न वा करारोपणं प्राधिकृतं कुर्यात् ।

## भागः १२.--वित्तम्, संपत्तिः, संविदः, व्यवहारवादाश्च

### अनुच्छेदौ २८६-२८७

व्याख्या—प्रथमोपखण्डस्य प्रयोजनार्थं कोऽपि क्रयो विक्रयो वा तस्मिन् राज्ये संजात इति मन्येत यस्मिन्नेतादृशस्य क्रयस्य विक्रयस्य वा साक्षात्परिणामरूपेण तस्मिन् राज्य उपभोगाय भाण्डानां वस्तुतो मोचनं तस्मिन् राज्ये कृतं भवेत्, स्थितेऽप्येवं यद् भाण्डविक्रयसंबन्धिनः साधारणविधेरधीनं तेषु भाण्डेषु स्वत्वमेतादृशस्य क्रयस्य विक्रयस्य वा कारणाद्राज्यान्तरे गतं भवति।

(२) यावत्संसद् विधिना अन्यथा नोपबन्धयति तावत्, कस्यापि राज्यस्य कोऽपि विधिः केषामपि भाण्डानां क्रये विक्रये वा तत्र किमपि करारोपणं न कुर्याद् न वा करारोपणं प्राधिकृतं कुर्याद् यत्रैतादृशः क्रयो विक्रयो वा आन्ताराज्यिकस्य व्यापारस्य वाणिज्यस्य वा क्रमे निर्वर्तते—

परन्तु राष्ट्रपतिरादेशेन निदेशं दातुं क्षमते यद् भाण्डानां क्रये विक्रये वा कोऽपि करः, यः कस्यचिदपि राज्यस्य शासनेनैतस्य संविधानस्य प्रारम्भादव्यवहितपूर्वं विधिवदुद्गृहीतोऽभूत्, एतादृशस्य करस्यारोपण एतत्खण्डोपबन्धानां प्रतिकूले सत्यपि, १९५१-तमवत्सरस्य मार्चमासस्य ३१-तमदिनपर्यन्तमुद्ग्राह्यत्वेनानुवर्तेत।

(३) कस्यापि राज्यस्य विधानमण्डलेन निर्मितः कोऽपि विधिः, एतादृशानां भाण्डानां, यादृशानि संसदा विधिना लोकसमाजस्य जीवनार्थमावश्यकत्वेन घोषितानि सन्ति, क्रये विक्रये वा करारोपणं कुर्वन् करारोपणं प्राधिकृतं कुर्वन् वा तावत्कार्यकृद् न भवेद् यावद्राष्ट्रपतेर्विचारार्थं रक्षितः स तस्यानुमतिं न लभते।

विद्युति करेभ्यो विमुक्तिः।

२८७. यावत्संसद् विधिना अन्यथा नोपबन्धयति तावत्, (शासनेन अन्यजनैर्वा उत्पादितायाः) विद्युत उपभोगे क्रये वा, या——

(क) भारतशासनेनोपभुज्यते भारतशासनस्योपभोगार्थं तस्मै शासनाय विक्रीयते वा; अथवा

## भागः १२.— वित्तम्, संपत्तिः, संविदः, व्यवहारवादाश्च

### अनुच्छेदौ २८७-२८८

(ख) कस्यापि लोहमार्गस्य निर्माणे, पोषणे, चालने वा भारतशासनेन लोहमार्गस्य चालकेन लोहमार्गसमवायेन वोपभुज्यते, अथवा कस्यापि लोहमार्गस्य निर्माणे, पोषणे, चालने वोपभोगार्थं तस्मै शासनाय कस्मै अपि एतादृशाय लोहमार्गसमवायाय वा विक्रीयते,

कस्यापि राज्यस्य कोऽपि विधिः करारोपणं न कुर्यात् न वा करारोपणं प्राधिकृतं कुर्यात्; किञ्च विद्युतः क्रये करमारोपयन् करारोपणं प्राधिकृतं कुर्वन्वा कोऽप्येतादृशो विधिः सुनिश्चिनुयात् यद् भारतशासनाय तस्य शासनस्योपभोगार्थम्, अथवा कस्मैचिदेतादृशाय लोहमार्गसमवायाय, यादृशः पूर्वमुक्तः, कस्यापि लोहमार्गस्य निर्माणे, पोषणे चालने वा उपभोगार्थम्, विक्रीताया विद्युतो मूल्यं विद्युतः प्रचुरमात्राया अन्येभ्य उपभोक्तृभ्यो गृहीतान्मूल्यात् करस्य राशिना न्यूनीभवेत् ।

जलस्य विद्युतो वा विषये राज्येन ग्राह्येभ्यः करेभ्योऽवस्थाविशेषेषु विमुक्तिः ।

२८८. (१) यावद्राष्ट्रपतिरादेशेन अन्यथा नोपबन्धयति तावत्, एतत्संविधानस्याव्यवहितपूर्वं कस्यापि राज्यस्य कोऽपि प्रवृत्तः विधिः, कस्या अपि आन्taराज्यिक्या नद्या नदीद्रोण्या वा विनियमनार्थं विकासार्थं वा केनापि वर्तमानविधिना संसदा निर्मितेन वा केनापि विधिना स्थापितेन केनापि प्राधिकारिणा संचितस्य, जनितस्य, उपभुक्तस्य, विभाजितस्य, विक्रीतस्य वा जलस्य विद्युतो वा विषये कमपि करं नारोपयेत् न वा करारोपणं प्राधिकृतं कुर्यात् ।

व्याख्या—अस्मिन्ननुच्छेदे "कस्यापि राज्यस्य कोऽपि प्रवृत्तो विधिः" इति शब्दसमूहे एतस्य संविधानस्य प्रारम्भात्पूर्वं पारितो निर्मितो वा न च पूर्वं निरस्तः कस्यापि राज्यस्य विधिरन्तर्भवति, सत्यप्येवं यत् स तस्य भागा वा तदा सर्वथा केषुचिद्विशिष्टक्षेत्रेषु वा प्रवृत्ता न स्युः ।

भागः १२.—वित्तम्, संपत्तिः, संविदः, व्यवहारवादाश्च

अनुच्छेदाः २८८–२९०

(२) कस्यापि राज्यस्य विधानमण्डलं विधिना प्रथमखण्डे वर्णितस्य करस्यारोपणं कर्तुम्, आरोपणं प्राधिकृतं कर्तुं वा, अर्हति, किन्त्वेतादृशो विधिस्तावत्कार्यक्षमो न भवेत् यावत्स राष्ट्रपतेर्विचारार्थं रक्षितः सन् तस्यानुमतिं न लभते; किञ्च यद्येतादृशः कोऽपि विधिरेतादृशस्य करस्य मानानाम् अन्यप्रासङ्गिकविषयाणां च केनापि प्राधिकारिणा तद्विधेरधीनं निर्मातव्यैर्नियमैरादेशैर्वा नियतीकरणार्थमुपबन्धं करोति, तर्हि स विधिरेतादृशस्य कस्यापि नियमस्यादेशस्य वा निर्माणार्थं राष्ट्रपतेः पूर्वसम्मतिग्रहणायोपबन्धं कुर्यात् ।

संघस्य कराधानात् कस्यापि राज्यस्य संपत्तेरायस्य च विमुक्तिः ।

२८९. (१) कस्यापि राज्यस्य संपत्तिरायश्च संघस्य कराधानाद् विमुक्तौ भवेताम् ।

(२) प्रथमखण्डगतं किमपि संघम्, कस्यापि राज्यस्य शासनेन तत्कृते वा क्रियमाणस्य कीदृशस्यापि व्यापारस्य कार्यस्य वा विषये, अथवा तत्संबद्धानां कासामपि क्रियाणां विषये, अथवा एतादृशस्य व्यापारस्य कार्यस्य वा प्रयोजनैरुपयुक्तायाः स्वायत्तीकृताया वा कस्या अपि संपत्तेर्विषये, अथवा ततः प्रोद्भूतस्योत्पन्नस्य वा कस्याप्यायस्य विषये, कस्यापि करस्य एतादृशं विस्तारं यावत्, स चेद्भवति, यादृशं संसद् विधिना उपबन्धयेत्, आरोपणाद् आरोपणस्य प्राधिकृतीकरणाद्वा न वारयेत् ।

(३) द्वितीयखण्डगतं किमपि कमपि तं व्यापारं कार्यं वा अथवा व्यापारस्य कार्यस्य वा कमपि तं प्रकारं न विषयीकुर्याद् यं संसद् विधिना स शासनस्य सामान्यकृत्यानां प्रासङ्गिक इति घोषयेत् ।

एकेषां व्ययानां वेतनानां च विषये समायोजनम् ।

२९०. यत्रैतत्संविधानस्योपबन्धानामधीनं कस्यापि न्यायालयस्य आयोगस्य वा व्ययाः, अथवा येन जनेन एतत्संविधानस्य प्रारम्भात्पूर्वं भारतस्य सम्राजोऽधीनम्, एतादृशप्रारम्भादनन्तरं वा संघस्य कस्यापि राज्यस्य वा कार्याणां संबन्धेन सेवा कृता भवेत्तस्मै तत्संबन्धेन वा प्रदेयं

भागः १२.—वित्तम्, संपत्तिः, संविदः, व्यवहारवादाश्च

अनुच्छेदौ २९०-२९१

निवृत्तिवेतनं भारतस्य संचितनिधौ राज्यानां संचितनिधौ वा भारितं भवति, तत्र, यदि—

(क) भारतस्य संचितनिधौ भारितत्वावस्थायाम्, स न्यायालय आयोगो वा कस्यापि राज्यस्य पृथगावश्यकतासु कस्या अपि पूर्तिं करोति, स जनो वा पूर्णतोंऽशतो वा कस्यापि राज्यस्य कार्याणां संबन्धेन सेवां कृतवानस्ति; अथवा

(ख) कस्यापि राज्यस्य संचितनिधौ भारितत्वावस्थायाम्, स न्यायालय आयोगो वा संघस्य अन्यस्य वा राज्यस्य पृथगावश्यकतासु कस्या अपि पूर्तिं करोति, स जनो वा संघस्य अन्यस्य राज्यस्य वा कार्याणां संबन्धेन पूर्णतोंऽशतो वा सेवां कृतवानस्ति,

तर्हि, तस्य राज्यस्य संचितनिधौ अथवा यथायथं भारतस्य संचितनिधौ तस्यान्यस्य राज्यस्य वा संचितनिधौ व्ययविषयकं निवृत्तिवेतनविषयकं वा एतादृशमंशदानं भारितं भवेत् तस्मान्निधेश्च दीयेत यादृशस्य समयो भवेत्, समयस्याभावे वा यादृशमंशदानं भारतस्य मुख्यन्यायाधिपतिना नियोज्येन मध्यस्थेन निर्धारितं भवेत् ।

२९१. (१) यत्र एतत्संविधानस्य प्रारम्भात्पूर्वं कस्यचिदपि देशीयराज्यस्य शासकेन कृतायाः कस्याश्चित् प्रसंविदः समयस्य वा अधीनमेतादृशराज्यस्य शासकाय निजकोशस्य रूपेण केषामपि राशीनां करमुक्तं प्रदानं भारताधिनिवेशस्य शासनेन प्रत्याभूतमाश्वासितं वा अस्ति तत्र— शासकानां निजकोशस्य राशयः ।

(क) तादृशा राशयो भारतस्य संचितनिधौ भारिता भवेयुस्ततश्च प्रदीयेरन्; किञ्च

(ख) कस्मै अपि शासकाय एवं प्रदत्तास्ते राशयः सर्वेभ्य आयकरेभ्यो विमुक्ता भवेयुः।

(२) यत्रोपर्युक्तसदृशस्य कस्यचिदपि देशीयराज्यस्य राज्य-क्षेत्राणि प्रथमानुसूच्या (क)-भागे (ख)-भागे वा उल्लिखिते कस्मिन्नपि राज्ये समाविष्टानि भवन्ति तत्र प्रथमखण्डस्यानुरोधेन भारतशासनेन प्रदत्तानां प्रदानानां विषये एतादृशम् अंशदानम्, तच्चेद्भवति, तस्य राज्यस्य संचितनिधौ भारितं भवेत् ततश्च प्रदीयेत, एतादृशकालं च यावद् यादृशः २७८-तमानुच्छेदस्य प्रथमखण्डस्यानुरोधेन तदर्थं कृतस्य कस्यापि समयस्याधीनतायां राष्ट्रपतेरादेशेन निर्धारितो भवेत्।

### अध्यायः २.—ऋणग्रहणम्

भारतशासनस्य ऋणग्रहणम्।

२९२. भारतस्य संचितनिधेः प्रतिभूत्या एतादृशीनां सीमानामभ्य-न्तरे, ताश्चेद् भवन्ति, यादृशीः संसत् काले काले विधिना नियतीकुर्यात्, ऋणग्रहणं यावत्, तथा एतादृशीनां सीमानामभ्यन्तरे, ताश्चेद् भवन्ति, यादृश्य एवं नियतीकृता भवेयुः, प्रत्याभूतिप्रदानं यावत्, संघस्य कार्य-पालिका शक्तिर्विस्तृता विद्यते।

राज्यानामृण-ग्रहणम्।

२९३. (१) एतदनुच्छेदस्योपबन्धानामधीनत्वे, कस्यापि राज्यस्य कार्यपालिका शक्तिः, तद्राज्यस्य संचितनिधेः प्रतिभूत्या, एतादृशीनां सीमानामभ्यन्तरे, ताश्चेद् भवन्ति, यादृशीरेतादृशराज्यस्य विधानमण्डलं काले काले विधिना नियतीकुर्यात्, भारतराज्यक्षेत्रस्यान्तर्ऋणग्रहणं यावत्, तथा एतादृशीनां सीमानामभ्यन्तरे, ताश्चेद् भवन्ति, यादृश्य एवं नियती-क्रियेरन्, प्रत्याभूतिप्रदानं यावद्विस्तृता विद्यते।

(२) भारतशासनम् एतादृशानां प्रतिबन्धानामधीनत्वेन, यादृशाः संसदा निर्मितेन केनापि विधिना तदनुरोधेन वा अवस्थाप्येरन्, कस्मैचिद् अपि राज्याय ऋणं दातुमर्हति, अथवा यावदेतस्य संविधानस्य २९२-तमानुच्छेदानुरोधेन नियतानां कासामपि सीमानामतिक्रमो न

भवति तावदेतादृशेन केनचिदपि राज्येन गृहीतस्य ऋणस्य विषये प्रत्याभूतिं दातुमर्हति; किञ्च एतादृशऋणस्य दानायावश्यकाः केऽपि राशयो भारतस्य संचितनिधौ भारिता भवेयुः।

(३) यदृणं भारतशासनेन तस्य पूर्वाधिकारिशासनेन वा कस्मै अपि राज्याय दत्तं विद्यते अथवा यद्विषये भारतशासनेन तस्य पूर्वाधिकारिशासनेन वा प्रत्याभूतिर्दत्ता विद्यते, तस्य ऋणस्य यदि कोऽपि भागोऽवशिष्यते, तर्हि तद्राज्यं भारतशासनस्य सम्मतिं विना किमपि ऋणं ग्रहीतुं नार्हति।

(४) तृतीयखण्डानुरोधेन सम्मतिरेतादृशानां प्रतिबन्धानामधीनत्वेन, ते चेद् भवन्ति, दीयेत येषामारोपणं भारतशासनमुचितं मन्येत।

## अध्यायः ३.—संपत्तिः, संविदः, अधिकाराः, दायित्वानि, आभाराः, व्यवहारवादाश्च

२९४. अस्य संविधानस्य प्रारम्भात् पूर्वं पाकिस्तानाधिनिवेशस्य अथवा पश्चिमबङ्गाल-पूर्वबङ्गाल-पश्चिमपञ्जाब-पूर्वपञ्जाबप्रान्तानां निर्माणकारणात्कृतस्य कर्तव्यस्य वा समायोजनस्याधीनत्वे—

अवस्थाविशेषेषु संपत्तेः सर्वस्वस्य अधिकाराणां दायित्वानामाभाराणां चोत्तराधिकारः।

एतस्य संविधानस्य प्रारम्भात्—

(क) सा सर्वा संपत्तिः तानि च सर्वाणि सर्वस्वानि यानि एतादृशारम्भादव्यवहितपूर्वं भारताधिनिवेशशासनस्य प्रयोजनार्थं सम्राजि निहितान्यासन्, सा च सर्वा संपत्तिः तानि च सर्वाणि सर्वस्वानि यानि एतादृशारम्भादव्यवहितपूर्वं प्रत्येकराज्यपालप्रान्तशासनस्य प्रयोजनार्थं सम्राजि निहितान्यासन्, क्रमशः संघे तत्स्थानीयराज्ये च निहितानि भवेयुः, किञ्च

## भागः १२.—वित्तम्, संपत्तिः, संविदः, व्यवहारवादाश्च

### अनुच्छेदौ २९४–२९५

(ख) भारताधिनिवेशशासनस्य प्रत्येकराज्यपालप्रान्तशासनस्य च सर्वेऽधिकाराः, दायित्वानि, आभाराश्च, तेषां कस्याश्चित्संविदः अन्यथा वा उद्भूतत्वेऽपि, क्रमशो भारतशासनस्य प्रत्येकतत्स्थानीयराज्यस्य चाधिकाराः, दायित्वानि आभाराश्च भवेयुः ।

अन्यास्ववस्थासु संपत्तेः सर्वस्वस्य अधिकाराणां दायित्वानामाभाराणां चोत्तराधिकारः ।

२९५. (१) एतस्य संविधानस्य प्रारम्भात्—

(क) सा सर्वा संपत्तिः तानि च सर्वाणि सर्वस्वानि यानि एतादृशारम्भादव्यवहितपूर्वं प्रथमानुसूच्याः (ख)-भाग उल्लिखितस्य कस्यापि राज्यस्य स्थानिनि कस्मिंश्चिदपि देशीयराज्ये निहितान्यासन्, भारतशासनेन तद्राज्यशासनेन सह तद्विषये कृतस्य समयस्याधीनत्वेन, संघे निहितानि भवेयुः, यदि तानि प्रयोजनानि यदर्थम् एतादृशानि संपत्तयः सर्वस्वानि च एतादृशप्रारम्भादव्यवहितपूर्वं संधृतान्यासन् तदनन्तरं संघसूच्याः प्रगणितविषयेष्वन्यतमेन संबद्धानि संघस्य प्रयोजनानि स्युः; किञ्च

(ख) प्रथमानुसूच्याः (ख)-भागोल्लिखितराज्यस्थानिनः कस्यचिदपि देशीयराज्यस्य शासनस्य सर्वेऽधिकाराः, दायित्वानि, आभाराश्च, तेषां कस्याश्चित्संविदोऽन्यथा वा उद्भूतत्वेऽपि, भारतशासनेन तद्राज्यशासनेन सह तद्विषये कृतस्य समयस्याधीनत्वेन भारतशासनस्याधिकारा दायित्वान्याभाराश्च भवेयुः, यदि तानि प्रयोजनानि यदर्थम् एतादृशप्रारम्भादव्यवहितपूर्वमेतादृशा अधिकारा अर्जिता आसन् अथवा दायित्वानि

भागः १२.—वित्तम्, संपत्तिः, संविदः, व्यवहारवादाश्च

अनुच्छेदाः २९५-२९७

आभारा वा प्राप्तान्यासन् तदनन्तरं संघसूच्याः प्रगणितविषयेष्वन्यतमेन संबद्धानि संघस्य प्रयोजनानि स्युः ।

(२) एतस्य संविधानस्य प्रारम्भात्, उपर्युक्तस्याधीनत्वे, प्रथमानुसूच्याः (ख)-भाग उल्लिखितप्रत्येकराज्यस्य शासनम्, प्रथम-खण्डनिर्दिष्टेतरेषां सर्वेषां संपत्तीनां सर्वस्वानां च तथा संविदोऽन्यथा वा उद्भूतानां सर्वेषामधिकाराणां दायित्वानामाभाराणां च विषये, स्वस्थानिनो देशीयराज्यस्योत्तराधिकारि भवेत् ।

२९६. एतत्पश्चादुपबन्धितस्याधीनत्वे, यद्येतत्संविधानं प्रवृत्तं नाभविष्यत् तर्हि भारतराज्यक्षेत्रे यापि संपत्तिः राजगामित्वेन व्यपगतत्वेन अधिकारयुक्तस्वामिनोऽभावे स्वामित्वहीनारिक्थरूपेण वा यथायथं सम्राजे देशीयराज्यशासकाय वा प्रोद्भूता अभविष्यत्, सा संपत्तिः, कस्मिन्नपि राज्येऽवस्थिता चेदेतादृशे राज्ये, अन्यस्यां कस्यांचिदवस्थायां च संघे, निहिता भवेत् ।

राजगामित्वेन व्यपगतत्वेन स्वामिहीनत्वेन वा प्रोद्भूता संपत्तिः ।

परन्तु कापि संपत्तिर्या —तस्मिन् दिनाङ्के यस्मिन् सा एवं सम्राजे देशीयराज्यशासकाय वा प्रोद्भूता अभविष्यत्— भारतशासनस्य किञ्चिद्राज्यशासनस्य वा भुक्तौ नियन्त्रणे वा आसीत्, येषां प्रयोजनानामर्थे सा तदा उपयुक्ता धृता वा आसीत् तानि प्रयोजनानि संघस्य चेत् स्युः, तर्हि संघे, कस्यापि राज्यस्य चेत्तर्हि तस्मिन् राज्ये निहिता भवेत् ।

व्याख्या—अस्मिन्ननुच्छेदे " शासकः " " देशीयराज्यम् " इति शब्दयोः स एवार्थो यः ३६३-तमानुच्छेदे विद्यते ।

२९७. भारतस्य जलप्राङ्गणे समुद्रस्याधःस्थितानि सर्वा भूमयः सर्वाणि खनिजानि अन्यानि च मूल्यवन्ति वस्तूनि संघे निहितानि भवेयुः संघस्य प्रयोजनार्थं च धृतानि भवेयुः ।

जलप्राङ्गणे स्थितानि मूल्यवन्ति वस्तूनि संघे निहितानि भवेयुः ।

## भागः १२.—वित्तम्, संपत्तिः, संविदः, व्यवहारवादाश्च

### अनुच्छेदाः २९८–३००

संपत्तेरर्जनस्य शक्तिः ।

२९८. (१) संघस्य प्रत्येकराज्यस्य च कार्यपालिका शक्तिः, समुचितविधानमण्डलेन निर्मितस्य कस्यापि विधेरधीनत्वे, यथायथं संघस्य एतादृशस्य राज्यस्य वा प्रयोजनार्थं धृतायाः कस्या अपि संपत्तेरनुदानं विक्रयं व्ययनं बन्धकं वा यावत्, क्रमशस्तत्प्रयोजनार्थं च संपत्तेः क्रयमर्जनं वा यावत्, संवित्करणं च यावद् विस्तृता भवेत् ।

(२) संघस्य कस्यापि राज्यस्य वा प्रयोजनानां कृतेऽर्जिता सर्वा संपत्तिर्यथायथं संघे एतादृशे राज्ये वा निहिता भवेत् ।

संविदः ।

२९९. (१) संघस्य अथवा कस्यापि राज्यस्य कार्यपालिकायाः शक्तेः प्रयोगेण कृताः सर्वाः संविदः, यथायथम्, राष्ट्रपतिना अथवा तस्य राज्यस्य राज्यपालेन राजप्रमुखेन वा करणीयत्वेनाभिधीयेरन्; किञ्च तस्याः शक्तेः प्रयोगेण कृताः सर्वा एतादृश्यः संविदः सर्वाणि च संपत्तिहस्तान्तरणपत्राणि राष्ट्रपते राज्यपालस्य वा राजप्रमुखस्य वा कृते एतादृशैर्जनैरेतादृश्या च रीत्या लिखितानि भवेयुर्यथा तेन निर्दिश्यते प्राधिक्रियते वा ।

(२) नहि राष्ट्रपतिर्नापि राज्यपालो राजप्रमुखो वा एतत्संविधानस्य प्रयोजनानां हेतोः, अथवा भारतशासनसंबन्धिन इतः पूर्वं प्रवर्तितस्य कस्याप्यधिनियमनस्य प्रयोजनानां हेतोः कृताया लिखिताया वा कस्या अपि संविदः कृतस्य लिखितस्य वा कस्यापि हस्तान्तरणपत्रस्य वा विषये वैयक्तिकरूपेणोत्तरदायी भवेत्, नापि कश्चिज्जनस्तेषामन्यतमस्य कृते कामप्येतादृशीं संविदं किमप्येतादृशं हस्तान्तरणपत्रं वा कुर्वन् लिखन् वा तद्विषये वैयक्तिकरूपेणोत्तरदायी भवेत् ।

व्यवहारवादाः कार्यप्रवृत्तयश्च ।

३००. (१) भारतसंघस्य नाम्ना भारतशासनं वादि भवितुमर्हति प्रतिवादि वा भवितुमर्हति, तथा कस्यापि राज्यस्य नाम्ना तद्राज्यशासनं वादि भवितुमर्हति प्रतिवादि वा भवितुमर्हति, तथा एतत्संविधानेन प्रदत्तशक्तीनामाश्रयेण संसदा एतादृशराज्यविधानमण्डलेन वा निर्मिताधिनियमेन

## भागः १२.—वित्तम्, संपत्तिः, संविदः, व्यवहारवादाश्च

### अनुच्छेदः ३००

करणीयोपबन्धानामधीनत्वेन ते स्वस्वकार्यसंबन्धे तास्वेवावस्थासु वादिनी भवितुमर्हतः प्रतिवादिनी वा भवितुमर्हतः यासु भारताधिनिवेशस्तत्स्थानिप्रान्ताश्च तत्स्थानिदेशीयराज्यानि वा वादीनि भवितुमार्हिष्यन्, प्रतिवादीनि वा भवितुमार्हिष्यन्, यद्येतत्संविधानायाधिनियमरूपता दत्ता नाभविष्यत्।

(२) यद्येतत्संविधानस्य प्रारम्भे—

(क) काश्चिद्विधिकार्यप्रवृत्तयो लम्बिताः स्युर्यत्र भारताधिनिवेश एकः पक्षो विद्यते, तर्हि तासु कार्यप्रवत्तिषु भारताधिनिवेशस्य स्थाने भारतसंघोऽवगम्येत; तथा

(ख) काश्चिद्विधिकार्यप्रवृत्तयो लम्बिताः स्युर्यत्र कोऽपि प्रान्तः किमपि देशीयराज्यं वा एकः पक्षो विद्यते, तर्हि तासु कार्यप्रवृत्तिषु तस्य प्रान्तस्य तस्य देशीयराज्यस्य वा स्थाने तत्थानीयं राज्यमवगम्येत।

# भागः १३

## भारतराज्यक्षेत्रस्याभ्यन्तरे व्यापारो वाणिज्यं समागमश्च

व्यापारस्य वाणिज्यस्य समागमस्य च स्वतन्त्रता ।

३०१. भागस्यास्यान्येषामुपबन्धानामधीनत्वे भारतराज्यक्षेत्रे व्यापारो वाणिज्यं समागमश्च निर्बाधं प्रवर्तेरन् ।

व्यापारवाणिज्यसमागमेषु निर्बन्धनारोपणार्थं संसदः शक्तिः ।

३०२. संसद् विधिना कस्यापि राज्यस्य राज्यान्तरस्य च मध्ये भारतराज्यक्षेत्रस्य कस्यापि भागस्याभ्यन्तरे वा व्यापारस्य, वाणिज्यस्य, समागमस्य वा स्वतन्त्रतायामेतादृशानि निर्बन्धनान्यारोपयितुमर्हति यादृशानि लोकहितायापेक्ष्येरन् ।

व्यापारवाणिज्यविषये संघस्य राज्यानां च विधायिनीषु शक्तिषु निर्बन्धनानि ।

३०३. (१) ३०२-तमानुच्छेदगतं सर्वमविगणय्य, सप्तमानुसूच्याः कस्यामपि सूच्यां व्यापारवाणिज्यसंबन्धिन्याः कस्या अपि प्रविष्टेराधारेण नहि संसदो नापि कस्यापि राज्यस्य विधानमण्डलस्य कस्याप्येतादृशस्य विधेर्निर्माणस्य शक्तिर्भवेद् य एकस्मै राज्याय इतरराज्यापेक्षया अधिमानं ददाति तद्दानं वा अधिकृतं करोति, अथवा द्वयो राज्ययोर्मध्ये विभेदं करोति तत्करणं वा प्राधिकृतं करोति ।

(२) प्रथमखण्डगतं किमपि संसदं कमप्यधिमानं ददतस्तद्दानं वा प्राधिकृतीकुर्वतः, अथवा कमपि विभेदं कुर्वतस्तत्करणं वा प्राधिकृतीकुर्वतः कस्यापि विधेर्निर्माणान्न वारयेत्, एतादृशेन विधिनैतद् घोष्यते चेद् यद् भारतराज्यक्षेत्रस्य कस्मिन्नपि भागे भाण्डानां दुर्लभतावशादुत्पन्नायाः स्थितेः प्रतीकारार्थमेवंकरणमावश्यकं वर्तते ।

राज्यानां पारस्परिकेषु व्यापारवाणिज्यसमागमेषु निर्बन्धनानि ।

३०४. ३०१-तमानुच्छेदगतं ३०३-तमानुच्छेदगतं वा सर्वमविगणय्य, कस्यापि राज्यस्य विधानमण्डलं विधिना—

(क) राज्यान्तरेभ्य आयातेषु भाण्डेषु कमप्येतादृशं करमारोपयितुमर्हति यस्तस्मिन् राज्ये निर्मितेषूत्पादितेषु

वा तादृशेषु भाण्डेष्वारोप्यते, किन्त्वेवं प्रकारेण यदेवमायातानां भाण्डानामेवं निर्मितानामुत्पादितानां वा भाण्डानां च मध्ये विभेदो न भवति; तथा

(ख) तेन राज्येन साकं तदभ्यन्तरे वा व्यापारवाणिज्यसमागमानां स्वतन्त्रतायामेतादृशानि युक्तियुक्तानि निर्बन्धनान्यारोपयितुमर्हति यादृशानि लोकहितार्थमपेक्ष्येरन्—

परन्तु (ख)-खण्डस्य प्रयोजनार्थं किमपि विधेयकं संशोधनं वा राष्ट्रपतेः पूर्वस्वीकृतिमन्तरेण कस्यापि राज्यस्य विधानमण्डले पुरःस्थापितं प्रस्तावितं वा न भवेत् ।

वर्तमानविधिषु ३०१-तम-३०३-तमानुच्छेदयोः प्रभावः ।

३०५. यावद्राष्ट्रपतिरादेशेनान्यथोपबन्धयेत्तावदन्तरेण ३०१-तम-३०३-तमानुच्छेदयोः किमपि कस्यापि वर्तमानविधेरुपबन्धान् न स्पृशेत् ।

प्रथमानुसूच्याः (ख)-भाग उल्लिखितानां केषाञ्चिद् राज्यानां व्यापारवाणिज्ययोर्निर्बन्धनारोपणस्य शक्तिः ।

३०६. अस्य भागस्य पूर्वगाम्युपबन्धेषु एतत्संविधानस्यान्येषूपबन्धेषु वा गतं सर्वमविगणय्य, प्रथमानुसूच्याः (ख)-भाग उल्लिखितं किञ्चिदपि राज्यम्, यत्संविधानस्यास्य प्रारम्भात्पूर्वमन्येभ्यो राज्येभ्यस्तस्मिन् राज्ये भाण्डानामायाते तस्माद्राज्याद्वान्यराज्येषु भाण्डानां निर्याते कमपि करं शुल्कं वा उद्गृह्णदासीत्, एतादृशस्य करस्य शुल्कस्य वा, भारतशासनस्य तद्राज्यशासनस्य च मध्ये तदर्थं समयः संजायते चेत्, एतादृशसमयस्य निर्बन्धनानामधीनत्वे तथा संविधानस्यास्य प्रारम्भाद् दशभ्यो वर्षेभ्योऽनधिकमेतादृशं कालावधिं यावद्यादृशः समये उल्लिखितो भवेत्, आरोपणं संग्रहणं चानुवर्तितुमर्हति—

परन्तु एतादृशप्रारम्भात्पञ्चवर्षसमाप्तेरनन्तरं कस्मिन्नपि काले यदि राष्ट्रपतिः २८०-तमानुच्छेदस्यानुरोधेन घटितवित्तायोगस्य प्रतिवेदनस्य

## भागः १३.—भारतराज्यक्षेत्रस्याभ्यन्तरे व्यापारो वाणिज्यं समागमश्च.— अनुच्छेदौ ३०६–३०७

विचारानन्तरमेतादृशस्य कस्यापि समयस्य समाप्तिं रूपभेदं वा कर्तुमावश्यकं मन्यते तर्हि स एवं कर्तुमर्हति ।

३०१-तमादारभ्य ३०४-तमपर्यन्तानामनुच्छेदानां प्रयोजनानि कार्यान्वितानि विधातुं प्राधिकारिणो नियुक्तिः ।

३०७. संसद् विधिना एतादृशस्य प्राधिकारिणो नियुक्तिं कर्तुमर्हति यादृशं सा ३०१-३०२-३०३-३०४-तमानुच्छेदानां प्रयोजनानि कार्यान्वितानि विधातुं समुचितं मन्यते तथा एवं नियुक्ताय प्राधिकारिणे एतादृशीः शक्तीरेतादृशानि कर्तव्यानि च समर्पयितुमर्हति यादृशानि सा आवश्यकानि मन्यते ।

# भागः १४

## संघस्य राज्यानां चाधीनाः सेवाः

### अध्यायः १.—सेवाः

निर्वचनम् ।

३०८. भागेऽस्मिन्, प्रसङ्गेनान्यथा अपेक्षितं चेन्न भवति, "राज्यम्" इति शब्देन प्रथमानुसूच्याः (क)-भागे (ख-)भागे वा उल्लिखितं किमपि राज्यमभिप्रेयते ।

संघस्य कस्यापि राज्यस्य वा सेवां कुर्वतां जनानां संग्रहणं सेवायाः प्रतिबन्धाश्च ।

३०९. एतत्संविधानस्योपबन्धानामधीनत्वे, समुचितविधानमण्डलस्याधिनियमाः संघस्य कस्यचिदपि राज्यस्य वा कार्यैः संबद्धानां लोकसेवानां पदानां च कृते संग्रहणस्य नियुक्तजनानां सेवायाः प्रतिबन्धानां च विनियमनं कर्तुमर्हन्ति—

परन्तु यावदेतदनुच्छेदानुरोधेन समुचितविधानमण्डलस्याधिनियमेन तदनुरोधेन वा तदर्थमुपबन्धो न क्रियते तावद् यथायथं संघस्य कार्यैः संबद्धानां सेवानां पदानां च विषये राष्ट्रपतिः, स जनो वा यं स निदिशेत्, तथा कस्यापि राज्यस्य कार्यैः संबद्धानां सेवानां पदानां च विषये तद्राज्यस्य राज्यपालो राजप्रमुखो वा, स जनो वा यं स निदिशेत्, एतादृशीनां सेवानाम् एतादृशानां पदानां च कृते संग्रहणस्य नियुक्तजनानां सेवायाः प्रतिबन्धानां च विनियामकनियमानां निर्माणे क्षमो भवेत्; किञ्च एवं निर्मिताः केऽपि नियमाः कस्याप्येतादृशस्याधिनियमस्योपबन्धानामधीनत्वे कार्यकरा भवेयुः ।

संघं किमपि राज्यं वा सेवयतां जनानां पदावधिः ।

३१०. (१) एतत्संविधानेन स्पष्टतयोपबन्धितत्वावस्थां विहाय, प्रत्येकं जनो यः संघस्य प्रतिरक्षासेवाया वा, असैनिकसेवाया वा, अखिलभारतीयसेवाया वा सदस्यो वर्तते, अथवा संघस्याधीनं प्रतिरक्षया संबद्धं किमपि पदं किमपि असैनिकं पदं वा धारयते, राष्ट्रपतेः प्रसादपर्यन्तं पदं धारयते; किञ्च प्रत्येकं जनो यः कस्यापि राज्यस्यासैनिकसेवायाः सदस्यो वर्तते कस्यापि राज्यस्याधीनं किमप्यसैनिकं पदं वा धारयते यथायथं तद्राज्यस्य राज्यपालस्य राजप्रमुखस्य वा प्रसादपर्यन्तं पदं धारयते ।

## भागः १४.—संघस्य राज्यानां चाधीनाः सेवाः

### अनुच्छेदौ ३१०-३११

(२) सत्यप्येवं यत्संघस्य कस्यापि राज्यस्य वा अधीनमसैनिकं पदं धारयमाणः कोऽपि जनो यथायथं राष्ट्रपतेरथवा तद्राज्यस्य राज्यपालस्य राजप्रमुखस्य वा प्रसादपर्यन्तं पदं धारयते, कापि संविद् यस्या अधीनं कोऽपि जनः, यः प्रतिरक्षासेवाया वा अखिलभारतीयसेवाया वा संघस्य कस्यापि राज्यस्य वा असैनिकसेवाया वा सदस्यो न वर्तते, कस्याप्येतादृशस्य पदस्य धारणार्थमेतत्संविधानस्याधीनं नियुज्यते, इममुपबन्धं कर्तुमर्हति यद्, यदि यथायथं राष्ट्रपतिः राज्यपालो वा राजप्रमुखो वा विशेषार्हतावतो जनस्य सेवानां प्राप्त्यै एतदावश्यकं मन्यते तर्हि, समयगतस्य कालावधेः समाप्तेः प्राक् तस्य पदस्यावसानं क्रियते चेत्, अथवा तत्कृतेन केनापि दुराचारेणासंबद्धैः कारणैस्तत्पदं तेन रिक्तीकरणीयमित्यपेक्ष्यते चेत्, तस्मै प्रतिकरः प्रदातव्यो भवेत्।

संघस्य कस्यापि राज्यस्य वा अधीनमसैनिकरूपेण नियुक्तानां जनानां पदात् च्युतिः, पदादपसारणम्, अपकर्षणं वा।

३११. (१) कोऽपि जनः, यः संघस्यासैनिकसेवायाः, अखिलभारतीयसेवाया वा, कस्यापि राज्यस्यासैनिकसेवाया वा सदस्यो वर्तते, अथवा संघस्य कस्यापि राज्यस्य वा अधीनमसैनिकं पदं धारयते, स्वनियोजकस्य प्राधिकारिणोऽधीनेन प्राधिकारिणा पदाच्च्युतः पदादपसारितो वा न क्रियेत ।

(२) उपर्युक्तप्रकारकः कोऽपि जनस्तावत् पदाच्च्युतः पदादपसारितोऽपकृष्टो वा न क्रियेत यावत्तस्मै तद्विषये कर्तव्यत्वेन प्रस्थाप्यमानायाः क्रियाया विरुद्धं कारणप्रदर्शनस्य युक्तियुक्तोऽवसरो दत्तो न भवेत्—

परन्तु एष खण्डस्तत्र प्रवृत्तो न भवेत्—

(क) यत्र कोऽपि जनस्तस्याचरणस्य कारणात् पदात् च्युतोऽपसारितो वा अपकृष्टो वा वर्तते यद्धेतोः दण्डदोषारोपानन्तरं स सिद्धदोषोऽभूत्; [ ? अथवा]

(ख) यत्र कमपि जनं पदच्युतं कर्तुं पदादपसारितं कर्तुं वा अपकृष्टं कर्तुं वा शक्तिमान् प्राधिकारी

## भागः १४.—संघस्य राज्यानां चाधीनाः सेवाः

### अनुच्छेदाः ३११-३१३

समाहितो भवति यत्तेन प्राधिकारिणा लेखबद्धरूपतामापादनीयात् कस्मादपि कारणादेतद्युक्तियुक्तरूपेण व्यवहार्यं नास्ति यत्तस्मै जनाय कारणप्रदर्शनस्यावसरः प्रदीयतामिति; अथवा

(ग) यत्र यथायथं राष्ट्रपती राज्यपालो वा राजप्रमुखो वा समाहितो भवति यद् राज्यसुरक्षाहितार्थं तस्मै जनाय एतादृशावसरप्रदानं प्रसङ्गोचितं न विद्यत इति।

(३) द्वितीयखण्डस्याधीनं कस्मै अपि जनाय कारणप्रदर्शनस्यावसरप्रदानं युक्तियुक्तरूपेण व्यवहार्यं विद्यते न वेति प्रश्नो जायते चेतर्हि एतादृशं जनं यथायथं पदच्युतं कर्तुं पदादपसारितं कर्तुं वा अपकृष्टं कर्तुं वा शक्तिमतः प्राधिकारिणस्तत्र विनिश्चयोऽन्तिमो भवेत्।

३१२. (१) एकादशभागगतं सर्वमविगणय्य, यदि राज्यपरिषद् उपस्थितानां मतदातॄणां च सदस्यानां तृतीयांशद्वयादन्यूनसंख्यया समर्थितेन संकल्पेन राष्ट्रहिताय एवंकरणमावश्यकं प्रसङ्गोचितं वा विद्यत इति घोषितं करोति, तर्हि संसद्विधिना संघस्य राज्यानां च कृते साधारण्या एकस्या अखिलभारतीयसेवायाः, अधिकानां वा, सर्जनार्थमुपबन्धं कर्तुम् अर्हति, तथा एतदध्यायस्यान्योपबन्धानामधीनत्वे कस्यैचिद् अपि एतादृशसेवायै संग्रहणस्य नियुक्तानां सेवायाः प्रतिबन्धानां च विनियमनं कर्तुमर्हति। अखिलभारतीयाः सेवाः।

(२) एतस्य संविधानस्य प्रारम्भे 'भारतप्रशासनसेवा,' 'भारतारक्षिसेवा' चेत्येवं ज्ञातसेवा एतदनुच्छेदस्यानुरोधेन संसदा सृष्टाः सेवा मन्येरन्।

३१३. यावदेतत्संविधानस्याधीनमेतदर्थमन्य उपबन्धो न निर्मीयते तावदेतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं प्रवृत्ताः, तथा एतत्संविधानस्य प्रारम्भादनन्तरमखिलभारतीयसेवाया अथवा संघस्य राज्यस्य वा अधीनसेवाया अधीनपदस्य वा रूपेण स्थितिम् अनुवर्तमानां कामपि लोकसेवाम् संक्रमणकालिका उपबन्धाः।

## भागः १४.--संघस्य राज्यानां चाधीनाः सेवाः

### अनुच्छेदाः ३१३-३१५

[अनुवर्तमानं] किमपि पदं वा विषयीकुर्वन्तः सर्वे विधयस्तावत्प्रवृत्तत्वेनानुवर्तेरन् यावत्ते एतत्संविधानस्योपबन्धैः संगता भवेयुः ।

कासांचित् सेवानां वर्तमानपदाधिकारिणां संरक्षणार्थमुपबन्धः ।

३१४. एतत्संविधानेन स्पष्टतयोपबन्धितत्वावस्थां विहाय, प्रत्येकं जनो यः 'सेक्रेटरी आफ़ स्टेट' इत्याख्येन 'सेक्रेटरी आफ़ स्टेट इन कौन्सिल' इत्याख्येन वा भारते सम्राजः कस्यामप्यसैनिकसेवायां नियुक्तेरनन्तरमेतत्संविधानस्य प्रारम्भे तत्पश्चाच्च भारतशासनस्य कस्यापि राज्यस्य शासनस्य वा अधीनं सेवायामनुवर्तते, भारतशासनात्तद्राज्यशासनाद्वा, यस्य सेवां स काले काले करोति, पारिश्रमिकस्य विश्रामस्य निवृत्तिवेतनस्य च विषये तानेव सेवाप्रतिबन्धान्, तथानुशासनीयविषयाणां संबन्धे तानेवाधिकारान्, तत्तुल्यान्वा एतादृशानधिकारान् यथा ते परिवर्तितपरिस्थितौ संभवन्ति, आप्तुं स्वत्ववान् भवेद् येषु तस्य जनस्य एतादृशारम्भादव्यवहितपूर्वं स्वत्वमासीत् ।

#### अध्यायः २. —लोकसेवायोगाः

संघार्थं राज्यार्थं च लोकसेवायोगाः ।

३१५. (१) एतदनुच्छेदस्योपबन्धानामधीनत्वे संघार्थमेको लोकसेवायोगः प्रत्येकराज्यार्थं चैको लोकसेवायोगो भवेत् ।

(२) द्वे अधिकानि वा राज्यानि समयं कर्तुमर्हन्ति यत्तद्राज्यवर्गार्थमेको लोकसेवायोगो भवेदिति, तथा यदि तदुद्देश्येन संकल्पः प्रत्येकं तयो राज्ययोस्तेषां राज्यानां वा विधानमण्डलस्य सदनेन, अथवा यत्र द्वे सदने वर्तेते तत्र प्रत्येकसदनेन, पार्यते तर्हि, संसद् विधिना तयो राज्ययोस्तेषां राज्यानां वा आवश्यकतानां पूर्त्यै संयुक्तराज्यलोकसेवायोगस्य ( अस्मिन्नध्याये यः संयुक्तायोग इत्येवं निर्दिश्यते ) नियुक्तेरुपबन्धं कर्तुमर्हति ।

(३) उपर्युक्तविधावेतादृशाः प्रासङ्गिका आनुषङ्गिकाश्चोपबन्धा अन्तर्निविष्टा भवितुमर्हन्ति यादृशास्तस्य विधेः प्रयोजनानां कार्यान्विततां विधातुम् आवश्यका वाञ्छनीया वा भवेयुः ।

(४) कस्यापि राज्यस्य राज्यपालेन राजप्रमुखेन वा एवं कर्तुं प्रार्थितश्चेत्संघस्य लोकसेवायोगः, राष्ट्रपतेरनुमोदनेन, तस्य राज्यस्य सर्वासां कासांचिद्वा आवश्यकतानां पूर्त्यै कार्यकरणं स्वीकर्तुमर्हति ।

(५) संविधानेऽस्मिन् संघलोकसेवायोगस्य राज्यलोकसेवायोगस्य वा निर्देशाः, प्रसङ्गेनान्यथा अपेक्षितं चेन्न भवति, प्रकृतस्य विशेषविषयस्य संबन्धेन यथायथं संघस्य राज्यस्य वा आवश्यकतानां पूर्तिकरस्य आयोगस्य निर्देशा इत्यर्थः क्रियेत ।

३१६. (१) लोकसेवायोगस्याध्यक्षस्य अन्येषां च सदस्यानां नियुक्तिः, स चेत् संघायोगः संयुक्तायोगो वा भवति, राष्ट्रपतिना तथा, स राज्यायोगश्चेद्, राज्यस्य राज्यपालेन राजप्रमुखेन वा क्रियेत—— सदस्यानां नियुक्तिस्तथा पदावधिः ।

परन्तु प्रत्येकलोकसेवायोगस्य सदस्येषु यथासंभवमुपार्धं सदस्यास्ते जना भवेयुर्ये स्वस्वनियुक्तिदिनाङ्के भारतशासनस्य किञ्चिद्राज्यशासनस्य वा अधीनं न्यूनान्न्यूनं दशवर्षपर्यन्तं पदधारणं कृतवन्तो भवेयुः, तथा दशानां वर्षाणामुक्तकालावधेः संगणनायां स कालावधिरपि संमिलितो भवेद् यस्मिन् एतत्संविधानस्य प्रारम्भात्पूर्वं केनापि जनेन भारतस्य सम्राजोऽधीनं कस्यापि देशीयराज्यस्याधीनं वा पदधारणं कृतम् अभूत् ।

(२) लोकसेवायोगस्य सदस्यः, स्वपदग्रहणदिनाङ्कादारभ्य षड्वर्षावधिं यावत्, अथवा, यदि स संघायोगस्तर्हि, पञ्चषष्टिवर्षवयसः प्राप्तिं यावत्, तथा यदि स राज्यायोगः संयुक्तायोगो वा भवति तर्हि, षष्टिवर्षवयसः प्राप्तिं यावत्, यदप्येनयोः पूर्वतरं भवति, पदधारणं कुर्यात्——

परन्तु——

(क) लोकसेवायोगस्य कोऽपि सदस्यः, यदि स संघायोगः संयुक्तायोगो वा भवति तर्हि, राष्ट्रपतिम्, तथा,

यदि स राज्यायोगस्तर्हि, राज्यस्य राज्यपालं राजप्रमुखं वा, संबोध्य लिखितेन स्वहस्ताङ्कितेन लेखेन पदं त्यक्तुमर्हति ;

(ख) लोकसेवायोगस्य कोऽपि सदस्यः, स्वपदात् ३१७-तमानुच्छेदस्य प्रथमखण्डे तृतीयखण्डे वा उपबन्धितरीत्या अपसारणमर्हति ।

(३) कोऽपि जनः, यो लोकसेवायोगस्य सदस्यत्वेन पदधारणं करोति, स्वपदावधेः समाप्तौ तस्मिन् पदे पुनर्नियुक्तेरपात्रं भवेत् ।

लोकसेवायोगस्य कस्यापि सदस्यस्य अपसारणं निलम्बनं वा ।

३१७. (१) तृतीयखण्डस्योपबन्धानामधीनत्वे, लोकसेवायोगस्य सभापतिरन्यः कश्चित्सदस्यो वा स्वपदात् केवलं दुराचारस्याधारेण राष्ट्रपतेः—उच्चतमन्यायालयेन, तं प्रति राष्ट्रपतिना पृच्छायां कृतायाम्, १४५-तमानुच्छेदानुरोधेन तदर्थं विहितप्रक्रियानुसारेण परिप्रश्नस्यानन्तरम्, यथायथं स सभापतिरन्य एतादृशः सदस्यो वा केनाप्येतादृशेनाधारेण पृथक् करणीय इत्येवं कृतस्य प्रतिवेदनस्य पश्चात्—आदेशेन पृथक् क्रियेत ।

(२) संघायोगविषये संयुक्तायोगविषये वा राष्ट्रपतिः, राज्यायोगविषये च राज्यपालो राजप्रमुखो वा, आयोगस्य सभापतिमन्यं कंचित्सदस्यं वा, यद्विषये प्रथमखण्डस्यानुरोधेन, उच्चतमन्यायालयं प्रति पृच्छा कृता विद्यते, पदात्तावन्निलम्बितुमर्हति यावद्राष्ट्रपतिरेतादृशपृच्छायामुच्चतमन्यायालयस्य प्रतिवेदनप्राप्तेरनन्तरमादेशं न ददाति ।

(३) प्रथमखण्डगतं सर्वमविगणय्य, यथायथं लोकसेवायोगस्य सभापतिरन्यः कश्चित्सदस्यो वा यदि——

(क) ऋणशोधनाशक्त इति न्यायालयेन निर्णीयते; अथवा

(ख) स्वपदावधौ स्वपदकर्तव्येभ्यो बहिः कामपि वैतनिकीं नियोजनां धारयते; अथवा

भागः १४.--संघस्य राज्यानां चाधीनाः सेवाः

अनुच्छेदाः ३१७-३१९

(ग) राष्ट्रपतेर्मतौ मानसस्य शारीरस्य वा दौर्बल्यस्य हेतोः स्वपदेऽनुवर्तनाय अयोग्यो भवति,

तर्हि राष्ट्रपतिस्तं सभापतिमेतादृशमन्यं सदस्यं वा आदेशेन स्वपदादपसारितं कर्तुमर्हति।

(४) यदि लोकसेवायोगस्य सभापतिरन्यः कश्चित्सदस्यो वा भारतशासनेन कस्यापि राज्यस्य शासनेन वा तत्प्रातिनिध्येन वा कृतायां संविदि [ कृते ] समये वा, निगमितसमवायस्य सदस्यत्वमन्यसदस्यैः सह साधारणीभावं च अन्तरेण केनापि प्रकारेण संपृक्तो हितसंबद्धो वा वर्तते जायते वा अथवा केनापि प्रकारेण ततो लाभे, तदुत्पन्ने हिते उपलब्धौ वा भागहरो भवति, तर्हि स प्रथमखण्डस्य प्रयोजनार्थं दुराचारापराधीति मन्येत।

३१८. संघायोगस्य संयुक्तायोगस्य वा विषये राष्ट्रपतिः, राज्यायोगस्य च विषये तद्राज्यस्य राज्यपालो राजप्रमुखो वा, विनियमैः—

आयोगस्य सदस्यानां कर्मचारिवृन्दस्य च सेवायाः प्रतिबन्धानां विषये विनियमनिर्माणस्य शक्तिः।

(क) आयोगस्य सदस्यानां संख्यां तथा तत्सेवायाः प्रतिबन्धान् निर्धारयितुमर्हति; तथा,

(ख) आयोगस्य कर्मचारिवृन्दस्य सदस्यानां संख्यायास्तथा तत्सेवायाः प्रतिबन्धानां संबन्ध उपबन्धान् निर्मातुमर्हति—

परन्तु कस्यापि लोकसेवायोगसदस्यस्य सेवाप्रतिबन्धेषु तस्य नियुक्तेरनन्तरं तदर्थं लाभापकर्षकारि परिवर्तनं न क्रियेत।

३१९. पदधारणस्यावसाने--

आयोगस्य सदस्यानामेतादृशसदस्यत्वस्यावसाने पदधारणसंबन्धे प्रतिषेधः।

(क) संघलोकसेवायोगस्य सभापतिर्भारतशासनस्य कस्यापि राज्यस्य शासनस्य वा अधीनं कस्या अप्यन्यस्या नियोजनाया अपात्रं भवेत्;

## भागः १४.—संघस्य राज्यानां चाधीनाः सेवाः

### अनुच्छेदौ ३१९–३२०

(ख) कस्यापि राज्यस्य लोकसेवायोगस्य सभापतिः संघलोकसेवायोगस्य सभापतित्वेन अन्यसदस्यत्वेन वा अथवा कस्याप्यन्यस्य राज्यस्य लोकसेवायोगस्य सभापतित्वेन नियुक्तः पात्रं भवेत्, किन्तु भारतशासनस्य कस्यापि राज्यस्य शासनस्य वा अधीनं कस्या अप्यन्यस्या नियोजनायाः पात्रं न भवेत्;

(ग) संघलोकसेवायोगस्य सभापतिमतिरिच्य कोऽप्यन्यः सदस्यः संघलोकसेवायोगस्य सभापतित्वेन अथवा राज्यलोकसेवायोगस्य सभापतित्वेन नियुक्तः पात्रं भवेत्, किन्तु भारतशासनस्य कस्यापि राज्यस्य शासनस्य वा अधीनं कस्या अप्यन्यस्या नियोजनायाः पात्रं न भवेत्;

(घ) कस्यापि राज्यस्य लोकसेवायोगस्य सभापतिमतिरिच्य कोऽप्यन्यः सदस्यः संघलोकसेवायोगस्य सभापतित्वेन अन्यसदस्यत्वेन वा अथवा तस्यैव अन्यस्य वा राज्यलोकसेवायोगस्य सभापतित्वेन नियुक्तः पात्रं भवेत्, किन्तु भारतशासनस्य कस्यापि राज्यस्य शासनस्य वा अधीनं कस्या अप्यन्यस्या नियोजनायाः पात्रं न भवेत्।

लोकसेवायोगानां कृत्यानि।

३२०. (१) संघस्य सेवासु राज्यस्य च सेवासु नियुक्तीनां प्रयोजनाय परीक्षाणां संचालनं क्रमशः संघस्य राज्यस्य च लोकसेवायोगयोः कर्तव्यं भवेत्।

(२) काभ्यामपि द्वाभ्यां राज्याभ्यामधिकैर्वा राज्यैरेवं कर्तुं प्रार्थितश्चेत् संघलोकसेवायोगस्य एतदपि कर्तव्यं भवेद् यत् सः कासांचित् सेवानां कृते, यदर्थं विशेषार्हतावन्तोऽभ्यर्थिनोऽपेक्ष्यन्ते, संयुक्तसंग्रहणस्य

भागः १४.—संघस्य राज्यानां चाधीनाः सेवाः

अनुच्छेदः ३२०

याजनानां निर्माणे प्रवर्तने च तयो राज्ययोस्तेषां राज्यानां वा सहायतां कुर्यात् ।

(३) यथायथं संघलोकसेवायोगेन वा साकम्—

(क) असैनिकसेवासु तथा असैनिकपदानां प्रयोजनेन संग्रहणस्य रीतिभिः संबद्धेषु समस्तविषयेषु;

(ख) असैनिकसेवासु असैनिकपदेषु च नियुक्तौ, तथा एकसेवातोऽन्यसेवायां पदोन्नतौ स्थानान्तरणे चानुस्रियमाणेषु सिद्धान्तेषु, तथा एतादृशीभ्यो नियुक्तिभ्यः पदोन्नतिभ्यः स्थानान्तरणेभ्यो वा अभ्यर्थिनामुपयुक्तताविषये;

(ग) भारतशासनस्य कस्यापि राज्यस्य शासनस्य वा असैनिकरूपेण सेवां कुर्वन्तं जनं स्पृशत्सु समस्तेष्वनुशासनविषयेषु, सहैव एतादृशविषयसंबद्धैरभ्यावेदनैर्याचिकाभिर्वा;

(घ) स्वकर्तव्यपालने कृतानां [ शक्तिरस्तीति ] अभिप्रेत्य वा कृतानां कार्याणां संबन्धे तं प्रतिवादिनं कृत्वा प्रचालितासु विधिसंबन्धिनीषु कार्यप्रवृत्तिषु स्वप्रतिरक्षार्थं तेन कृतः परिव्ययो यथायथं भारतसंचितनिधे राज्यसंचितनिधेर्वा दातव्य इति, भारतशासनस्य किञ्चिद्राज्यशासनस्य वा अधीनम्, भारतस्य सम्राजो वा अधीनं कस्यापि देशीयराज्यस्य शासनस्य वा अधीनम् असैनिकरूपेण सेवां कुर्वता कृतवता वा जनेन तत्संबन्धे वा कृतायामभ्यर्थनायाम्;

## भागः १४.—संघस्य राज्यानां चाधीनाः सेवाः

### अनुच्छेदः ३२०

(ङ) भारतशासनस्य कस्यापि राज्यस्य शासनस्य वा अधीनम्, भारतसम्राजो वा अधीनं कस्यापि देशीयराज्यस्य शासनस्य वा अधीनम् असैनिकरूपेण सेवां कुर्वता केनापि जनेनाधिगतायाः क्षतेर्विषये निवृत्तिवेतनप्रदानार्थं कस्यामप्यभ्यर्थनायाम्, तथैतादृशप्रदानस्य कियान् राशिर्भवेदिति प्रश्ने च,

परामर्शः क्रियेत, तथैवंपृष्टे कस्मिन्नपि विषये अन्यस्मिंश्चापि यथायथं राष्ट्रपतिना तद्राज्यस्य वा राज्यपालेन राजप्रमुखेन वा पृष्टे कस्मिन्नपि विषये परामर्शदानं लोकसेवायोगस्य कर्तव्यं भवेत्—

परन्तु अखिलभारतीयसेवानां विषये तथा संघकार्यैः संसक्तानामन्यसेवानां पदानां चापि विषये राष्ट्रपतिः, तथा कस्यापि राज्यस्य कार्यैः संसक्तानामन्यसेवानां पदानां च विषये यथायथं राज्यपालो राजप्रमुखो वा तान् विषयानुल्लिखतो विनियमान् निर्मातुमर्हति, येषु साधारणतया, केनापि विशेषवर्गेण वा संबद्धेऽर्थे, कासुचिद्विशेषपरिस्थितिषु वा, लोकसेवायोगेन सह परामर्श आवश्यको न भवेत्।

(४) तृतीयखण्डगतं किमपि, तस्या रीतेर्विषये यया षोडशानुच्छेदस्य चतुर्थखण्डे निर्दिष्टः कोऽप्युपबन्धो निर्मीयेत तस्या वा रीतेर्विषये यया ३३५-तमानुच्छेदस्योपबन्धाः कार्यकरा भवितुमर्हन्ति, लोकसेवायोगेन सह परामर्शं नापेक्षेत।

(५) तृतीयखण्डस्य पारन्तुकस्यानुरोधेन राष्ट्रपतिना अथवा कस्यापि राज्यस्य राज्यपालेन राजप्रमुखेन वा निर्मिताः सर्वे विनियमाः, तेषां निर्माणस्य पश्चाद्यथासंभवं शीघ्रम्, यथायथं संसदः प्रत्येकसदनस्य अथवा तद्राज्यविधानमण्डलस्य सदनस्य प्रत्येकसदनस्य वा पुरतः चतुर्दशभ्यो दिनेभ्योऽन्यूनकालं यावत् स्थाप्येरन्, तथा निरसनविधया संशोधनविधया वा एतादृशानां रूपभेदानामधीना भवेयुर्यादृशान् तस्मिन्

## भागः १४.--संघस्य राज्यानां चाधीनाः सेवाः

### अनुच्छेदाः ३२०-३२३

सत्रे यस्मिंस्त एवं स्थाप्यन्ते संसद् उभे सदने अथवा तद्राज्यविधान-मण्डलस्य सदनमुभे वा सदने कुर्युः ।

३२१. यथायथं संसदा कस्यापि राज्यस्य विधानमण्डलेन वा निर्मितः कोऽप्यधिनियमः संघलोकसेवायोगेन तद्राज्यलोकसेवायोगेन वा संघस्य तद्राज्यस्य वा सेवानां विषये, तथा कस्यापि स्थानीयप्राधिकारिणः अथवा विधिना घटितस्यान्यस्य निगमनिकायस्य अथवा कस्या अपि सार्वजनिकसंस्थायाः सेवानां विषयेऽपि अतिरिक्तकृत्यानां प्रयोगार्थमुपबन्धं निर्मातुमर्हति । लोकसेवायोगानां कृत्यानां विस्तारस्य शक्तिः ।

३२२. संघस्य कस्यापि राज्यस्य वा लोकसेवायोगस्य व्ययाः, आयोगस्य सदस्येभ्यः कर्मचारिवृन्दाय वा, तेषां संबन्धेन वा, प्रदीय-मानैः कैश्चिद् वेतनैर्भत्तैर्निवृत्तिवेतनैश्च सहैव, यथायथं भारतसंचितनिधौ तद्राज्यसंचितनिधौ वा भारिता भवेयुः । लोकसेवायोगानां व्ययाः ।

३२३. (१) संघायोगस्य कर्तव्यं भवेद्यत्स तेन आयोगेन कृतस्य कार्यस्य विषये प्रतिवर्षं प्रतिवेदनं राष्ट्रपतिमुपस्थापयेत्, एतादृशप्रतिवेदनस्य प्राप्तौ च राष्ट्रपतिस्तेषां विषयाणां संबन्धे, ते चेद् भवन्ति, येष्वायोगस्य परामर्शो न स्वीकृत आसीत्, एतादृश्या अस्वीकृतेः कारणानि स्पष्टयता ज्ञापनेन सहितां तस्य प्रतिवेदनस्य प्रतिलिपिं संसदः प्रत्येकसदनस्य पुरतः स्थापयेत् । लोकसेवायोगानां प्रतिवेदनानि ।

(२) राज्यायोगस्य कर्तव्यं भवेद्यत्स तेन आयोगेन कृतस्य कार्यस्य विषये प्रतिवर्षं प्रतिवेदनं राज्यस्य राज्यपालं राजप्रमुखं वा उप-स्थापयेत्, तथा संयुक्तायोगस्य कर्तव्यं भवेद्यत्स तेषां राज्यानां प्रत्येकं राज्यस्य, येषामावश्यकतानां पूर्तिः संयुक्तायोगेन क्रियते, राज्यपालं राज-प्रमुखं वा तद्राज्यसंबन्धे आयोगेन कृतस्य कार्यस्य विषये प्रातिवर्षं प्रति-वेदनमुपस्थापयेत्, तथा एनयोः प्रत्येकावस्थायामेतादृशप्रतिवेदनस्य प्राप्तौ यथायथं राज्यपालो राजप्रमुखो वा तेषां विषयाणां संबन्धे, ते चेद् भवन्ति, येष्वायोगस्य परामर्शो न स्वीकृत आसीत्, एतादृश्या अस्वीकृतेः

## भागः १४.—संघस्य राज्यानां चाधीनाः सेवाः

### अनुच्छेदः ३२३

कारणानि स्पष्टयता ज्ञापनेन सहितां तस्य प्रतिवेदस्य प्रतिलिपिं संसदः प्रत्येकसदनस्य पुरतः स्थापयेत् ।

# भागः १५

## निर्वाचनानि

निर्वाचनाना-मधीक्षणनिर्देशननियन्त्रणानां निर्वाचनायोगे निधेयत्वम् ।

३२४. (१) संसदे प्रत्येकराज्यस्य विधानमण्डलाय च समस्तानां निर्वाचनानां कृते निर्वाचकनामावलीनां परिकल्पनस्य, तथा तेषां निर्वाचनानां संचालनस्य, तथा राष्ट्रपतेरुपराष्ट्रपतेश्च पदयोः कृते एतत्संविधानस्यानुरोधेन जातयोर्निर्वाचनयोरधीक्षणं निदेशनं नियन्त्रणं च, संसदो राज्यानां विधानमण्डलानां च कृते निर्वाचनेभ्य उद्भूतानां तैः संबद्धानां वा संदेहानां विवादानां च निर्णयार्थं निर्वाचनन्यायाधिकरणस्य नियुक्त्या सहैव, एकस्मिन्नायोगे निहितानि भवेयुः (यश्चास्मिन् संविधाने 'निर्वाचनायोग ' इत्येवं निर्दिश्यते )।

(२) निर्वाचनायोगो मुख्यनिर्वाचनायुक्तेन तथा, यदि ते भवन्ति, अन्यनिर्वाचनायुक्तानामेतादृश्या संख्यया, यादृशीं राष्ट्रपतिः काले काले नियतीकुर्यात्, भवेत्, तथा मुख्यनिर्वाचनायुक्तस्यान्येषां च निर्वाचनायुक्तानां नियुक्तिः, संसदा तदर्थं निर्मितस्य कस्यापि विधेरुपबन्धानामधीनत्वे, राष्ट्रपतिना क्रियेत ।

(३) कोऽप्यन्यो निर्वाचनायुक्तो यद्येवं नियुज्यते तर्हि मुख्यनिर्वाचनायुक्तस्तस्य निर्वाचनायोगस्य सभापतित्वेन कार्यं कुर्यात् ।

(४) लोकसभायास्तथा प्रत्येकराज्यस्य विधानसभायाः कृते प्रत्येकसाधारणनिर्वाचनात्पूर्वम्, तथा विधानपरिषद्वतः प्रत्येकराज्यस्य विधानपरिषदः कृते प्रथमसाधारणनिर्वाचनात् तदनन्तरं च प्रत्येकद्वैवर्षिकनिर्वाचनात् पूर्वम्, राष्ट्रपतिर्निर्वाचनायोगेन सह परामर्शं कृत्वा प्रथमखण्डेन निर्वाचनायोगाय प्रदत्तानां कृत्यानां पालन आयोगस्य साहाय्यार्थमेतादृशान् प्रादेशिकानायुक्तान् नियोक्तुमर्हति यादृशान् स आवश्यकान् मन्येत ।

(५) संसदा निर्मितस्य कस्यापि विधेरुपबन्धानामधीनत्वे, निर्वाचनायुक्तानां प्रादेशिकायुक्तानां च सेवायाः प्रतिबन्धाः पदावधिश्च एतादृशा भवेयुर्यादृशान् राष्ट्रपतिर्नियमद्वारा निर्धारयेत् ।

## भागः १५.— निर्वाचनानि

### अनुच्छेदौ ३२४–३२५

परन्तु मुख्यनिर्वाचनायुक्तः स्वपदात्तादृशकारणैस्तादृशरीत्या च विना न अपसारितः क्रियेत यादृशकारणैर्यादृशरीत्या च उच्चतमन्यायालयस्य न्यायाधीशः अपसारयितुं शक्यते, तथा मुख्यनिर्वाचनायुक्तस्य नियुक्तेरनन्तरं तत्सेवायाः प्रतिबन्धेषु तल्लाभापकर्षकारि किमपि परिवर्तनं न क्रियेत ।

परन्तु अन्यदपि, अन्यः कोऽपि निर्वाचनायुक्तः प्रादेशिक आयुक्तो वा मुख्यनिर्वाचनायुक्तस्य पुरःप्रशंसनमन्तरेण पदात् अपसारितो न क्रियेत।

(६) निर्वाचनायोगेन यदैवं प्रार्थितो भवति तदा, राष्ट्रपतिः कस्यापि राज्यस्य राज्यपालो राजप्रमुखो वा निर्वाचनायोगं प्रादेशिकायुक्तं वा एतादृशं कर्मचारिवृन्दं प्राप्यं कारयेद् यादृशं प्रथमखण्डेन निर्वाचनायोगाय प्रदत्तानां कृत्यानां निर्वहणार्थमावश्यकं भवेत् ।

धर्मस्य मूलवंशस्य जातेर्लिङ्गस्य वा आधारेण कस्यापि जनस्यापात्रत्वाभावः अथवा विशेषनिर्वाचकनामावल्यामन्तर्भावार्थमभ्यर्थनाया निषेधः ।

३२५. संसदोऽन्यतरसदनार्थमथवा कस्यापि राज्यस्य विधानमण्डलस्य सदनार्थम् अन्यतरसदनार्थं वा निर्वाचनस्य हेतोः प्रत्येकप्रादेशिकनिर्वाचनक्षेत्राय एका साधारणनिर्वाचकनामावलिर्भवेत्, तथा केवलं धर्ममूलवंशजातिलिङ्गानामेतेषामन्यतमस्य वा आधारेण कोऽपि जन एतादृश्यां कस्यामपि नामावल्यामन्तर्भावस्य अपात्रं न भवेत्, अथवा एतादृशाय कस्मै अपि निर्वाचनक्षेत्राय कस्यामपि विशेषनिर्वाचकनामावल्यामन्तर्भावार्थमभ्यर्थनां न कुर्यात् ।

## भागः १५.— निर्वाचनानि

### अनुच्छेदाः ३२६–३२९

३२६. लोकसभायै प्रत्येकराज्यस्य विधानसभायै च निर्वाचनानि प्राप्तवयस्कमताधिकारस्याधारेण भवेयुः, अर्थात् प्रत्येकजनो यो भारतस्य नागरिको वर्तते, यश्च एतादृशे दिनाङ्के यादृशः समुचितविधानमण्डलेन निर्मितेन केनापि विधिना तदधीनं वा एतदर्थं नियतीकृतो भवेद् एकविंशतिवर्षवयसोऽन्यूनो वर्तते तथा अन्यथा एतत्संविधानस्य समुचितविधानमण्डलेन निर्मितस्य कस्यापि विधेर्वा अधीनम् अनिवासस्य, चित्तविकृतेः, अपराधस्य, भ्रष्टस्य वा अवैधस्य वा आचरणस्याधारेण अनर्हीकृतो न विद्यते एतादृशे कस्मिन्नपि निर्वाचने मतदातृरूपेण पञ्जीबद्धो भवितुं स्वत्ववान् भवेत् ।

लोकसभायै राज्यानां च विधानसभाभ्यो निर्वाचनानां प्राप्तवयस्कमताधिकाराधारत्वम् ।

३२७. एतत्संविधानस्योपबन्धानामधीनत्वे, संसत् काले काले विधिना संसदः अन्यतरसदनाय अथवा कस्यापि राज्यस्य विधानमण्डलस्य सदनाय अन्यतरसदनाय वा निर्वाचनैः संसक्तानां संबद्धानां वा सर्वेषां विषयाणां संबन्धे, सहैव निर्वाचकनामावलीनां परिकल्पनेन, निर्वाचनक्षेत्राणां परिसीमनेन, तथा एतादृशस्य सदनस्य एतादृशानां सदनानां वा सम्यग्घटनस्य संपादनार्थमावश्यकैः सर्वैरन्यैर्विषयैः, उपबन्धं निर्मातुमर्हति ।

विधानमण्डलेभ्यो निर्वाचनानां विषये उपबन्धनिर्माणस्य संसदः शक्तिः ।

३२८. एतत्संविधानस्योपबन्धानामधीनत्वे तथा यावत् संसदा तदर्थमुपबन्धो न निर्मीयते, कस्यापि राज्यस्य विधानमण्डलम्, काले काले, विधिना तद्राज्यविधानमण्डलस्य सदनार्थम् अन्यतरसदनार्थं वा निर्वाचनैः संसक्तानां संबद्धानां वा सर्वेषां विषयाणां संबन्धे, सहैव निर्वाचकनामावलीनां परिकल्पनेन तथा एतादृशस्य सदनस्य एतादृशानां सदनानां वा सम्यग्घटनस्य संपादनार्थमावश्यकैः सर्वैरन्यैर्विषयैः, उपबन्धं निर्मातुमर्हति ।

किञ्चिद्राज्यविधानमण्डलस्य एतादृशविधानमण्डलस्य निर्वाचनानां संबन्धे उपबन्धनिर्माणस्य शक्तिः ।

३२९. एतत्संविधानगतं सर्वमविगणय्य—

(क) ३२७-तमानुच्छेदस्य ३२८-तमानुच्छेदस्य वा अधीनं निर्मितस्य निर्मातुमभिप्रेतस्य वा, निर्वाचन-

निर्वाचनविषयेषु न्यायालयानां हस्तक्षेपस्य निषेधः ।

## भागः १५. — निर्वाचनानि

### अनुच्छेदः ३२९

क्षेत्राणां परिसीमनेन अथवा एतादृशानिर्वाचनक्षेत्रेषु स्थानानां भागकल्पनया संबद्धस्य कस्यापि विधेर्मान्यतायां कस्मिन्नपि न्यायालय आपत्तिर्न क्रियेत ;

(ख) एतादृशं प्राधिकारिणं प्रति एतादृशरीत्या च यथा तत्तत्कार्योचितविधानमण्डलेन निर्मितविधिना तदधीनं वा उपबन्धितं भवेत् उपस्थापितां निर्वाचनयाचिकामन्तरेण संसदः अन्यतरसदनस्य कृते अथवा कस्यापि राज्यस्य विधानमण्डलस्य सदनस्य अन्यतरसदनस्य वा कृते कस्मिन्नपि निर्वाचने काप्यापत्तिर्न क्रियेत ।

# भागः १६

## कतिपयवर्गैः संबद्धा विशेषोपबन्धाः

३३०. (१) लोकसभायाम्— अनुसूचितजातिभ्योऽनुसूचितजनजातिभ्यश्च लोकसभायां स्थानानां रक्षणम् ।

(क) अनुसूचितजातिभ्यः,

(ख) आसामस्य जनजातिक्षेत्राणामनुसूचितजनजातीर्वर्जयित्वा जनजातिभ्यः,

(ग) आसामस्य स्वायत्तशासिमण्डलेष्वनुसूचितजनजातिभ्यश्च

स्थानानि रक्षितानि भवेयुः ।

(२) प्रथमखण्डस्याधीनमनुसूचितजातिभ्योऽनुसूचितजनजातिभ्यो वा कस्मिंश्चिदपि राज्ये रक्षितस्थानानां संख्याया लोकसभायां तस्मै राज्याय भागकल्पनायां दत्तानां स्थानानां समस्तसंख्यापेक्षया यथाशक्यं स एवानुपातो भवेद् यो यथायथं तस्य राज्यस्यानुसूचितजातीनाम् अथवा तस्य राज्यस्य तद्राज्यभागस्य वा अनुसूचितजनजातीनाम्, यासां संबन्धे स्थानान्येवं रक्षितानि भवन्ति, जनसंख्याया अनुपातस्तद्राज्यस्य समस्तजनसंख्यापेक्षया वर्तते ।

३३१. ८१-तमानुच्छेदगतं सर्वमविगणय्य, लोकसभायामांग्ल-भारतीयसमाजस्य प्रतिनिधित्वं पर्याप्तं नास्तीति मन्यते चेद्राष्ट्रपतिस्तर्हि स लोकसभायां तस्य समाजस्य जनद्वयानधिकं नामनिर्देशितं कर्तुमर्हति । लोकसभायामांग्लभारतीयसमाजस्य प्रतिनिधित्वम् ।

३३२. (१) प्रथमानुसूच्याः (क)-भागे (ख)-भागे वा उल्लिखितस्य प्रत्येकराज्यस्य विधानसभायामनुसूचितजातिभ्यस्तथा आसामस्य जनजातिक्षेत्राणामनुसूचितजनजातीर्वर्जयित्वा अन्याभ्यो जनजातिभ्यः स्थानानि रक्षितानि भवेयुः । राज्यानां विधानसभासु अनुसूचितजातिभ्योऽनुसूचितजनजातिभ्यश्च स्थानानां रक्षणम् ।

(२) आसामराज्यस्य विधानसभायां स्वायत्तशासिमण्डलेभ्योऽपि स्थानानि रक्षितानि भवेयुः ।

## भागः १६.—कतिपयवर्गैः संबद्धा विशेषोपबन्धाः

### अनुच्छेदौ ३३२-३३३

(३) प्रथमखण्डस्याधीनं कस्यचिदपि राज्यस्य विधानसभायामनुसूचितजातिभ्योऽनुसूचितजनजातिभ्यो वा रक्षितस्थानानां संख्यायास्तस्यां सभायां स्थानानां समस्तसंख्यापेक्षया यथाशक्यं स एवानुपातो भवेद् यो यथायथं तस्य राज्यस्यानुसूचितजातीनाम् अथवा तस्य राज्यस्य तद्राज्यभागस्य वा अनुसूचितजनजातीनाम्, यासां संबन्धे स्थानान्येवं रक्षितानि विद्यन्ते, जनसंख्याया अनुपातस्तस्य राज्यस्य समस्तजनसंख्यापेक्षया वर्तते ।

(४) आसामराज्यस्य विधानसभायां कस्मै अपि स्वायत्तशासिमण्डलाय रक्षितस्थानानां संख्यायास्तस्यां सभायां स्थानानां समस्तसंख्यापेक्षयानुपातस्तस्य मण्डलस्य जनसंख्यायास्तस्य राज्यस्य समस्तजनसंख्यापेक्षया योऽनुपातस्तस्मान्न्यूनो न भवेत् ।

(५) शिलौंगस्य कटकं नगरक्षेत्रं च समावेश्य निर्मितं निर्वाचनक्षेत्रं वर्जयित्वा आसामराज्यस्य कस्मै अपि स्वायत्तशासिमण्डलाय रक्षितस्थानानां निर्वाचनक्षेत्रेषु तन्मण्डलबहिर्वर्ति किमपि क्षेत्रं समाविष्टं न भवेत् ।

(६) कोऽपि जनो य आसामराज्यस्य किञ्चित्स्वायत्तशासिमण्डलानुसूचितजनजातेर्जनो न वर्तते तद्राज्यविधानसभायै, शिलौंगस्य कटकं नगरक्षेत्रं च समावेश्य निर्मितं निर्वाचनक्षेत्रं वर्जयित्वा, तस्य मण्डलस्य कस्मादपि निर्वाचनक्षेत्रान्निर्वाचनस्य पात्रं न भवेत् ।

राज्यानां विधानसभासु आंग्लभारतीयसमाजस्य प्रतिनिधित्वम्।

३३३. १७०-तमानुच्छेदगतं सर्वमविगणय्य, यदि कस्यापि राज्यस्य राज्यपालो राजप्रमुखो वा मन्यते यत् तद्राज्यस्य विधानसभायामांग्लभारतीयसमाजस्य प्रतिनिधित्वमावश्यकं विद्यते पर्याप्तं च नास्ति, तर्हि स तस्यां विधानसभायां तस्य समाजस्य तावतो जनान् यावतः स समुचितान् मन्यते नामनिर्देशितान् कर्तुमर्हति ।

## भागः १६.—कतिपयवर्गैः संबद्धा विशेषोपबन्धाः

### अनुच्छेदाः ३३४-३३६

३३४. अस्य भागस्य पूर्ववर्त्युपबन्धेषु गतं सर्वमविगणय्य—

(क) लोकसभायां राज्यानां विधानसभासु चानुसूचितजातिभ्योऽनुसूचितजनजातिभ्यश्च स्थानानां रक्षणेन संबद्धाः; तथा

(ख) लोकसभायां राज्यानां विधानसभासु च नामनिर्देशेनांग्ल-भारतीयसमाजस्य प्रतिनिधित्वेन संबद्धाः,

एतत्संविधानस्योपबन्धा एतत्संविधानस्य प्रारम्भाद् दशानां वर्षाणां कालावधेः समाप्तौ कार्यकरा न भवेयुः—

परन्तु एतदनुच्छेदगतं किमपि तावद् लोकसभायां कस्यापि राज्यस्य वा विधानसभायां किमपि प्रतिनिधित्वं न स्पृशेद् यावद् यथायथं तत्काले विद्यमानाया लोकसभाया विधानसभाया वा विघटनं न जायते।

**स्थानानां रक्षणस्य विशेषप्रतिनिधित्वस्य च संविधानस्य प्रारम्भाद्दशवर्षानन्तरं समाप्तिः।**

३३५. संघस्य कस्यापि राज्यस्य वा कार्यैः संसक्तानां सेवानां पदानां च कृते नियुक्तीनां करणे, प्रशासनकार्यकौशल्यस्य धारणस्य अविरोधेन, अनुसूचितजातीनामनुसूचितजनजातीनां च जनानामध्यर्थनानां विचारः क्रियेत।

**सेवानां पदानां च कृतेऽनुसूचितजातीनामनुसूचितजनजातीनां चाध्यर्थनाः।**

३३६. (१) एतत्संविधानस्य प्रारम्भादनन्तरं प्रथमवर्षद्वये संघस्य लोहमार्ग-बहिःशुल्क-डाक( प्रेषणी )-तार( तन्त्रिसंदेशि )संबन्धिसेवानां पदेषु आंग्लभारतीयसमाजस्य जनानां नियुक्तयः १९४७-तमवत्सरीयस्य अगस्तमासस्य पञ्चदशदिवसादव्यवहितं पूर्ववर्तिनाधारेण क्रियेरन्।

**कासुचित् सेवासु आंग्लभारतीयसमाजार्थं विशेषोपबन्धः।**

प्रत्येकस्मिन्ननुवर्तिनि वर्षद्वयस्य कालावधौ उक्तसमाजस्य जनेभ्य उक्तसेवासु रक्षितपदानां संख्या अव्यवहितपूर्ववर्तिनि वर्षद्वयस्य कालावधौ एवंरक्षितायाः संख्यायाः प्रतिशतं दशभिर्न्यूना भवेत्—

## भागः १६. — कतिपयवर्गैः संबद्धा विशेषोपबन्धाः

## अनुच्छेदाः ३३६–३३८

परन्तु एतत्संविधानस्य प्रारम्भाद् दशानां वर्षाणामन्ते एतादृशानां सर्वेषां रक्षणानां समाप्तिर्जायेत ।

(२) यद्यन्यसमाजानां जनैस्तुलनायामांग्लभारतीयसमाजस्य जनाः कुशलतया नियुक्तेरर्हा अधिगम्येरंस्तर्हि प्रथमखण्डस्याधीनं तत्समाजार्थं रक्षितपदेभ्योऽन्येषु, अधिकेषु वा, पदेषु आंग्लभारतीयसमाजस्य जनानां नियुक्तौ तत्खण्डगतं किमपि बाधकं न भवेत् ।

आंग्लभारतीय-समाजस्य हिताय शिक्षणानुदानार्थं विशेष उपबन्धः ।

३३७. एतत्संविधानस्य प्रारम्भादनन्तरं प्रथमे वित्तीयवर्षत्रये आंग्ल-भारतीयसमाजस्य हिताय शिक्षायाः संबन्धे, कानिचिद्दीयन्ते चेत्, तान्येवानुदानानि संवेन तथा प्रथमानुसूच्याः (क)-भागे (ख)-भागे वा उल्लिखितेन प्रत्येकराज्येन दीयेरन् यानि १९४८-तमवत्सरीयमार्चमासस्य ३१-तमदिवसे समाप्तिं गते वित्तीयवर्षेऽदीयन्त ।

प्रत्येकस्मिन्ननुवर्तिनि वषत्रयस्य कालावधौ अनुदानानि, अव्यवहित-पूर्ववर्तिनो वषत्रयस्य कालावधेरपेक्षया, प्रतिशतं दशभिर्न्यूनानि भवितुमर्हन्ति---

परन्तु एतत्संविधानस्य प्रारम्भाद् दशानां वर्षाणामन्ते, एतादृशान्यनुदानानि, तावत्पर्यन्तं यावत् तान्यांग्ल-भारतीयसमाजार्थं विशेषानुग्रहरूपेण वर्तन्ते, समाप्तिं गच्छेयुः---

परन्तु अन्यदपि, एतदनुच्छेदाधीनं कस्या अपि शिक्षासंस्थायाः किमप्यनुदानं प्राप्तुं तावत् स्वत्वं न भवेद् यावत्तस्याः [ छात्रसंबन्धिनां ] वार्षिकप्रवेशानां न्यूनान्न्यूनं प्रतिशतं चत्वारिंशत् प्रवेशा आंग्लभारतीय-समाजाद्भिन्नसमाजानां जनैर्लभ्या न क्रियन्ते ।

अनुसूचित-जात्यनुसूचित-जनजातिप्रभृतीनां कृते विशेषपदाधिकारी ।

३३८. (१) अनुसूचितजातिभ्योऽनुसूचितजनजातिभ्यश्च राष्ट्रपतिना नियोक्तव्य एको विशेषपदाधिकारी भवेत् ।

(२) अनुसूचितजातिभ्योऽनुसूचितजनजातिभ्यश्च एतत्संविधानस्याधीनमुपबन्धितपरित्राणैः संबद्धानां सर्वेषां विषयाणामनुसंधानं तथा

**भागः १६.— कतिपयवर्गैः संबद्धा विशेषोपबन्धाः**

**अनुच्छेदाः ३३८–३४०**

तेषां परित्राणानां प्रवर्तनसंबन्धे एतादृशेष्वन्तरालेषु यादृशानि राष्ट्रपतिर्निदिशेद् राष्ट्रपतये प्रतिवेदनार्पणं विशेषपदाधिकारिणः कर्तव्यं भवेत्, राष्ट्रपतिश्च सर्वाण्येतादृशानि प्रतिवेदनानि संसदः प्रत्येकसदनस्य पुरतः स्थापयेत् ।

(३) अस्मिन्ननुच्छेदेऽनुसूचितजातीनामनुसूचितजनजातीनां च निर्देशेषु एतादृशानां सर्वेषामप्रगतानां वर्गाणां निर्देशाः, यान् राष्ट्रपतिरेतत्संविधानस्य ३४०-तमानुच्छेदस्य प्रथमखण्डस्याधीनं नियुक्तस्यायोगस्य प्रतिवेदनस्य प्राप्तौ आदेशेनोल्लिखेत्, तथांग्ल-भारतीयसमाजं प्रति निर्देशा अप्यन्तर्भवन्तीत्यर्थः क्रियेत ।

३३९. (१) प्रथमानुसूच्याः (क)-भागे (ख)-भागे चोल्लिखितराज्येष्वनुसूचितक्षेत्राणां प्रशासनविषये तथानुसूचितजनजातीनां कल्याणविषये प्रतिवेदनस्यार्पणाय आयोगस्य नियुक्तिमादेशेन राष्ट्रपतिः कस्मिन्नपि काले कर्तुं क्षमते तथा एतत्संविधानस्य प्रारम्भाद् दशानां वर्षाणां समाप्तौ कुर्यात् ।

*अनुसूचितक्षेत्राणां प्रशासने तथानुसूचितजनजातीनां कल्याणविषये संघस्य नियन्त्रणम् ।*

आदेश आयोगस्य रचनायाः शक्तीनां प्रक्रियायाश्च परिभाषां कर्तुमर्हति तथा तस्मिंस्ते प्रासङ्गिकाः सहायकाश्चोपबन्धा अपि भवितुमर्हन्ति यान् राष्ट्रपतिरावश्यकान् वाञ्छनीयान् वा मन्येत ।

(२) संघस्य कार्यपालिकायाः शक्तेर्विस्तारः कस्मैचिदपि राज्याय एतादृशराज्यस्यानुसूचितजनजातीनां कल्याणार्थं निदेशे परमावश्यकत्वेनोल्लिखितयोजनानां निर्माणेन कार्यान्वितीकरणेन च संबद्धानां निदेशानां दानं यावद् भवेत् ।

३४०. (१) भारतराज्यक्षेत्रे सामाजिकदृष्ट्या शिक्षादृष्ट्या चाप्रगतानां वर्गाणां दशानां तथा तैरनुभूयमानानाम् असौकर्याणाम् अनुसंधानार्थम्, तथा संघेन केनचिदपि राज्येन वा तेषामसौकर्याणामपसारणाय तेषां दशायाः सुधारणायै चावलम्बनीयानामुपायानां विषये, तत्प्रयोजनार्थं

*अप्रगतवर्गाणां दशानामनुसन्धानार्थमायोगस्य नियुक्तिः ।*

## भागः १६.—— कतिपयवर्गैः संबद्धा विशेषोपबन्धाः

## अनुच्छेदाः ३४०-३४२

संघेन केनचिदपि राज्येन वा दातव्यानामनुदानानाम्, येषां प्रतिबन्धानामधीनत्वे तान्यनुदानानि दातव्यानि तेषां प्रतिबन्धानां च विषये पुरःप्रशंसनकरणार्थं राष्ट्रपतिरादेशेन, एतादृशैर्जनैर्यादृशान् स समुचितान् मन्यते, आयोगं निर्मातुमर्हति; आयोगस्य नियोजकेनादेशेन च आयोगेनानुसरणीया प्रक्रियापि परिभाष्येत।

(२) एवं नियुक्त आयोगः स्वस्मै निर्दिष्टविषयाणामनुसंधानं कुर्यात्, स्वयमधिगततथ्यैः समन्वितमुचितत्वेन मतैः पुरःप्रशंसनैर्युक्तं च प्रतिवेदनं राष्ट्रपतयेऽर्पयेत्।

(३) राष्ट्रपतिरेवम् अर्पितस्य प्रतिवेदनस्य प्रतिलिपिं तदाधारेण कृतां क्रियां स्पष्टयता ज्ञापनेन सहितां संसदः प्रत्येकसदनस्य पुरतः स्थापयेत्।

अनुसूचिता जातयः।

३४१. (१) राष्ट्रपतिः कस्यापि राज्यस्य राज्यपालेन राजप्रमुखेन वा परामर्शस्यानन्तरम्, लोकाधिसूचनया ता जातीर्मूलवंशान् जनजातीर्वा अथवा जातीनां मूलवंशानां जनजातीनां वा भागान् तदन्तर्गतान् उपवर्गान् वा उल्लेखितुमर्हति, ये च एतत्संविधानस्य प्रयोजनार्थं तद्राज्यसंबन्धेऽनुसूचितजातयो मन्येरन्।

(२) संसद् विधिना कामपि जातिं मूलवंशं जनजातिं वा अथवा कस्या अपि जातेर्मूलवंशस्य जनजातेर्वा भागं तदन्तर्गतम् उपवर्गं वा प्रथमखण्डस्याधीनं प्रवर्त्तितायामधिसूचनायामुल्लिखितानामनुसूचितजातीनां सूच्या अन्तर्गतं तस्या बहिर्गतं वा कर्तुमर्हति; किन्तु उपर्युक्तरीतिं विहायान्यथा उक्तखण्डस्याधीनं प्रवर्त्तिताधिसूचना कयाप्युत्तरवर्तिन्याधिसूचनया परिवर्तिता न भवेत्।

अनुसूचिता जनजातयः।

३४२. (१) राष्ट्रपतिः, कस्यापि राज्यस्य राज्यपालेन राजप्रमुखेन वा परामर्शस्यानन्तरम्, लोकाधिसूचनया ता जनजातीर्जनजातिसमाजान्वा अथवा जनजातीनां जनजातिसमाजानां वा भागान् तदन्तर्गतान् उपवर्गान्

भागः १६. — कतिपयवर्गैः संबद्धा विशेषोपबन्धाः

अनुच्छेदः ३४२

वा उल्लेखितुमर्हति, ये च एतत्संविधानस्य प्रयोजनार्थं तद्राज्यसंबन्धेऽनुसूचितजनजातयो मन्येरन् ।

(२) संसद् विधिना कामपि जनजातिं जनजातिसमाजं वा, अथवा कस्या अपि जनजातेर्जनजातिसमाजस्य वा भागं तदन्तर्गतम् उपवर्गं वा प्रथमखण्डस्याधीनं प्रवर्त्तितायामधिसूचनायामुल्लिखितानामनुसूचितजनजातीनां सूच्या अन्तर्गतं तस्या बहिर्गतं वा कर्तुमर्हति; किन्तु उपर्युक्तरीतिं विहायान्यथा उक्तखण्डस्याधीनं प्रवर्तिताधिसूचना कयाप्युत्तरवर्त्तिन्याधिसूचनया परिवर्तिता न भवेत् ।

# भागः १७

## राजभाषा

### अध्यायः१.--संघस्य भाषा

संघस्य राजभाषा ।

३४३. (१) संघस्य राजभाषा देवनागर्यां लिप्यां [लिखिता] हिन्दी भवेत् ।

संघस्य राजकीयप्रयोजनानां कृते प्रयोक्तव्यानामङ्कानां रूपं भारतीयानामङ्कानामान्ताराष्ट्रिकं रूपं भवेत् ।

(२) प्रथमखण्डगतं सर्वमविगणय्य, एतत्संविधानस्य प्रारम्भात् पञ्चदशानां वर्षाणां कालावधिं यावत् संघस्य तेषां सर्वेषां राजकीयप्रयोजनानां कृते आंग्लभाषा प्रयोक्तव्यत्वेनानुवर्तेत येषां कृते एतादृशप्रारम्भादव्यवहितपूर्वं सा प्रयुज्यमानासीत् —

परन्तु राष्ट्रपतिरुक्तकालावधौ, आदेशेन संघस्य राजकीयप्रयोजनेषु कस्यचित्कृते आंग्लभाषया सहैव हिन्दीभाषायास्तथा भारतीयाङ्कानामान्ताराष्ट्रिकरूपेण सहैव देवनागरीरूपस्य प्रयोगं प्राधिकृतं कर्तुं क्षमते ।

(३) एतदनुच्छेदगतं सर्वमविगणय्य, संसद् उक्तस्य पञ्चदशानां वर्षाणां कालावधेः पश्चाद् विधिना--

(क) आंग्लभाषायाः; अथवा

(ख) अङ्कानां देवनागरीरूपस्य,

एतादृशेभ्यः प्रयोजनेभ्यः प्रयोगमुपबन्धितं कर्तुं क्षमते यादृशानि एतादृशे विधावुल्लिखितानि भवेयुः ।

राजभाषार्थमायोगः संसदः समितिश्च ।

३४४. (१) राष्ट्रपतिरेतत्संविधानस्य प्रारम्भात् पञ्चानां वर्षाणां समाप्तौ तत्पश्चाच्च एतादृशप्रारम्भाद् दशानां वर्षाणां समाप्तौ आदेशेन आयोगमेकं घटयेद् यश्च एकेन सभापतिना अष्टमानुसूच्यामुल्लिखितविभिन्नभाषाणां प्रतिनिधिभूतैरेतादृशैरन्यैश्च सदस्यैर्भवेद्यादृशान् राष्ट्रपतिर्नियुञ्जीत, आदेशश्चायोगेनानुसरणीयां प्रक्रियां परिभाषितां कुर्यात् ।

भागः १७. — राजभाषा

अनुच्छेदः ३४४

(२) राष्ट्रपतिं प्रति—

(क) संघस्य राजकीयप्रयोजनानां कृते हिन्दीभाषाया उत्तरोत्तरमधिकप्रयोगस्य,

(ख) संघस्य राजकीयप्रयोजनेषु सर्वेषां कस्यापि वा कृते आंग्लभाषायाः प्रयोगे निर्बन्धनानाम्,

(ग) ३४८-तमानुच्छेदे वर्णितप्रयोजनेषु सर्वेषामथवा कस्यचित्कृते प्रयोक्तव्याया भाषायाः,

(घ) संघस्य कस्याप्येकस्य अधिकानां वा उल्लिखितप्रयोजनानां कृते प्रयोक्तव्यस्याङ्कानां रूपस्य,

(ङ) संघस्य राजभाषायाः, तथा संघस्य कस्यापि राज्यस्य च मध्ये अथवा एकस्य राज्यस्य राज्यान्तरस्य च मध्ये संव्यवहारस्य भाषायाः, तथा तयोः प्रयोगस्य विषये राष्ट्रपतिनायोगं प्रति निर्दिष्टस्य कस्याप्यन्यस्य विषयस्य,

संबन्धे पुरःप्रशंसनमायोगस्य कर्तव्यं भवेत् ।

(३) द्वितीयखण्डस्याधीनं स्वकीयपुरःप्रशंसनानां प्रतिपादन आयोगो भारतस्यौद्योगिक-सांस्कृतिक-वैज्ञानिकोन्नतौ तथा लोकसेवानां विषये हिन्दीतरभाषाभाषिक्षेत्रीयजनानां न्याय्यासु अभ्यर्थनासु हितेषु च सम्यगवधानं दद्यात् ।

(४) त्रिंशतः सदस्यानामेका समितिः घटिता भवेत्, येषु विंशतिर्लोकसभायाः सदस्या भवेयुः, दश च राज्यपरिषदः सदस्या भवेयुः, ये च क्रमशो लोकसभायाः सदस्यैस्तथा राज्यपरिषदः सदस्यैरनुपाति-प्रतिनिधित्वपद्धतेरनुसारेणैकलसंक्रमणीयमतद्वारा निर्वाचिता भवेयुः ।

२५

## भागः १७.— राजभाषा

### अनुच्छेदाः ३४४–३४७

(५) प्रथमखण्डस्याधीनं घटितस्यायोगस्य पुरःप्रशंसनानां परीक्षणं तथा तद्विषये स्वमतेः राष्ट्रपतये प्रतिवेदनं समितेः कर्तव्यं भवेत्।

(६) ३४३-तमानुच्छेदगतं सर्वमविगणय्य, राष्ट्रपतिः पञ्चमखण्डे निर्दिष्टस्य प्रतिवेदनस्य विचारानन्तरं तस्य संपूर्णस्य प्रतिवेदनस्य कस्यापि तद्भागस्य वा अनुसारेण निदेशान् प्रकाशयितुं क्षमते।

### अध्यायः २. —प्रादेशिकभाषाः

कस्यापि राज्यस्य राजभाषा, अथवा राजाभाषाः।

३४५. ३४६-तम-३४७-तमानुच्छेदयोरुपबन्धानामधीनत्वे, कस्यापि राज्यस्य विधानमण्डलं विधिना तद्राज्ये प्रयुज्यमानासु भाषास्वेकामनेकां वा हिन्दीं वा तद्राज्यस्य राजकीयप्रयोजनेषु सर्वेषां कस्यापि वा कृते प्रयोक्तव्यभाषात्वेन अङ्गीकर्तुं क्षमते—

परन्तु यावत्तद्राज्यस्य विधानमण्डलं विधिना अतोऽन्यथोपबन्धं न करोति तावद् तद्राज्यस्याभ्यन्तरे तेषां राजकीयप्रयोजनानां कृते, येषां कृते एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं सा प्रयुज्यमानासीत्, आंग्लभाषा प्रयोक्तव्यत्वेनानुवर्तेत।

एकराज्यस्य राज्यान्तरस्य च मध्ये अथवा कस्यापि राज्यस्य संघस्य च मध्ये संव्यवहारार्थं राजभाषा।

३४६. संघे राजकीयप्रयोजनानां कृते प्रयोगार्थं तत्काले प्राधिकृता भाषा एकराज्यस्य राज्यान्तरस्य च मध्ये तथा कस्यापि राज्यस्य संघस्य च मध्ये संव्यवहारार्थं राजभाषा भवेत् —

परन्तु द्वे राज्ये अधिकानि वा समयं चेत्कुरुतः कुर्वन्ति वा यदेतादृशराज्ययोरेतादृशराज्यानां वा परस्परं संव्यवहारार्थं हिन्दीभाषा राजभाषा भवेत्तर्हि एतादृशसंव्यवहारार्थं सा भाषा प्रयोज्या भवितुमर्हति।

कस्यापि राज्यस्य जनसंख्यायाः केनापि विभागेन भाष्यमाणाया भाषायाः संबन्धे विशेष उपबन्धः।

३४७. तद्विषयिकायामभियाचनायां कृतायां राष्ट्रपतेश्चेत्समाधानं जायते यत् कस्यापि राज्यस्य जनसंख्याया बृहदनुपात इच्छति यत्तेन भाष्यमाणा कापि भाषा तद्राज्यस्याभिमता भवेत् तर्हि स निदेष्टुं क्षमते यदेतादृशी भाषापि तस्मिन् राज्ये सर्वत्र तद्भागे वा कस्मिंश्चिदेतादृशस्य प्रयोजनस्य कृते यादृशं स उल्लिखेत् राजकीयत्वेनाभिमता भवेत्।

## भागः १७.— राजभाषा

### अनुच्छेदः ३४८

### अध्यायः ३.—उच्चतमन्यायालयोच्चन्यायालयादीनां भाषा

३४८. (१) एतद्भागस्य पूर्ववर्त्युपबन्धेषु गतं सर्वमविगणय्य, यावत्संसद्विधिना अन्यथा नोपबन्धयति तावत्— उच्चतमन्यायालये उच्चन्यायालयेषु च तथाधिनियमविधेयकादिषु प्रयोक्तव्या भाषा ।

(क) उच्चतमन्यायालये तथा प्रत्येकस्मिन्नुच्चन्यायालये सर्वाः कार्यप्रवृत्तयः,

(ख) ये—

(१) संसदोऽन्यतरस्मिन् सदने अथवा कस्यापि राज्यस्य विधानमण्डलस्य सदनेऽन्यतरस्मिन् सदने वा पुरःस्थापनीयानां सर्वेषां विधेयकानाम्, अथवा तेषां संबन्धे प्रस्तावनीयानां संशोधनानां प्राधिकृताः पाठाः,

(२) संसदा अथवा कस्यापि राज्यस्य विधानमडण्लेन पारितानामधिनियमानाम्, तथा राष्ट्रपतिना कस्यापि राज्यस्य राज्यपालेन वा राजप्रमुखेन वा प्रख्यापितानामध्यादेशानां प्राधिकृताः पाठाः, तथा

(३) एतत्संविधानस्याधीनमथवा संसदा कस्यापि राज्यस्य विधानमण्डलेन वा निर्मितस्य कस्यापि विधेरधीनं वा प्रकाशितानां सर्वेषामादेशानां नियमानां विनियमानामुपविधीनां च प्राधिकृताः पाठाः,

ते आंग्लभाषायां भवेयुः ।

(२) प्रथमखण्डस्य (क)-उपखण्डे गतं सर्वमविगणय्य, कस्यापि राज्यस्य राज्यपालो राजप्रमुखो वा राष्ट्रपतेः पूर्वसम्मत्या हिन्दीभाषायास्तस्मिन् राज्ये राजकीयप्रयोजनार्थं प्रयुज्यमानायाः कस्या अपि अन्यस्या

## भागः १७.— राजभाषा

### अनुच्छेदाः ३४८–३५०

भाषाया वा प्रयोगं तस्मिन् राज्ये स्वकीयमुख्यस्थानवत उच्चन्यायालयस्य कार्यप्रवृत्तिषु प्राधिकृतं कर्तुं क्षमते––

परन्तु एतत्खण्डगतं किमपि एतादृशोच्चन्यायालयेन पारिते कृते वा निर्णये, आज्ञप्तौ, आदेशे वा न प्रवर्तेत ।

(३) प्रथमखण्डस्य (ख)-उपखण्डे गतं सर्वमविगणय्य, यत्र कस्यापि राज्यस्य विधानमण्डलेन तस्मिन् विधानमण्डले पुरःस्थापितेषु विधेयकेषु, अथवा तेन पारितेष्वधिनियमेषु, अथवा तद्राज्यस्य राज्यपालेन राजप्रमुखेन वा प्रख्यापितेष्वध्यादेशेषु, अथवा तस्योपखण्डस्य तृतीयकण्डिकायां निर्दिष्टे कस्मिन्नपि आदेशे नियमे विनियमे उपविधौ वा प्रयोगार्थमांग्लभाषातो भिन्ना कापि भाषा विहिता भवेत् तत्र तद्राज्यस्य राजकीयसूचनापत्रे तद्राज्यस्य राज्यपालस्य राजप्रमुखस्य वा प्राधिकारेण प्रकाशित आंग्लभाषायां तस्यानुवाद एतदनुच्छेदानुसारमांग्लभाषायां प्राधिकृतः पाठो मन्येत ।

भाषासंबन्धिनः कतिचिद्विधीनधिनियमितुं विशेषप्रक्रिया ।

३४९. संविधानस्यास्य प्रारम्भात् पञ्चदशानां वर्षाणां कालावधिं यावत् ३४८-तमानुच्छेदस्य प्रथमखण्डे वर्णितानां प्रयोजनानां कस्यापि कृते प्रयोक्तव्यभाषार्थमुपबन्धं कुर्वत् किमपि विधेयकं संशोधनं वा संसदोऽन्यतरस्मिन् सदने राष्ट्रपतेः पूर्वस्वीकृतिं विना नहि पुरःस्थाप्येत नापि प्रस्तूयेत; किञ्च एतादृशस्य कस्यापि विधेयकस्य पुरःस्थापनाय अथवा एतादृशस्य कस्यापि संशोधनस्य प्रस्तावनाय स्वीकृतिः ३४४-तमानुच्छेदस्य प्रथमखण्डस्याधीनं घटितस्यायोगस्य पुरःप्रशंसनानाम्, तथा तदनुच्छेदस्य चतुर्थखण्डस्याधीनं घटितायाः समितेः प्रतिवेदनस्य विचारानन्तरमेव राष्ट्रपतिना दीयेत ।

### अध्यायः ४.—विशेषनिदेशाः

व्यथानां निवारणार्थमभिवेदनेषु प्रयोक्तव्या भाषा ।

३५०. कस्या अपि व्यथाया निवारणार्थं संघस्य कस्यापि राज्यस्य वा कस्मै अपि पदाधिकारिणे प्राधिकारिणे वा यथायथं संघे तद्राज्ये वा प्रयुज्यमानायां कस्यामपि भाषायामभिवेदनं दातुं प्रत्येकजनस्य स्वत्वं भवेत् ।

## भागः १७.— राजभाषा

### अनुच्छेदः ३५१

३५१. हिन्दीभाषायाः प्रसारस्य वृद्धिः, तस्या विकासो यथा सा भारतस्य संमिश्रितसंस्कृतेः सर्वेषामुपादानानामभिव्यक्तेः साधनं संपद्यते, तथा तस्याः स्वभावे हस्तक्षेपमन्तरेण हिन्दुस्थान्या अष्टमानुसूच्यामुल्लिखितानामन्यासां भारतीयभाषाणां च रूपाणां शैल्याः शब्दसमूहानां चात्मसात्कारेण तथा यत्रावश्यकं वाञ्छनीयं च भवेत्तत्र तस्याः शब्दभाण्डाराय मुख्यतया संस्कृताद् गौणतया च अन्यभाषाभ्यः शब्दग्रहणेन तस्याः समृद्धेः संपादनं संघस्य कर्तव्यं भवेत् । हिन्दीभाषाया विकासार्थं निदेशः ।

# भागः १८

## आपातोपबन्धाः

आपातस्योद्घोषणा ।

३५२. (१) यदि राष्ट्रपतेः समाधानं जायते यद् घोर आपातो विद्यते यतो हि युद्धेन बाह्याक्रमणेन वा आभ्यन्तर्या अशान्त्या वा भारतस्य तद्राज्यक्षेत्रस्य कस्यापि भागस्य वा सुरक्षा भयमापन्नेति, तर्हि स उद्घोषणाद्वारा तदाशयस्य घोषणां कर्तुमर्हति ।

(२) प्रथमखण्डस्याधीनं कृतोद्घोषणा—

(क) उत्तरवर्तिन्योद्घोषणया प्रतिसंहृता भवितुमर्हति;

(ख) संसदः प्रत्येकसदनस्य पुरतः स्थाप्येत;

(ग) मासद्वयस्य कालावधेः समाप्तेः पूर्वं संसद उभाभ्यां सदनाभ्यां संकल्पद्वारा नानुमोदिता चेत्तत्कालावधेः समाप्तौ प्रवर्तनाद्विरमेत्—

परन्तु यद्येतादृशी काप्युद्घोषणा तस्मिन्काले प्रकाशिता भवति यदा लोकसभा विघटिता वर्तते अथवा लोकसभाया विघटनमेतत्खण्डस्य (ग)-उपखण्डे निर्दिष्टस्य मासद्वयकालावधेरभ्यन्तरे संपद्यते, तथा यदि उद्घोषणाया अनुमोदकः संकल्पो राज्यपरिषदा पारितो जायते, किन्तु एतादृश्या उद्घोषणाया विषये लोकसभया तत्कालावधेः समाप्तेः पूर्वं कोऽपि संकल्पो न पारितो वर्तते, तर्हि उद्घोषणा तस्माद्दिनाङ्काद् यस्मिन् लोकसभा स्वकीयपुनर्घटनस्यानन्तरं प्रथमवारमुपविशति त्रिंशतो दिनानां समाप्तौ प्रवर्तनाद्विरमेद् यदि उक्तस्य त्रिंशद्दिनकालावधेः समाप्तेः पूर्वमुद्घोषणाया अनुमोदकः संकल्पो लोकसभयापि पारितो न जायते ।

(३) यदि राष्ट्रपतेः समाधानं जायते यद् युद्धस्य बाह्याक्रमणस्य वा आभ्यन्तर्या अशान्तेर्वा भयं सन्निहितं वर्तते तर्हि, युद्धस्य कस्याप्येतादृशस्याक्रमणस्याशान्तेर्वा वास्तविक्या घटनायाः पूर्वम्, भारतस्य

भागः १८.—आपातोपबन्धाः

अनुच्छेदाः ३५२-३५४

अथवा भारतराज्यक्षेत्रीयस्य कस्यापि भागस्य सुरक्षा एवं भयमापन्ना वर्तत इति घोषयन्ती आपातस्योद्घोषणा कर्तुं शक्यते ।

३५३. यदापातस्योद्घोषणा प्रवर्तते तदा—

आपातस्योद्घोषणायाः प्रभावः ।

(क) एतत्संविधानगतं सर्वमविगणय्य, संघस्य कार्यपालिका शक्तिः कस्मैचिद् अपि राज्याय तेन स्वकार्यपालिकाशक्तिः कया रीत्या प्रयोक्तव्येति विषये निदेशदानपर्यन्तं विस्तृता भवेत्;

(ख) कस्यापि विषयस्य संबन्धे विधिनिर्माणस्य संसदः शक्तावेतादृशानां विधीनां निर्माणस्य शक्तिरप्यन्तर्गता भवेद् ये तद्विषयस्य संबन्धे संघाय अथवा संघस्य पदाधिकारिभ्यः प्राधिकारिभ्यश्च शक्तीर्ददति कर्तव्यानि च समर्पयन्ति अथवा शक्तीनां दानं कर्तव्यानां च समर्पणं प्राधिकृतं कुर्वन्ति, यद्यपि स विषय एतादृशो भवति यः संघसूच्यां परिगणितो न विद्यते ।

३५४. (१) यदापातस्योद्घोषणा प्रवर्तते तदा राष्ट्रपतिरादेशेन निदेष्टुं क्षमते यदेतस्य संविधानस्य २६८-तमानुच्छेदाद् २७९-तमानुच्छेदपर्यन्तं सर्वे अथवा केऽपि उपबन्धा एतादृशे कस्मिन्नपि कालावधौ यादृशस्तस्मिन्नादेश उल्लिख्येत, यश्च कस्यामप्यवस्थायां तस्य वित्तीयवर्षस्य समाप्तेरनन्तरं विस्तृतो न भवेद् यस्मिन्नेतादृशी उद्घोषणा प्रवर्तनाद्विरमति, एतादृशानामपवादानां रूपभेदानां चाधीनं कार्यकरा भवेयुर्यादृशान् स उचितान् मन्यते ।

यदापातस्योद्घोषणा प्रवर्तते विद्यते तदा राजस्वविभाजनसंबन्धिनामुपबन्धानां प्रयुक्तिः ।

(२) प्रथमखण्डस्याधीनं कृतः प्रत्येक आदेशस्तस्य करणाद् अनन्तरं यथासंभवं शीघ्रं संसदः प्रत्येकसदनस्य पुरतः स्थाप्येत ।

## भागः १८.—आपातोपबन्धाः

### अनुच्छेदौ ३५५–३५६

बाह्याक्रमणादाभ्यन्तर्या अशान्तेश्च राज्यानां संरक्षणस्य संघेन कर्तव्यत्वम् ।

**३५५.** बाह्याक्रमणाद् आभ्यन्तर्या अशान्तेश्च प्रत्येकराज्यस्य संरक्षणं तथा प्रत्येकराज्यस्य शासनमेतस्य संविधानस्योपबन्धानामनुसारेण प्रवर्त्येत इति सुनिश्चितीकरणं संघस्य कर्तव्यं भवेत् ।

राज्येषु सांविधानिकतन्त्रस्य विफलतावस्थायामुपबन्धाः ।

**३५६.** (१) यदि कस्यापि राज्यस्य राज्यपालाद्राजप्रमुखाद्वा प्रतिवेदनस्य प्राप्तौ अन्यथा वा राष्ट्रपतेः समाधानं जायते यत्स्थितिरेतादृशी समुत्पन्ना विद्यते यस्यां तस्य राज्यस्य शासनमेतत्संविधानस्योपबन्धानामनुसारेण न प्रवर्तयितुं शक्यते, तर्हि राष्ट्रपतिरुद्घोषणाद्वारा—

(क) तद्राज्यशासनस्य सर्वाणि कृत्यानि किमपि कृत्यं वा, तथा यथायथं राज्यपाले राजप्रमुखे वा, अथवा राज्यस्य विधानमण्डलं वर्जयित्वा राज्यस्य कस्मिन्नपि निकाये प्राधिकारिणि वा, निहिताः, तेन तेन वा प्रयोक्तव्याः सर्वाः शक्तीः काञ्चिद्वा शक्तिं स्वायत्तीकर्तुं क्षमते;

(ख) घोषयितुं क्षमते यद्राज्यविधामण्डलस्य शक्तयः संसदः प्राधिकारेण तदधीनं वा प्रयोक्तव्या भवेयुः;

(ग) राज्ये केनापि निकायेन प्राधिकारिणा वा संबद्धानामेतत्संविधानस्य केषामप्युपबन्धानां प्रवर्तनं पूर्णतोऽशतो वा निलम्बितं कर्तुमुपबन्धैः सहितानेतादृशान् प्रासङ्गिकान् आनुषङ्गिकांश्चोपबन्धान् निर्मातुं क्षमते यादृशान् राष्ट्रपतिरुद्घोषणाया उद्देश्यानि प्रभाववन्ति संपादयितुम् आवश्यकान् वाञ्छनीयांश्च प्रत्येति—

## भागः १८.— आपातोपबन्धाः

### अनुच्छेदः ३५६

परन्तु एतत्खण्डे किमपि राष्ट्रपतिमुच्चन्यायालये निहितानां तेन वा प्रयोक्तव्यानां शक्तीनां कामपि स्वायत्तीकर्तुम् अथवा एतत्संविधानस्य उच्चन्यायालयैः संबद्धानां केषामप्युपबन्धानां प्रवर्तनं पूर्णतोंऽशतो वा निलम्बितं विधातुं प्राधिकृतं न कुर्यात् ।

(२) एतादृशी काप्युद्घोषणा कयापि उत्तरवर्तिन्योद्घोषणया प्रतिसंहृता परिवर्तिता वा कर्तुं शक्यते ।

(३) एतदनुच्छेदस्याधीनं कृता प्रत्येकोद्घोषणा संसदः प्रत्येक-सदनस्य समक्षं स्थाप्येत, तथा यत्र सा पूर्ववर्तिन्या उद्घोषणायाः प्रति-संहर्त्री उद्घोषणा न भवति तत्र सा मासद्वयस्य समाप्तौ, यदि सा तत्का-लावधेः समाप्तेः पूर्वं संसद उभाभ्यां सदनाभ्यां संकल्पेनानुमोदिता न जायते, प्रवर्तनाद्विरमेत् —

परन्तु यद्येतादृशी काप्युद्घोषणा ( या पूर्ववर्तिन्या उद्घोषणायाः प्रतिसंहर्त्री उद्घोषणा न भवति ) तस्मिन् काले प्रकाशिता भवति यदा लोकसभा विघटिता वर्तते अथवा लोकसभाया विघटनमेतत्खण्डे निर्दि-ष्टस्य मासद्वयकालावधेरभ्यन्तरे संपद्यते, तथा यदि उद्घोषणाया अनु-मोदकः संकल्पो राज्यपरिषदा पारितो जायते किन्तु एतादृश्या उद्घोषणाया विषये लोकसभया तत्कालावधेः समाप्तेः पूर्वं कोऽपि संकल्पो न पारितो वर्तते, तर्हि उद्घोषणा तस्मादिनाङ्काद् यस्मिन् लोकसभा स्वकीयपुनर्घट-नस्यानन्तरं प्रथमवारमुपविशति त्रिंशतो दिनानां समाप्तौ प्रवर्तनाद्विरमेद् यदि उक्तस्य त्रिंशद्दिनकालावधेः समाप्तेः पूर्वमुद्घोषणाया अनुमोदकः संकल्पो लोकसभयापि पारितो न जायते ।

(४) एवमनुमोदिता उद्घोषणा, यदि प्रतिसंहृता न भवति तर्हि, एतस्यानुच्छेदस्य तृतीयखण्डस्याधीनमुद्घोषणाया अनुमोदकयोः संकल्पयोर्द्वितीयसंकल्पस्य पारणस्य दिनाङ्कात् षण्णां मासानां कालावधेः समाप्तौ प्रवर्तनाद्विरमेत्—

## भागः १८.— आपातोपबन्धाः

### अनुच्छेदौ ३५६–३५७

परन्तु यदि यावद्वारं च एतादृश्या उद्घोषणायाः प्रवृत्तेरनुवर्तनार्थमनुमोदकः संकल्पः संसद उभाभ्यां सदनाभ्यां पार्यते तर्हि सोद्घोषणा, प्रतिसंहृता न चेत्, तस्माद्दिनाङ्काद् यस्मिन् सा एतत्खण्डस्याधीनमन्यथा प्रवर्तनाद्विरमेत्, षण्णां मासानामपरं कालावधिं यावत्प्रवर्तेत, किन्तु काप्येतादृश्युद्घोषणा कस्यामप्यवस्थायां वर्षत्रयादधिकं प्रवृत्ता न भवेत्—

परन्तु अन्यदपि, यदि लोकसभाया विघटनं षण्णां मासानां कस्याप्येतादृशस्य कालावधेरभ्यन्तरे संजायते, तथा एतादृश्या उद्घोषणायाः प्रवृत्तेरनुवर्तनार्थमनुमोदकः संकल्पो राज्यपरिषदा पारितो जायते किन्तु एतादृश्या उद्घोषणायाः प्रवृत्तेरनुवर्तनविषये कोऽपि संकल्पो लोकसभया उक्तकालावधौ न पारितो वर्तते, तर्हि सा उद्घोषणा तस्माद्दिनाङ्काद् यस्मिन् लोकसभा स्वकीयपुनर्घटनस्यानन्तरं प्रथमवारमुपविशति त्रिंशतो दिनानां समाप्तौ प्रवर्तनाद्विरमेद् यदि उक्तस्य त्रिंशद्दिनकालावधेः समाप्तेः पूर्वमुद्घोषणायाः प्रवृत्तेरनुवर्तनार्थमनुमोदकः संकल्पो लोकसभयापि पारितो न जायते ।

३५६-तमानुच्छेदस्यानुरोधेन कृताया उद्घोषणाया अनुरोधेन विधायिनीनां शक्तीनां प्रयोगः ।

३५७. (१) यत्र ३५६-तमानुच्छेदस्य प्रथमखण्डस्यानुरोधेन कृतयोद्घोषणयैतद् घोषितं वर्तते यद्राज्यस्य विधानमण्डलस्य शक्तयः संसदः प्राधिकारेण अधीनं वा प्रयोक्तव्या भवेयुस्तत्र—

(क) राज्यविधानमण्डलस्य विधिनिर्माणस्य शक्तेः राष्ट्रपतये प्रदानार्थं तथा एवं प्रदत्तायाः शक्तेरन्यस्मै कस्मैचित् प्राधिकारिणे, यं राष्ट्रपतिस्तदर्थमुल्लिखेत्, एतादृशप्रतिबन्धानामधीनं येषामारोपणं स उचितं मन्यते, प्रत्यायोजनार्थं राष्ट्रपतिं प्राधिकृतं कर्तुं संसदः ;

(ख) संघाय तस्य पदाधिकारिभ्यः प्राधिकारिभ्यश्च शक्तीः प्रददतां तेषु कर्तव्यानि वा आरोपयताम्, अथवा शक्तीनां प्रदानं कर्तव्यानां चारोपणं

प्राधिकृतं कुर्वतां विधीनां निर्माणस्य संसदः अथवा राष्ट्रपतेरथवा अन्यस्य प्राधिकारिणो यस्मिन् (क)-उपखण्डस्यानुरोधेनैतादृशविधिनिर्माणस्य शक्तिर्निहिता वर्तते;

(ग) यदा लोकसभायाः सत्रं न विद्यते तदा एतादृशव्ययस्य संसदः स्वीकृतेर्लम्बनपर्यन्तं राज्यस्य संचितनिधेर्व्ययं प्राधिकृतं कर्तुं राष्ट्रपतेः

क्षमता भवेत्।

(२) राज्यविधानमण्डलस्य शक्तेः प्रयोगे संसदा राष्ट्रपतिना वा प्रथमखण्डस्य (ख)-उपखण्डे निर्दिष्टेन प्राधिकारिणा वा निर्मितः कोऽपि विधिः, यं ३५६-तमानुच्छेदस्यानुरोधेन कृतोद्घोषणाया अभावे संसद् राष्ट्रपतिर्वा एतादृशोऽन्यः प्राधिकारी वा निर्मातुं क्षमो न भवेत्, उद्घोषणायाः प्रवर्तनाद्विरामस्यानन्तरमेकस्य वर्षस्य कालावधेः समाप्तौ, अक्षमताया मात्रां यावत्, उक्तकालावधेः समाप्तेः पूर्वं कृतान् न कृतान्वा अर्थान् वर्जयित्वा, प्रभावाद्विरमेत्, यदि एवं प्रभावाद्विरता उपबन्धाः समुचितविधानमण्डलस्याधिनियमेन ततः पूर्वमेव निरस्ता अथवा रूपभेदैः सहिता विरहिता वा अधिनियमिता न भवेयुः।

आपातकाले १९-तमानुच्छेदस्योपबन्धानां निलम्बनम्।

३५८. आपातस्योद्घोषणायां प्रवर्तमानायाम् १९-तमानुच्छेदस्य किमपि केनापि राज्येन कस्यापि विधेर्निर्माणस्य अथवा कस्या अपि कार्यपालकक्रियाया निर्वहणस्य तृतीयभागे परिभाषितां शक्तिं, यं यां वा तद्राज्यं तद्भागान्तर्निविष्टोपबन्धानामभावे निर्मातुं निर्वोढुं वा क्षमं भवेत्, निर्बन्धितां न कुर्यात्, किन्तु एवं निर्मितः कोऽपि विधिरुद्घोषणायाः प्रवर्तनाद्विरामे, अक्षमताया मात्रां यावत्, विधेरेवं प्रभावविरामात् पूर्वं कृतान् न कृतान् वा अर्थान् वर्जयित्वा, तत्कालं प्रभावाद्विरतो भवेत्।

## भागः १८.— आपातोपबन्धाः

### अनुच्छेदौ ३५९-३६०

आपातकाले तृतीयभागेन प्रदत्ताधिकाराणां प्रवर्तनस्य निलम्बनम्।

३५९. (१) यत्रापातस्योद्घोषणा प्रवर्तते तत्र राष्ट्रपतिरादेशेन घोषयितुमर्हति यत्तृतीयभागेन दत्तेष्वधिकारेषु एतादृशानां प्रवर्तनार्थं यादृशा अस्मिन्नादेशे वर्णिता भवेयुः कस्मिन्नपि न्यायालये गमनस्याधिकारस्तथा एवं वर्णितानधिकारान् प्रवर्तयितुं कस्मिन्नपि न्यायालये लम्बिताः सर्वाः कार्यप्रवृत्तयस्तं कालावधिं यावद् यस्मिन्नुद्घोषणा प्रवर्तते अथवा ततोऽल्पतरमेतादृशं कालावधिं यावद् यादृश आदेश उल्लिखितो भवेद् निलम्बितास्तिष्ठेयुः।

(२) उपर्युक्तप्रकारेण कृत आदेशो भारतस्य समस्तराज्यक्षेत्रे कस्मिन्नपि भागे वा विस्तृतो भवितुमर्हति।

(३) प्रथमखण्डस्याधीनं कृतः प्रत्येकमादेशस्तस्य करणानन्तरं यथासंभवं शीघ्रं संसदः प्रत्येकसदनस्य पुरतः स्थाप्येत।

वित्तीयापातस्य विषय उपबन्धाः।

३६०. (१) यदि राष्ट्रपतेः समाधानं जायते यदेतादृशी स्थितिरुत्पन्ना विद्यते यतो भारतस्य तद्राज्यक्षेत्रस्य कस्यापि भागस्य वा वित्तीयं स्थायित्वं प्रत्ययो वा भयमापन्नो वर्तते तर्हि स उद्घोषणया तस्य विषयस्य घोषणां कर्तुमर्हति।

(२) ३५२-तमानुच्छेदस्य द्वितीयखण्डस्योपबन्धा एतदनुच्छेदस्याधीनं प्रकाशिताया उद्घोषणायाः संबन्धे तथैव प्रवर्तेरन् यथा ते ३५२-तमानुच्छेदस्याधीनं प्रकाशितायाम् आपातस्योद्घोषणायां प्रवर्तन्ते।

(३) तस्मिन्कालावधौ यस्मिन् प्रथमखण्डे वर्णिता काप्युद्घोषणा प्रवर्तते संघस्य कार्यपालिका शक्तिः कस्मैचिद् अपि राज्याय वित्तीयौचित्यसंबन्धिन एतादृशान् सिद्धान्तान् पालयितुम्, यादृशा निदेशेषूल्लिखिता भवेयुः, निदेशदानपर्यन्तं तथा एतादृशानामन्येषां निदेशानाम्, यादृशान् राष्ट्रपतिस्तत्प्रयोजनार्थमावश्यकान् पर्याप्तांश्च मन्येत, दानपर्यन्तं विस्तृता भवेत्।

**भागः १८.— आपातोपबन्धाः**

**अनुच्छेदः ३६०**

(४) एतत्संविधानगतं सर्वमविगणय्य,

(क) एतादृशे कस्मिन्नपि निदेशे—

(१) कस्यापि राज्यस्य कार्याणां संबन्धे सेवां कुर्वतां सर्वेषां जनानां कस्यापि वर्गस्य वा वेतनेषु भक्तेषु च न्यूनतामपेक्षमाण उपबन्धः ;

(२) धनविधेयकानामन्यविधेयकानां वा, यानि २०७-तमानुच्छेदस्योपबन्धा विषयीकुर्वन्ति, राज्य-विधानमण्डलेन तेषां पारणानन्तरम्, राष्ट्र-पतेर्विचारार्थं रक्षणमपेक्षमाण उपबन्धः,

अन्तर्गतो भवितुमर्हति;

(ख) तस्मिन् कालावधौ यस्मिन्नेतदनुच्छेदस्याधीनं प्रकाशिता उद्घोषणा प्रवर्तते, उच्चतमन्यालयस्योच्चन्यायालयानां च न्यायाधीशैः सहितानां संघस्य कार्याणां संबन्धे सेवां कुर्वतां सर्वेषां जनानां कस्यापि वर्गस्य वा वेतनेषु भक्तेषु च न्यूनतायै निदेशान् प्रकाशयितुं राष्ट्रपतिः क्षमो भवेत् ।

# भागः १९

## प्रकीर्णकम्

राष्ट्रपते राज्यपालानां राजप्रमुखानां च संरक्षणम् ।

३६१. (१) राष्ट्रपतिः कस्यापि राज्यस्य राज्यपालो राजप्रमुखो वा स्वपदस्य शक्तीनां प्रयोगार्थं कर्तव्यानां च पालनार्थम् अथवा तासां शक्तीनां प्रयोगे कर्तव्यानां पालने च स्वयं कृतस्य [शक्तिरस्तीति] अभिप्रेत्य वा कृतस्य कस्यापि कार्यस्य हेतोः कमपि न्यायालयं प्रति उत्तरदायी न भवेत् —

परन्तु ६१-तमानुच्छेदस्याधीनं दोषारोपस्यानुसंधानार्थं संसदोऽन्यतरेण सदनेन नियुक्तेन नामोद्दिष्टेन वा केनापि न्यायालयेन न्यायाधिकरणेन निकायेन वा राष्ट्रपतेराचरणस्य विलोकनं कर्तुं शक्येत —

परन्तु अन्यदपि, एतत्खण्डगतस्य कस्यापि नैवमर्थः कर्तव्यो यत्तद् भारतशासनस्य कस्यापि राज्यस्य शासनस्य वा विरुद्धं समुचितकार्यप्रवृत्तेश्चालनस्य कस्यापि जनस्याधिकारं निर्बन्धितं करोतीति ।

(२) राष्ट्रपतेरथवा कस्यापि राज्यस्य राज्यपालस्य राजप्रमुखस्य वा विरुद्धं तस्य पदावधौ कीदृश्यपि दण्डकार्यप्रवृत्तिः कस्मिन्नपि न्यायालये उपक्रान्ता न भवेत् न चानुवर्त्येत ।

(३) राष्ट्रपतेरथवा कस्यापि राज्यस्य राज्यपालस्य राजप्रमुखस्य वा पदावधौ तमासिद्धं बन्दिनं वा कर्तुं कस्मादपि न्यायालयात् काप्यादेशिका न प्रचार्येत ।

(४) राष्ट्रपतेरथवा कस्यापि राज्यस्य राज्यपालस्य राजप्रमुखस्य वा रूपेण स्वपदस्य ग्रहणात्पूर्वं तत्पश्चाद्वा वैयक्तिकरूपेण कृतस्य [ शक्तिरस्तीति ] अभिप्रेत्य वा कृतस्य कस्यापि कार्यस्य विषये राष्ट्रपतेरथवा एतादृशराज्यस्य राज्यपालस्य राजप्रमुखस्य वा विरुद्धमनुतोषस्य अभ्यर्थनां कुर्वत्यः का अपि कार्यप्रवृत्तयस्तस्य पदावधौ कस्मिन्नपि न्यायालये तावदुपक्रान्ता न क्रियेरन् यावत्कार्यप्रवृत्तीनां स्वरूपम्, तदर्थं वादस्य कारणम्, एतादृशकार्यप्रवृत्तीनाम् उपक्रमितुर्विवादिनो नाम, वर्णनम्,

निवासस्थानम्, तथा तेनाध्यर्थितमनुतोषं च वर्णयन्त्या लिखितसूचनाया यथायथं राष्ट्रपतये अथवा राज्यपालाय राजप्रमुखाय वा दानस्य तत्कार्यालये वा उत्सर्जनस्यानन्तरं मासद्वयं व्यतीतं न भवेत् ।

देशीयराज्यानां शासकानामधिकारा विशेषाधिकाराश्च ।

३६२. संसदः कस्यापि राज्यस्य विधानमण्डलस्य वा विधिनिर्माणस्य शक्तेः प्रयोगे, अथवा संघस्य कस्यापि राज्यस्य वा कार्यपालिकायाः शक्तेः प्रयोगे, कस्यापि देशीयराज्यस्य शासकस्य वैयक्तिकानामधिकाराणां विशेषाधिकाराणां गरिम्णश्च विषये एतादृश्याः प्रसंविद एतादृशस्य समयस्य वाधीनम्, यादृशी यादृशो वा २९१-तमानुच्छेदस्य प्रथमखण्डे निर्दिश्यते, दत्तायां प्रत्याभूतावाश्वासने वा सम्यगवधानं दीयेत ।

कतिपयसन्धिसमयादिभ्य उद्भूतविवादेषु न्यायालयानां हस्तक्षेपस्य निषेधः ।

३६३. (१) एतत्संविधानगतं सर्वमविगणय्य, किन्तु १४३-तमानुच्छेदस्योपबन्धानामधीनत्वे, नहि उच्चतमन्यायालयस्य नाप्यन्यस्य कस्यापि न्यायालयस्य—कस्यापि सन्धेः, समयस्य, प्रसंविदः, वचनबन्धस्य, 'सनदः', एतादृशस्यान्यलिखितस्य वा, यदेतत्संविधानस्य प्रारम्भात्पूर्वं कस्यापि देशीयराज्यस्य शासकेन कृतं निष्पादितं वा अभूत् तथा यस्मिन् भारताधिनिवेशस्य शासनं तत्पूर्वाधिकारि किमपि शासनं वा एकः पक्षोऽभूत् तथा यदेतादृशस्य प्रारम्भस्य पश्चात् प्रवर्तनेऽनुवर्ततेऽनुवर्त्यते वा, कस्मादप्युपबन्धादुद्भूते कस्मिन्नपि विवादे अथवा एतादृशेन संधिना, समयेन, प्रसंविदा, वचनबन्धेन, सनदा, एतादृशेनान्येन लिखितेन वा संबद्धानामेतस्य संविधानस्योपबन्धानां कस्मादपि प्रोद्भूतस्य कस्याप्यधिकारस्य उद्भूतस्य वा कस्यापि दायित्वस्याभारस्य वा विषये कस्मिन्नपि विवादे—क्षेत्राधिकारो भवेत् ।

(२) एतस्मिन्ननुच्छेदे—

(क) "देशीयराज्यम्" इत्यनेन किमपि राज्यक्षेत्रमभिप्रेयते यदेतत्संविधानस्य प्रारम्भात्पूर्वं सम्राजा

भारताधिनिवेशस्य शासनेन वा एतादृशराज्यत्वेनाभिमतमासीत्; तथा

(ख) "शासकः" इत्यस्मिन् राजा, मुख्यः, अन्यो वा कश्चिज्जनो य एतादृशात् प्रारम्भात्पूर्वं सम्राजा भारताधिनिवेशस्य शासनेन वा कस्यचिदपि देशीयराज्यस्य शासकत्वेनाभिमत आसीत्, अन्तर्गतो भवति।

महावेलापत्तनानां विमानक्षेत्राणां च कृते विशेषोपबन्धाः।

३६४. (१) एतत्संविधानगतं सर्वमविगणय्य, राष्ट्रपतिर्लोकाधिसूचनया निर्देष्टुं क्षमते यदेतादृशं दिनाङ्कमारभ्य यादृशोऽधिसूचनायामुल्लिखितो भवेत्—

(क) संसदा कस्यापि राज्यस्य विधानमण्डलेन वा निर्मितः कोऽपि विधिः किमपि महावेलापत्तनं विमानक्षेत्रं वा न विषयीकुर्यात्, अथवा एतादृशानामपवादानां रूपभेदानां वा अधीनत्वेन यादृशा लोकाधिसूचनायामुल्लिखिता भवेयुर्विषयीकुर्यात्; अथवा

(ख) कोऽपि वर्तमानो विधिः कस्मिन्नपि महावेलापत्तने विमानक्षेत्रे वा उक्तदिनाङ्कात् पूर्वं कृतानामथवा न कृतानाम् अर्थानां संबन्धं विहाय कार्यकरो न भवेत्, अथवा एतादृशे महावेलापत्तने विमानक्षेत्रे वा एतादृशानामपवादानां रूपभेदानां वा अधीनत्वेन यादृशा लोकाधिसूचनायामुल्लिखिता भवेयुः कार्यकरो भवेत्।

(२) अस्मिन्ननुच्छेदे—

(क) "महावेलापत्तनम्" इत्यनेन किमपि वेलापत्तनमभिप्रेयते यत् संसदा निर्मितेन केनापि विधिना

केनापि वर्तमानविधिना वा तदधीनं वा महावेलापत्तनत्वेन घोषितं विद्यते, तथा तेन तानि सर्वाणि क्षेत्राणि संगृह्यन्ते यानि तत्समये एतादृशस्य वेलापत्तनस्य सीमानामन्तर्गतानि भवन्ति;

(ख) "विमानक्षेत्रम्" इत्यनेन वायुपथैर्विमानैर्विमानपरिवहणेन च संबद्धानामधिनियमनानां प्रयोजनार्थं परिभाषितं विमानक्षेत्रमभिप्रेयते ।

३६५. यत्रैतत्संविधानस्योपबन्धेषु कस्याप्यधीनं संघस्य कार्यपालिकायाः शक्तेः प्रयोगेण दत्तानां केषाञ्चिन्निदेशानामनुवर्तने तेषां प्रभावित्वापादने वा किञ्चिदपि राज्यमसफलं भवति तत्र राष्ट्रपतेरेषा मतिर्विधियुक्ता भवेद् यदेतादृशी स्थितिरुत्पन्ना वर्तते यस्यां राज्यस्य शासनमेतत्संविधानस्योपबन्धानामनुसारेण नहि चालयितुं शक्यते । संघेन दत्तानां निदेशानामनुवर्तने प्रभावित्वापादने वा असफलतायाः प्रभावः ।

३६६. संविधानेऽस्मिन्, प्रसङ्गेनान्यथा अपेक्षितं चेन्न भवति, निम्नलिखितानां शब्दानां शब्दसमूहानां वा त एवार्थाः सन्ति ये क्रमशोऽत्र तेभ्योऽर्पिता विद्यन्ते; यथा— परिभाषाः ।

(१) "कृष्यायः" इत्यनेन भारतीयेनायकरेण संबद्धानामधिनियमनानां प्रयोजनार्थं परिभाषितः कृष्यायोऽभिप्रेयते;

(२) "आङ्ग्ल-भारतीयः" इत्यनेन स जनोऽभिप्रेयते यस्य पिता पितृपरम्परायामन्यः कश्चित्पूर्वजो वा योरोपीयसमुद्भवत्वानासीद् अस्ति वा, किन्तु यो भारतराज्यक्षेत्रस्याधिवासी अस्ति यश्चैतादृशे राज्यक्षेत्रे तत्र नित्यशो निवसद्भ्याम्, न च केवलमस्थायिप्रयोजनैस्तत्र स्थिताभ्याम्, पितृभ्यां जातोऽस्ति आसीद्वा;

(३) "अनुच्छेदः" इत्यनेन एतत्संविधानस्यानुच्छेदोऽभिप्रेयते;

(४) "उद्धारः" इत्यनेन वार्षिकीणामनुदानेन धनादानं संगृह्यते, "ऋणग्रहणस्य" च तदनुसारमर्थः क्रियेत;

## भागः १९.—प्रकीर्णकम्

### अनुच्छेदः ३६६

(५) "खण्डः" इत्यनेन तस्यानुच्छेदस्य खण्डोऽभिप्रेयते यस्मिन्नेष शब्दो वर्तते;

(६) "निगमकरः" इत्यनेन कोऽप्यायकरोऽभिप्रेयते, यावद्धि स करः समवायैः प्रदेयो भवति एतादृशश्च स करो विद्यते यस्य संबन्धे निम्नलिखिताः प्रतिबन्धाः पूर्यन्ते—

(क) यत्स कृष्यायस्य संबन्धे आदेयो नास्ति;

(ख) यत्तस्मिन् करे प्रवर्तमानैः कैरपि अधिनियमनैः समवायैः प्रदातव्यस्य करस्य संबन्धे किमपि व्यवकलनं समवायैर्व्यक्तिभ्यः प्रदेयेभ्यो लाभांशेभ्यः प्राधिकृतं न भवति;

(ग) यद् भारतीयस्यायकरस्य प्रयोजनार्थम् एतादृशलाभांशान् प्राप्नुवतां जनानां पूर्णस्यायस्य गणनायाम्, अथवा एतादृशैर्जनैः प्रदेयस्य अथवा तेभ्यः प्रतिदेयस्य भारतीयस्यायकरस्य गणनायाम् एवंप्रदत्तस्य करस्य समाकलनाय कोऽप्युपबन्धो न विद्यते;

(७) "तत्स्थानिप्रान्तः", "तत्स्थानिदेशीयराज्यम्" अथवा "तत्स्थानीयराज्यम्" इत्येतैः संशयावस्थासु एतादृशः प्रान्त एतादृशं देशीयराज्यं राज्यं वा अभिप्रेयते यं यद्वा प्रकृतविशिष्टप्रयोजनार्थं राष्ट्रपतिर्यथायथं तत्स्थानिप्रान्तं तत्स्थानिदेशीयराज्यं तत्स्थानीयराज्यं वा निर्धारयेत्;

(८) "ऋणम्" इत्यस्मिन् वार्षिकीणां रूपेण मूलधनराशीनां प्रतिदानार्थं कस्याप्याभारस्य विषये किमपि दायित्वम्, तथा कस्या अपि प्रत्याभूतेरधीनं किमपि दायित्वमन्तर्गतं भवति, तथा "ऋणभाराः" इत्यस्य तदनुसारमर्थः क्रियेत;

भागः १९.— प्रकीर्णकम्

अनुच्छेदः ३६६

(९) " संपत्ति-शुल्कः " इत्यनेन कोऽपि शुल्कोऽभिप्रेयते यो मृत्यौ संक्रामन्त्याः, अथवा संसदा कस्यापि राज्यस्य विधानमण्डलेन वा तच्छुल्कसंबन्धे निर्मितविधीनामुपबन्धानामधीनं तथा संक्रामतीति रूपेणावगतायाः, सर्वस्याः संपत्तेः, उक्तविधिभिस्तदधीनं वा विहितानां नियमानामनुसारेणाभिनिश्चिते, मूलभूतमूल्ये तन्निर्देशेन वा परिगणयितव्यो भवेत् ;

(१०) " वर्तमानविधिः " इत्यनेन कोऽपि विधिः, अध्यादेशः; आदेशः, उपविधिः, नियमः, विनियमो वा अभिप्रेयते य एतत्संविधानस्य प्रारम्भात्पूर्वम् एतादृशस्य विधेः, अध्यादेशस्य, आदेशस्य, उपविधेः, नियमस्य विनियमस्य वा निर्माणस्य शक्तिमता केनापि विधानमण्डलेन, प्राधिकारिणा जनेन वा पारितो निर्मितो वा भवति;

(११) " 'फ़ेडरल'-न्यायालयः " इत्यनेन १९३५-तमवत्सरीय-भारतशासनाधिनियमस्याधीनं घटितो 'फ़ेडरल' न्यायालयोऽभिप्रेयते;

(१२) " भाण्डानि " इत्यस्मिन् सर्वाणि सामग्र्यः पण्यानि पदार्थाश्चान्तर्गतानि भवन्ति;

(१३) " प्रत्याभूतिः " इत्यस्मिन् कोऽप्याभारोऽन्तर्गतो भवति य एतस्य संविधानस्य प्रारम्भात् पूर्वं कस्याप्युपक्रमस्य लाभानां कस्मादप्युल्लिखितराशेर्न्यूनत्वावस्थायां प्रदानार्थमङ्गीकृतो भवेत् ;

(१४) "उच्चन्यायालयः" इत्यनेन कोऽपि न्यायालयोऽभिप्रेयते य एतस्य संविधानस्य प्रयोजनार्थं कस्यचिदपि राज्यस्य कृते उच्चन्यायालयो मन्यते, तथा एतस्यान्तर्गतो भवति—

(क) एतत्संविधानस्याधीनमुच्चन्यायालयरूपेण घटितः पुनर्घटितो वा भारतराज्यक्षेत्रे कोऽपि न्यायालयः; तथा

(ख) भारतराज्यक्षेत्रे कोऽप्यन्यो न्यायालयो य एतत्संविधानस्य सर्वेषां प्रयोजनानां कस्यापि वा प्रयो-

## भागः १९. — प्रकीर्णकम्

### अनुच्छेदः ३६६

जनस्य कृते संसदा विधिना उच्चन्यायालयत्वेन घोषितो भवेत्;

(१५) "देशीयराज्यम्" इत्यनेन किमपि राज्यक्षेत्रमभिप्रेयते यद् भारताधिनिवेशशासनेनैतादृशराज्यत्वेनाभ्यमन्यत;

(१६) "भागः" इत्यनेन एतस्य संविधानस्य भागोऽभिप्रेयते;

(१७) "निवृत्तिवेतनम्" इत्यनेन कस्मै अपि जनाय तत्सं-बन्धे वा प्रदेयं कीदृशमपि, अंशदानमूलकं तद्भिन्नं वा, निवृत्ति-वेतनमभिप्रेयते, तथा तस्यान्तर्गतानि भवन्ति—एवं प्रदेयं सेवानिवृत्तिवेतनम्, एवं प्रदेयमुपदानम्, तथा कस्यापि भविष्यनिधेरंशचयनानां, तद्वृद्ध्या तदतिरिक्तयोजनेन वा सहितं रहितं वा, प्रतिदानरूपेण प्रदेयः कोऽपि राशी राशयो वा;

(१८) "आपातस्योद्घोषणा" इत्यनेन ३५२-तमानुच्छेदस्य प्रथमखण्डस्याधीनं प्रकाशिता उद्घोषणाभिप्रेयते;

(१९) "लोकाधिसूचना" इत्यनेन भारतस्य सूचनापत्रे अथवा यथायथं राज्यस्य राजकीयसूचनापत्रेऽधिसूचनाभिप्रेयते;

(२०) "लोहमार्गः ( = रेलवे )" इत्यस्मिन्नान्तर्भवति,—

(क) कस्मिन्नपि नगरक्षेत्रे पूर्णतया स्थितो रथ्यालोहमार्गः ( = ट्रामवे ), अथवा

(ख) संचारस्य कोऽप्यन्यो मार्गो यः पूर्णतया एकस्मिन् राज्ये स्थितो भवेद् यश्च संसदा विधिना लोह-मार्गादन्यत्वेन घोषितो भवेत्;

(२१) "राजप्रमुखः" इत्यनेनाभिप्रेयते——

(क) हैदराबादराज्यस्य संबन्धे स जनो यस्तत्काले राष्ट्र-पतिना हैदराबादस्य निज़ामरूपेणाभिमन्यते;

## भागः १९. — प्रकीर्णकम्

### अनुच्छेदः ३६६

(ख) जम्बूकाश्मीरराज्यस्य मैसूरराज्यस्य वा संबन्धे स जनो यस्तत्काले राष्ट्रपतिना तद्राज्यस्य महाराजरूपेणाभिमन्यते; तथा

(ग) प्रथमानुसूच्याः (ख)-भाग उल्लिखितस्य कस्यचिदप्यन्यराज्यस्य संबन्धे स जनो यस्तत्काले राष्ट्रपतिना तद्राज्यस्य राजप्रमुखरूपेणाभिमन्यते, तथा तस्मिन्नुक्तराज्येषु कस्याचिदपि संबन्धे स जनोऽप्यन्तर्भवति यो राष्ट्रपतिना तद्राज्यस्य संबन्धे राजप्रमुखस्य शक्तीनां प्रयोगार्थं तत्काले क्षमत्वेनाभिमन्यते;

(२२) कस्यापि देशीयराज्यस्य संबन्धे "शासकः" इत्यनेन स कोऽपि राजा, प्रमुखोऽन्यो वा कश्चिज्जनोऽभिप्रेयते येन काप्येतादृशी प्रसंवित् कोऽप्येतादृशः समयो वा कृत आसीद् यथा २९१-तमानुच्छेदस्य प्रथमखण्डे निर्दिष्टमस्ति, तथा यो राष्ट्रपतिना तत्काले तद्राज्यस्य शासकत्वेनाभिमन्यते तथा तस्यान्तर्गत एतादृशः कोऽपि जनो भवति यो राष्ट्रपतिना एतादृशशासकस्य तत्काल उत्तराधिकारित्वेनाभिमन्यते;

(२३) "अनुसूची" इत्यनेन एतत्संविधानस्यानुसूची अभिप्रेयते;

(२४) "अनुसूचितजातयः" इत्यनेन एतादृश्यो जातयः, मूलवंशाः, जनजातयो वा, अथवा एतादृशीनां जातीनां मूलवंशानां जनजातीनां वा भागास्तदन्तगता उपवर्गा वा अभिप्रेयन्ते ये ३४१-तमानुच्छेदस्याधीनमेतत्संविधानस्य प्रयोजनार्थमनुसूचितजातयो मन्यन्ते;

(२५) "अनुसूचिता जनजातयः" इत्यनेन एतादृश्यो जनजातयो जनजातिसमाजा वा अथवा एतादृशीनां जनजातीनां जनजातिसमाजानां वा भागास्तदन्तर्भूता उपवर्गा वा अभिप्रेयन्ते ये ३४२-तमानुच्छेदस्याधीनमेतत्संविधानस्य प्रयोजनार्थमनुसूचितजनजातयो मन्यन्ते;

भागः १९.—– प्रकीर्णकम्

अनुच्छेदौ ३६६–३६७

(२६) " प्रतिभूतयः " इत्यस्मिन् निधिपत्राण्यप्यन्तर्गतानि भवन्ति;

(२७) " उपखण्डः " इत्यनेन तस्य खण्डस्योपखण्डोऽभिप्रेयते यस्मिन्नेष शब्दो वर्तते;

(२८) " कराधानम् " इत्यस्मिन् कस्यापि साधारणस्य स्थानीयस्य विशिष्टस्य वा करस्य प्रवेशकरस्य वा आरोपणमन्तर्गतं भवति, करस्य च तदनुसारमर्थः क्रियेत;

(२९) " आये करः " इत्यस्मिन् अतिरिक्तलाभकरप्रकारकः करोऽन्तर्गतो भवति;

(३०) " उपराजप्रमुखः " इत्यनेन प्रथमसूच्याः (ख)-भाग उल्लिखितस्य कस्यचिदपि राज्यस्य संबन्धे स जनोऽभिप्रेयते यो राष्ट्रपतिना तत्काले तद्राज्यस्योपराजप्रमुखरूपेणाभिमन्यते ।

निर्वचनम् । ३६७. (१) प्रसङ्गेनान्यथा अपेक्षितं चेन्न भवति, एतत्संविधानस्य निर्वचनहेतोः १८९७-तमवत्सरस्य साधारण-परिभाषाधिनियमः, कैरप्येतादृशैरनुकूलनै रूपभेदैश्च सहैव यादृशाः ३७२-तमानुच्छेदस्यानुरोधेन तस्मिन् क्रियेरन्, तथैव प्रवृत्तो भवेद् यथा स भारताधिनिवेशस्य विधानमण्डलस्याधिनियमस्य निर्वचनार्थं प्रवर्तते ।

(२) संविधानेऽस्मिन् संसदः संसदा वा निर्मितानामधिनियमानां विधीनां वा कस्मिन्नपि निर्देशे, अथवा प्रथमानुसूच्याः (क)-भागे (ख)-भागे वा उल्लिखितस्य कस्यापि राज्यस्य विधानमण्डलस्य विधानमण्डलेन वा निर्मितानामधिनियमानां विधीनां वा कस्मिन्नपि निर्देशे यथायथं राष्ट्रपतिना राज्यपालेन वा राजप्रमुखेन वा प्रवर्तितस्याध्यादेशस्य निर्देशोऽप्यन्तर्गत इत्यर्थः क्रियेत ।

## भागः १९.— प्रकीर्णकम्

### अनुच्छेदः ३६७

(३) एतत्संविधानस्य प्रयोजनार्थम् " वैदेशिकराज्यम् " इत्यनेन भारताद् भिन्नं किञ्चिदपि राज्यमभिप्रेयते—

परंतु संसदा निर्मितस्य कस्यापि विधेरुपबन्धानामधीनत्वे, राष्ट्रपतिरादेशेन कस्यचिदपि राज्यस्य वैदेशिकराज्यत्वाभावम्, एतादृशानां प्रयोजनानां कृते यादृशा आदेशे उल्लिख्येरन्, घोषयितुमर्हति ।

# भागः २०

## संविधानस्य संशोधनम्

संविधानस्य संशोधनार्थं प्रक्रिया।

३६८. एतत्संविधानस्य संशोधनस्य उपक्रमणं तत्प्रयोजनाय विधेयकस्य संसदोऽन्यतरस्मिन् सदने पुरःस्थापनेनैव कर्तुं शक्यते, यदा च प्रत्येकसदनेन तस्य सदनस्य समस्तसदस्यसंख्याया मध्ये बहुमतेन तथा तस्य सदनस्य उपस्थितानां मतदातॄणां च सदस्यानां तृतीयांशद्वयादन्यूनेन बहुमतेन तद्विधेयकं पारितं भवति तदा तद् राष्ट्रपतेः समक्षं तदनुमत्यै स्थाप्येत, विधेयके चैवमनुमते सति विधेयकनिबन्धनानामनुसारेण संविधानं संशोधितं तिष्ठेत्;

परंतु यद्येतादृशं संशोधनम्—

(क) ५४-तमानुच्छेदे, ५५-तमानुच्छेदे, ७३-तमानुच्छेदे, १६२-तमानुच्छेदे, २४१-तमानुच्छेदे वा; अथवा

(ख) पञ्चमभागस्य चतुर्थाध्याये, षष्ठभागस्य पञ्चमाध्याये, एकादशभागस्य प्रथमाध्याये वा; अथवा

(ग) सप्तमानुसूचीनां कस्यामपि सूच्याम्; अथवा

(घ) संसदि राज्यानां प्रतिनिधित्वे; अथवा

(ङ) एतस्यानुच्छेदस्योपबन्धेषु,

किमपि परिवर्तनं कर्तुमीहते तर्हि एतादृशसंशोधनार्थमुपबन्धं कुर्वतो विधेयकस्य राष्ट्रपतेः पुरतोऽनुमत्यर्थमुपस्थापनात्पूर्वं तत्संशोधनार्थं प्रथमानुसूच्याः (क)-(ख)-भागयोरुल्लिखितराज्येषु एकस्मादर्धादन्यूनराज्यानां विधानमण्डलानाम्, तत्प्रयोजनार्थं तैर्विधानमण्डलैः पारितैः संकल्पैः, अनुसमर्थनमप्यपेक्षेत।

# भागः २१

## अस्थायिनस्तथा संक्रमणकालिका उपबन्धाः

३६९. एतत्संविधानगतं सर्वमविगणय्य, एतत्संविधानस्य प्रारम्भात् पञ्चानां वर्षाणां कालावधौ निम्नलिखितविषयाणां संबन्धे, ते विषयाः समवर्तिसूच्यां प्रगणिता इवेति, विधिनिर्माणस्य संसदः शक्तिर्भवेत्, अर्थात्— राजसूच्याः केषांचिद्विषयाणां संबन्धे ते विषयाः समवर्तिसूच्या इवेति विधिनिर्माणस्य संसदोऽस्थायिनी शक्तिः ।

(क) कार्पासानि और्णानि च वस्त्राणि, असिद्धं तूलम् (यस्य धूतं तूलम् अधूतं च तूलं कर्पासं वा अन्तर्गतं भवति), कर्पासबीजानि, कागदम् (समाचारपत्रार्थं कागदं तस्यान्तर्गतं भवति), खाद्यपदार्थाः (येषां खाद्यानि तैलबीजानि तैलं चान्तर्गतानि भवन्ति), पशूनां यवसम् (यस्यान्तर्गतानि भवन्ति—खलिः अन्यानि च घनीभूतानि यवसानि), खनिजाङ्गाराः (येषामन्तर्गता भवन्ति—'कोकः' खनिजाङ्गारमयाः पदार्थाश्च), लोहम्, सारलोहम्, अभ्रकं च—एतेषां कस्यापि राज्यस्याभ्यन्तरे व्यापारो वाणिज्यं च, तथा तेषामुत्पादनं संभरणं विभाजनं च;

(ख) (क)-खण्डे वर्णितविषयेषु केनापि संबद्धानां विधीनां विरुद्धमपराधाः, उच्चतमन्यायालयमन्तरेण सर्वेषां न्यायालयानां तेषु विषयेषु कस्यापि संबन्धे क्षेत्राधिकारः शक्तयश्च, तथा तेषु विषयेषु कस्यापि संबन्धे कस्मिन्नपि न्यायालये गृह्यमाणदेयेभ्योऽन्यानि देयानि;

किन्तु संसदा निर्मितः कोऽपि विधिः, यमेतदनुच्छेदस्योपबन्धानामभावे निर्मातुं संसत्क्षमा न भवेत्, उक्तकालावधेः समाप्तौ, अक्षमताया

मात्रां यावत्, तत्समाप्तेः पूर्वं कृतेभ्यो न कृतेभ्यो वा अर्थेभ्योऽन्येषामर्थानां संबन्धे प्रभावाद् विरतो भवेत्।

जम्मूकाश्मीर-राज्यस्य संबन्धेऽस्थायिन उपबन्धाः।

३७०. (१) एतत्संविधानगतं सर्वमविगणय्य,

(क) २३८-तमानुच्छेदस्योपबन्धा जम्मूकाश्मीरराज्यसंबन्धे न प्रवर्तेरन्;

(ख) उक्तराज्यस्य संबन्धे विधिनिर्माणस्य संसदः शक्तिः—

(१) संघसूच्याः समवर्तिसूच्याश्च तान् विषयान् यावद्, यान् विषयान् राज्यशासनेन परामर्शं विधाय राष्ट्रपतिस्तेषां विषयाणां तत्स्थानिविषयत्वेन घोषयेद् ये भारताधिनिवेशे तद्राज्यस्य प्रवेशं शासति प्रवेशलिखिते उल्लिखिता एतादृशा विषयाः सन्ति येषां विषयेऽधिनिवेशविधान-मण्डलं विधिं निर्मातुमर्हति; तथा

(२) उक्तसूच्योस्तानन्यविषयान् यावद्, यान् तद्राज्य-शासनस्य सहमत्या राष्ट्रपतिरादेशेनोल्लिखेत्;

सीमिता भवेत्।

व्याख्या—एतदनुच्छेदस्य प्रयोजनार्थं राज्यशासनमित्यनेन स जनोऽभिप्रेयते यं राष्ट्रपतिः १९४८-तमवत्सरीयमार्चमासस्य पञ्चमदिने कृताया महाराजस्योद्घोषणाया अधीनं तत्काले पदस्थमन्त्रिपरिषदो मन्त्रणाया अनुसारेण कार्यकारी जम्मू-काश्मीरयोर्महाराज इति तत्कालेऽभिमन्यते;

(ग) प्रथमानुच्छेदस्य एतदनुच्छेदस्य चोपबन्धास्तद्राज्य-संबन्धे प्रवर्तेरन्;

(घ) एतत्संविधानस्योपबन्धेषु एतादृशा अन्य उपबन्धा एतादृशैरपवादै रूपभेदैश्च सह यादृशान् राष्ट्रपतिरादेशेनोल्लिखेत् तद्राज्यसंबन्धे प्रवर्तेरन्—

परन्तु एतादृशः कोऽप्यादेशो यः (ख)-उपखण्डस्य प्रथमकण्डिकायां निर्दिष्टे राज्यस्य प्रवेशलिखित उल्लिखितविषयैः संबद्धो भवेद् राज्यशासनेन सह परामर्शं विना न प्रवर्त्येत—

परन्तु अन्यदपि, एतादृशः कोऽप्यादेशो योऽन्तिमे पूर्ववर्तिनि पारन्तुके निर्दिष्टविषयेभ्यो भिन्नैर्विषयैः संबद्धो भवेत् तच्छासनस्य सहमतिं विना न प्रवर्त्येत ।

(२) यदि तद्राज्यशासनेन प्रथमखण्डस्य (ख)-उपखण्डस्य द्वितीयकण्डिकायामथवा तस्य खण्डस्य (घ)-उपखण्डस्य द्वितीयपारन्तुके निर्दिष्टा सहमतिः, तद्राज्यार्थं संविधाननिर्माणप्रयोजनवत्याः संविधानसभाया आमन्त्रणात्पूर्वम्, दीयेत तर्हि सा एतादृशसभायाः पुरत एतादृशस्य विनिश्चयस्य कृते स्थाप्येत यादृशं सा तद्विषये कुर्यात् ।

(३) एतदनुच्छेदस्य पूर्ववर्त्युपबन्धेषु गतं सर्वमविगणय्य, राष्ट्रपतिर्लोकाधिसूचनया घोषयितुं क्षमते यदेषोऽनुच्छेद एतादृशाद् दिनाङ्कात् प्रवर्तनाद्विरतः, अथवा एतादृशैरपवादै रूपभेदैश्च सह प्रवर्तितो भवेद्यथा हि स उल्लिखेत्—

परन्त्वेतादृशाधिसूचनाया राष्ट्रपतिना प्रकाशनात्पूर्वं द्वितीयखण्डे निर्दिष्टायास्तद्राज्यविधानसभायाः पुरःप्रशंसनमावश्यकं भवेत् ।

प्रथमसूच्याः (ख)-भागस्य राज्यानां विषयेऽस्थायिन उपबन्धाः ।

३७१. एतत्संविधानगतं सर्वमविगणय्य, एतस्य प्रारम्भाद् दशानां वर्षाणां कालावधेरभ्यन्तरे, अथवा कस्यापि एतादृशस्य द्राघीयसोऽल्पीयसो वा कालावधेरभ्यन्तरे यादृशं कस्यचिदपि राज्यस्य विषये संसद्विधिना उपबन्धितं कुर्यात्, प्रथमानुसूच्याः (ख)-भाग उल्लिखितस्य प्रत्येक-

राज्यस्य शासनं राष्ट्रपतेः साधारणनियन्त्रणस्याधीनं भवेत्, तथा एतादृशविशिष्टनिर्देशान्, ते चेद् भवन्ति, अनुसरेद् यादृशान् राष्ट्रपतिः काले काले दद्यात्—

परन्तु राष्ट्रपतिरादेशेन निर्देष्टुमर्हति यदेतदनुच्छेदस्योपबन्धास्तस्मिन्नादेश उल्लिखिते कस्मिंश्चिदपि राज्ये न प्रवर्तेरन् ।

वर्तमानविधीनां प्रवृत्तेरनुवर्तनं तेषामनुकूलनं च।

३७२. (१) ३९५-तमानुच्छेदे निर्दिष्टानामधिनियमनानामेतत्संविधानेन निरसनेऽपि किन्त्वेतत्संविधानस्यान्येषामुपबन्धानामधीनत्वे, एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं भारतराज्यक्षेत्रे प्रवृत्तः सर्वो विधिस्तस्मिन्प्रवृत्तत्वेन तावदनुवर्तेत यावत् क्षमेण विधानमण्डलेन अन्येन क्षमेण प्राधिकारिणा वा परिवर्तितो निरस्यः संशोधितो वा न भवति ।

(२) भारतराज्यक्षेत्रे कस्यापि प्रवृत्तस्य विधेरुपबन्धानेतस्य संविधानस्योपबन्धैः सह संवादयितुं राष्ट्रपतिरादेशेन एतादृशविधेरेतादृशान्यनुकूलनानि रूपभेदांश्च, निरसनेन संशोधनेन वा, कर्तुं क्षमते यादृशानि आवश्यकानि प्रसङ्गोचितानि वा भवेयुः, उपबन्धं च कर्तुं क्षमते यत्स विधिरेतादृशदिनाङ्कादारभ्य, यादृश आदेशे उल्लिखितो भवेत्, एवंकृतानामनुकूलनानां रूपभेदानां चाधीनत्व एव कार्यकरो भवेद् एतादृशे च कस्मिन्नप्यनुकूलने रूपभेदे वा केनापि न्यायालयेनापत्तिर्न क्रियेत ।

(३) द्वितीयखण्डे किमपि——

(क) राष्ट्रपतय एतत्संविधानस्य प्रारम्भाद् वर्षद्वयस्य समाप्तेरनन्तरं कस्यापि विधेः किमप्यनुकूलनं रूपभेदं वा कर्तुं शक्तिदातृ इति; अथवा

(ख) कस्यापि क्षमस्य विधानमण्डलस्य कस्याप्यन्यस्य क्षमस्य प्राधिकारिणो वा राष्ट्रपतिना उक्तखण्ड-

## भागः २१.— अस्थायिनस्तथा संक्रमणकालिका उपबन्धाः

### अनुच्छेदः ३७२

स्यानुरोधेनानुकूलितस्य रूपभेदमापादितस्य वा कस्यापि विधेर्निरसनात् संशोधनाद्वा वारयितृ इति न मन्येत ।

व्याख्या १.—अनुच्छेदेऽस्मिन् "प्रवृत्तविधिः" इति शब्दस्य कोऽपि विधिरन्तर्गतो भवेद् य एतस्य संविधानस्य प्रारम्भात्पूर्वं भारत-राज्यक्षेत्रे केनापि विधानमण्डलेन अन्येन क्षमेण प्राधिकारिणा वा पारितो निर्मितो वा अभूत् न च पूर्वमेव निरस्त आसीत्, यद्यपि स तस्य भागा वा तदा सर्वथा केषुचिद्विशिष्टक्षेत्रेषु वा प्रवृत्ता न भवेयुः ।

व्याख्या २.—भारतराज्यक्षेत्रस्य केनापि विधानमण्डलेन अन्येन वा क्षमेण प्राधिकारिणा पारितस्य निर्मितस्य वा कस्यापि विधेः, यस्यैतत्संवि-धानस्य प्रारम्भादव्यवहितपूर्वं राज्यक्षेत्रातीतः प्रभावस्तथा भारतराज्यक्षेत्रेऽपि प्रभाव आसीत्, एतादृशानामनुकूलनानां रूपभेदानां चाधीनत्वे यादृशानि पूर्वमुक्तानि राज्यक्षेत्रातीतः प्रभावोऽनुवर्तेत ।

व्याख्या ३.—एतदनुच्छेदे कस्याप्येवमर्थो न कर्तव्यो यत्तत् कमपि अस्थायित्वेन प्रवृत्तं विधिम्, तस्य समाप्त्यै नियताद् दिनाङ्कात्, अथवा तस्माद्दिनाङ्काद् यस्मिन् संविधानमेतद्यदि प्रवृत्तं नाभविष्यत्तर्हि स समाप्तोऽभविष्यत्, अनन्तरम् अनुवर्तयतीति ।

व्याख्या ४.—कस्यापि प्रान्तस्य राज्यपालेन १९३५-तमवत्सरीयस्य भारतशासनाधिनियमस्य ८८-तमविभागस्यानुरोधेन प्रख्यापित एतत्संविधा-नस्य च प्रारम्भादव्यवहितपूर्वं प्रवर्तितोऽध्यादेशः, यदि तत्स्थानीय-राज्यस्य राज्यपालेन पूर्वमेव प्रत्याहृतो न भवेत् तर्हि, एतादृशस्य प्रार-म्भस्य पश्चात् ३८२-तमानुच्छेदस्य प्रथमखण्डस्यानुरोधेन कृत्यकारिण्यास्त-द्राज्यस्य विधानसभायाः प्रथमाधिवेशनात् षण्णां सप्ताहानां समाप्तौ प्रवर्तनाद्विरमेत्, तथा एतदनुच्छेदे कस्याप्येवमर्थो न कर्तव्यो यत्तत् कमप्येतादृशमध्यादेशमुक्तकालावधेरनन्तरम् अनुवर्तयतीति ।

## भागः २१.— अस्थायिनस्तथा संक्रमणकालिका उपबन्धाः

### अनुच्छेदौ ३७३–३७४

निवारकनिरोधे स्थापितानां जनानां संबन्धेऽवस्थाविशेषेषु आदेशकरणे राष्ट्रपतेः शक्तिः ।

३७३. यावद् २२-तमानुच्छेदस्य सप्तमखण्डस्याधीनं संसदुपबन्धं न निर्मिमीते अथवा यावदेतस्य संविधानस्य प्रारम्भादनन्तरमेकस्य वर्षस्य समाप्तिर्न जायते, यदप्येनयोः पूर्वतरं भवति, तावदुक्तोऽनुच्छेदः, तस्य चतुर्थे सप्तमे च खण्डे संसदो निर्देशस्थाने राष्ट्रपतेर्निर्देशस्तथा तयोः खण्डयोः संसदा निर्मितस्य कस्यापि विधेर्निर्देशस्थाने राष्ट्रपतिना कृतस्य आदेशस्य निर्देशः क्रियत इवेति, कार्यकरो भवेत् ।

'फ़ेडरल'-न्यायालयस्य न्यायाधीशानां तथा फ़ेडरल-न्यायालये सपरिषदः सम्राजः समक्षं वा लम्बितानां कार्यप्रवृत्तीनां संबन्ध उपबन्धाः ।

३७४. (१) एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं 'फ़ेडरल'-न्यायालये पदस्था न्यायाधीशाः, यदि तैरन्यथा वरणं कृतं न भवेत्, एतादृशे प्रारम्भे उच्चतमन्यायालयस्य न्यायाधीशा भवेयुः, तथा तत्पश्चाद् एतादृशेषु वेतनेषु भक्तेषु च तथा अनुपस्थित्यनुमतेः निवृत्तिवेतनस्य च विषय एतादृशेष्वधिकारेष तेषां स्वत्वं भवेद् यादृशानि उच्चतमन्यायालयस्य न्यायाधीशानां संबन्धे १२५-तमानुच्छेदस्याधीनमुपबन्धितानि विद्यन्ते ।

(२) एतत्संविधानस्य प्रारम्भे 'फ़ेडरल'-न्यायालये लम्बिताः सर्वे व्यवहारवादाः, पुनर्विचारप्रार्थनाः, कार्यप्रवृत्तयश्च, व्यवहारसंबन्धिनो दण्डसंबन्धिनो वा, उच्चतमन्यायालयं नीतास्तिष्ठेयुः, तथा तेषां श्रवणस्य निर्धारणस्य च क्षेत्राधिकार उच्चतमन्यायालयस्य भवेत्, तथा 'फ़ेडरल'-न्यायालयेनैतत्संविधानस्य प्रारम्भात्पूर्वम् उदीरितानां कृतानां वा निर्णयानामादेशानां च बलं कार्यकरत्वं च उच्चतमन्यायालयेन ते उदीरिताः कृता वा इवेति भवेत् ।

(३) एतत्संविधाने किमपि भारतराज्यक्षेत्रे कस्यापि न्यायालयस्य कस्यापि निर्णयस्य आज्ञप्तेरादेशस्य वा, तद्विषये वा, पुनर्विचारप्रार्थनायां याचिकायां वा व्यवस्थां दातुं सपरिषत्कस्य सम्राजः क्षेत्राधिकारस्य प्रयोगं तावदमान्यं न कुर्याद् यावदेतादृशस्य क्षेत्राधिकारस्य प्रयोगो विधिना प्राधिकृतो वर्तते, तथैतादृश्यां पुनर्विचारप्रार्थनायां याचिकायां वा एतत्संविधानस्य प्रारम्भादनन्तरं कृतः सपरिषत्कस्य सम्राजः कोऽप्यादेशः सर्वेषां प्रयोजनानां कृते, स उच्चतमन्यायालयेन तस्य क्षेत्राधिकारस्य

प्रयोगे य एतादृशाय न्यायालयायैतत्संविधानेन कृतो विद्यते कृतः कोऽप्यादेशो विज्ञप्तिर्वा भवेदिवेति, कार्यकरो भवेत् ।

(४) एतस्य संविधानस्य प्रारम्भे प्रारम्भादनन्तरं च प्रथमानुसूच्याः (ख)-भाग उल्लिखिते कस्मिन्नपि राज्येऽन्तःपरिषदो रूपेण कृत्यकारिणः प्राधिकारिणस्तद्राज्ये कस्यापि न्यायालयस्य कस्यापि निर्णयस्य, आज्ञप्तेः, आदेशस्य वा पुनर्विचारप्रार्थनां याचिकां वा ग्रहीतुं तद्विषये व्यवस्थां दातुं वा क्षेत्राधिकारः समाप्तो भवेत् तथा एतादृशस्य प्राधिकारिणः पुरत एतादृशे प्रारम्भे लम्बिताः सर्वाः पुनर्विचारप्रार्थना अन्याश्च कार्यप्रवृत्तय उच्चतमन्यायालयं प्रति प्रेष्येरन् तेनैव च तद्विषये व्यवस्था दीयेत ।

(५) एतस्यानुच्छेदस्योपबन्धान् कार्यकरान् विधातुं संसद् विधिना अन्यमुपबन्धं निर्मातुं क्षमते ।

३७५. भारतस्य राज्यक्षेत्रे सर्वत्र व्यवहार-दण्ड-राजस्वक्षेत्राधिकारवन्तः सर्वे न्यायालयास्तथा सर्वे न्यायपालकाः कार्यपालकाः साचिविकाश्च प्राधिकारिणः पदाधिकारिणश्च एतत्संविधानस्योपबन्धानामधीनत्वे स्वस्वकृत्यानि कुर्वन्तोऽनुवर्तेरन् ।

संविधानस्योपबन्धानामधीनत्वे न्यायालयानां प्राधिकारिणां पदाधिकारिणां च कृत्यकरणेऽनुवर्तनम् ।

३७६. (१) २१७-तमानुच्छेदस्य द्वितीयखण्डे गतं सर्वमविगणय्य, एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं प्रान्ते उच्चन्यायालयस्य पदस्था न्यायाधीशाः, यदि तैरन्यथा वरणं न कृतं भवेत्, एतादृशे प्रारम्भे तत्स्थानिराज्यस्योच्चन्यायालयस्य न्यायाधीशा भवेयुः, तथा तदनन्तरम् एतादृशेषु वेतनेषु भक्तेषु च तथा अनुपस्थित्यनुमतेः निवृत्तिवेतनस्य च विषय एतादृशेष्वधिकारेषु तेषां स्वत्वं भवेद् यादृशानि उच्चन्यायालयस्य न्यायाधीशानां संबन्धे २२१-तमानुच्छेदस्यानुयोगेनोपबन्धितानि विद्यन्ते ।

उच्चन्यायालयीयन्यायाधीशानां विषय उपबन्धाः ।

## भागः २१.— अस्थायिनस्तथा संक्रमणकालिका उपबन्धाः

### अनुच्छेदाः ३७६–३७८

(२) एतस्य संविधानस्य प्रारम्भादव्यवहितपूर्वं प्रथमानुसूच्याः (ख)-भाग उल्लिखितस्य कस्यचिदपि राज्यस्य स्थानिनि कस्मिंश्चिदपि देशीयराज्ये उच्चन्यायालयस्य पदस्था न्यायाधीशाः, यदि तैरन्यथा वरणं न कृतं भवेत्, एतादृशे प्रारम्भे तादृशस्योल्लिखितस्य राज्यस्योच्चन्यायालयस्य न्यायाधीशा भवेयुस्तथा, २१७-तमानुच्छेदस्य प्रथमद्वितीयखण्डयोर्गतं सर्वमविगणय्य, किन्तु तस्यानुच्छेदस्य प्रथमखण्डस्य पारन्तुकस्याधीनत्वे एतादृशं कालावधिं यावत्पदस्था अनुवर्तेरन् यादृशं राष्ट्रपतिरादेशेन निर्धारयेत् ।

(३) अस्मिन्ननुच्छेदे " न्यायाधीशः " इति शब्दे कार्यकारी न्यायाधीशोऽपरन्यायाधीशो वा नान्तर्गतो भवति ।

भारतस्य नियन्त्रकमहालेखापरीक्षकस्य विषय उपबन्धाः ।

३७७. एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं पदस्थो भारतस्य महालेखापरीक्षकः, यदि तेनान्यथा वरणं न कृतं भवेत्, एतादृशे प्रारम्भे भारतस्य नियन्त्रकमहालेखापरीक्षको भवेत् तथा तदनन्तरम् एतादृशेषु वेतनेषु तथा अनुपस्थित्यनुमतेः निवृत्तिवेतनस्य च विषय एतादृशेष्वधिकारेषु तस्य स्वत्वं भवेद् यादृशानि भारतस्य नियन्त्रकमहालेखापरीक्षकस्य संबन्धे १४८-तमानुच्छेदस्य तृतीयखण्डस्याधीनमुपबन्धितानि विद्यन्ते, तथा स्वस्य तस्य पदावधेः, य एतादृशप्रारम्भादव्यवहितपूर्वं तस्य विषये प्रवर्तनीयानामुपबन्धानामधीनं निर्धारितो भवेत्, समाप्तिं यावत्, पदस्थत्वेनानुवर्तने तस्य स्वत्वं भवेत् ।

लोकसेवायोगानां विषय उपबन्धाः ।

३७८. (१) एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं भारताधिनिवेशस्य लोकसेवायोगस्य पदस्थाः सदस्याः, यदि तैरन्यथा वरणं न कृतं भवेत्, एतादृशे प्रारम्भे संघलोकसेवायोगस्य सदस्या भवेयुस्तथा, ३१६-तमानुच्छेदस्य प्रथमद्वितीयखण्डयोर्गतं सर्वमविगणय्य, किन्तु तस्यानुच्छेदस्य द्वितीयखण्डस्य पारन्तुकस्याधीनत्वे स्वस्य तस्य पदावधेः, य एतादृशप्रारम्भादव्यवहितपूर्वमेतादृशसदस्यानां विषये प्रवर्तनीयनियमानामनुरोधेन निर्धारितो भवेत्, समाप्तिं यावत् पदस्थत्वेनानुवर्तेरन् ।

(२) एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं कस्यापि प्रान्तस्य लोकसेवायोगस्य अथवा प्रान्तानां समूहस्यावश्यकतानां कृते सेवां कुर्वतः कस्यापि लोकसेवायोगस्य पदस्थाः सदस्याः, यदि तैरन्यथा वरणं न कृतं भवेत्, यथायथं तत्स्थानीयराज्यस्य लोकसेवायोगस्य सदस्याः अथवा तत्स्थानीयराज्यानामावश्यकतानां कृते सेवां कुर्वतः संयुक्तराज्यलोकसेवायोगस्य सदस्या भवेयुस्तथा, ३१६-तमानुच्छेदस्य प्रथमद्वितीयखण्डयोर्गतं सर्वमविगणय्य, किन्तु तस्यानुच्छेदस्य द्वितीयखण्डस्य पारन्तुकस्याधीनत्वे स्वस्य तस्य पदावधेः, य एतादृशप्रारम्भादव्यवहितपूर्वमेतादृशसदस्यानां विषये प्रवर्तनीयनियमानामनुरोधेन निर्धारितो भवेत्, समाप्तिं यावत् पदस्था अनुवर्तेरन् ।

३७९. (१) यावदेतस्य संविधानस्योपबन्धानामधीनं संसदः उभे अपि सदने सम्यग्रूपेण घटिते तथा प्रथमसत्रेऽधिवेशनायाहूते न भवतस्तावत्स निकायः, यो भारताधिनिवेशस्य संविधानसभाया रूपेण एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं कृत्यकारी आसीत्, संक्रमणकालिकी संसद् भवेत्तथा एतत्संविधानोपबन्धैः संसदे दत्तानां सर्वासां शक्तीनां प्रयोगं कर्तव्यानां च पालनं कुर्यात् । संक्रमणकालिक्याः संसदस्तथा तस्या अध्यक्षोपाध्यक्षयोः संबन्ध उपबन्धाः ।

व्याख्याः—एतत्खण्डस्य प्रयोजनार्थं भारताधिनिवेशस्य संविधानसभायाम्—

(१) कस्यचिदपि राज्यस्य अन्यराज्यक्षेत्रस्य वा, यस्य प्रतिनिधित्वार्थं द्वितीयखण्डस्याधीनमुपबन्धो विद्यते, प्रतिनिधित्वं कर्तुं निर्वाचिताः सदस्याः, तथा

(२) उक्तसभायामाकस्मिकरिक्ततायाः पूर्त्यै निर्वाचिताः सदस्याः,

अन्तर्गता भवन्ति ।

## भागः २१.— अस्थायिनस्तथा संक्रमणकालिका उपबन्धाः

### अनुच्छेदः ३७९

(२) राष्ट्रपतिर्नियमैः—

(क) प्रथमखण्डस्याधीनं कृत्यकारिण्यां संक्रमणकालिक्यां संसदि कस्यचिदपि राज्यस्य अन्यराज्यक्षेत्रस्य वा, यस्य प्रतिनिधित्वमेतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं भारताधिनिवेशस्य संविधानसभायां नासीत्, प्रतिनिधित्वार्थम्,

(ख) संक्रमणकालिक्यां संसदि एतादृशानां राज्यानामन्यराज्यक्षेत्राणां वा प्रतिनिधयो यया रीत्या निर्वाचिता भवेयुस्तदर्थम्,

(ग) एतादृशानां प्रतिनिधीनां या योग्यता अपेक्षणीयास्तदर्थम्,

उपबन्धं कर्तुं क्षमते ।

(३) यदि भारताधिनिवेशस्य संविधानसभायाः कश्चित्सदस्यः १९४९-तमवत्सरस्य अक्टूबरमासस्य षष्ठदिवसे तत्पश्चाद्वा एतत्संविधानस्य प्रारम्भात्पूर्वं कस्मिन्नपि काले कस्यापि राज्यपालप्रान्तस्य अथवा प्रथमानुसूच्याः (ख)-भाग उल्लिखितस्य कस्यचिदपि राज्यस्य स्थानिनः कस्यापि देशीयराज्यस्य विधानमण्डलीयसदनस्य सदस्य आसीत् अथवा कस्यचिदप्येतादृशस्य राज्यस्य मन्त्री आसीत् तर्हि एतत्संविधानस्य प्रारम्भात्संविधानसभायामेतादृशसदस्यस्य स्थानम्, यदि तस्य तत्सभायाः सदस्यत्वमतः पूर्वमेव समाप्तं न भवेत्, रिक्तं भवेत् तथा प्रत्येकमेतादृशी रिक्तता आकस्मिकी रिक्तता मन्येत ।

(४) सत्यप्येवं यद् भारताधिनिवेशस्य संविधानसभायां काप्येतादृशी रिक्तता, यादृशी तृतीयखण्डे वर्णितास्ति, तत्खण्डाधीनं न जाता विद्यते, एतत्संविधानस्य प्रारम्भात्पूर्वमेतादृशरिक्ततायाः पूर्त्यर्थमुपायः कर्तुं शक्यते किन्तु एतादृशप्रारम्भात् पूर्वं तस्या रिक्ततायाः पूर्त्यर्थं निर्वाचितस्य कस्यापि जनस्योक्तसभायां स्वस्थानग्रहणस्य स्वत्वं तावन्न भवेद् यावद्रिक्तता एवं न जायते ।

## भागः २१.— अस्थायिनस्तथा संक्रमणकालिका उपबन्धाः

### अनुच्छेदाः ३७९-३८२

(५) कोऽपि जनः, य एतस्य संविधानस्य प्रारम्भादव्यवहितपूर्वं १९३५-तमवत्सरीयस्य भारतशासनाधिनियमस्याधीनमधिनिवेशविधानमण्डलस्य रूपेण कृत्यकारिण्याः संविधानसभाया अध्यक्षस्य उपाध्यक्षस्य वा रूपेण पदस्थ आसीत्, स एतादृशे प्रारम्भे प्रथमखण्डस्याधीनं कृत्यकारिण्याः संक्रमणकालिक्याः संसदो यथायथमध्यक्ष उपाध्यक्षो वा भवेत् ।

३८०. (१) एतादृशो जनः, यस्तत्कृते भारताधिनिवेशस्य संविधानसभया निर्वाचितो भवेत्, भारतस्य तावद् (तावत्पर्यन्तं) राष्ट्रपतिर्भवेद् यावत् पञ्चमभागस्य प्रथमाध्यायेऽन्तर्निविष्टानामुपबन्धानामनुसारेण राष्ट्रपतिर्निर्वाचितो न जायते तथा स्वपदं न गृह्णाति । राष्ट्रपतेः संबन्ध उपबन्धः ।

(२) भारताधिनिवेशस्य संविधानसभया एवं निर्वाचितस्य राष्ट्रपतेः पदे, तस्य मृत्योः पदत्यागस्य अपसारणस्य वा हेतोरन्यथा वा, कस्यामपि रिक्ततायां जातायां तस्याः पूर्तिः ३७९-तमानुच्छेदाधीनं कृत्यकारिण्या संक्रमणकालिक्या संसदा तदर्थं निर्वाचितेन जनेन क्रियेत तथा यावदेतादृशो जनो न निर्वाचितो भवति तावद् भारतस्य मुख्यन्यायाधिपती राष्ट्रपतिरूपेण कार्यं कुर्यात् ।

३८१. एतादृशा जनाः, यांस्तत्कृते राष्ट्रपतिर्नियुञ्जीत, एतत्संविधानाधीनं राष्ट्रपतेर्मन्त्रिपरिषदः सदस्या भवेयुः, तथा यावन्नियुक्तय एवं न क्रियेरन् तावद् एतस्य संविधानस्य प्रारम्भादव्यवहितपूर्वं भारताधिनिवेशार्थं मन्त्रिरूपेण पदस्थाः सर्वे जना एतादृशप्रारम्भे एतत्संविधानाधीनं राष्ट्रपतेर्मन्त्रिपरिषदः सदस्या भवेयुस्तथा तद्रूपेण पदस्था अनुवर्तेरन् । राष्ट्रपतेर्मन्त्रिपरिषत् ।

३८२. (१) यावत् प्रथमानुसूच्याः (क)-भाग उल्लिखितस्य प्रत्येकराज्यस्य विधानमण्डलस्य सदनं सदने वा एतत्संविधानोपबन्धाधीनं सम्यग्रूपेण घटिते न भवतः प्रथमसत्रेऽधिवेशनार्थं चाहूते न भवतस्तावदेतस्य संविधानस्य प्रारम्भादव्यवहितपूर्वं तत्स्थानिप्रान्तस्य कृत्यकारिणो विधानमण्डलस्य सदनं सदने वा, एतत्संविधानस्योपबन्धैरेतादृशराज्य- प्रथमानुसूच्याः (क)-भागस्य राज्यानां संक्रमणकालिकानां विधानमण्डलानां विषय उपबन्धाः ।

## भागः २१.— अस्थायिनस्तथा संक्रमणकालिका उपबन्धाः

### अनुच्छेदाः ३८२–३८४

संबन्धिविधानमण्डलस्य सदनाय सदनाभ्यां वा दत्तानां सर्व्वासां शक्तीनां प्रयोगं तथा कर्तव्यानां पालनं कुर्यात् कुर्यातां वा ।

(२) प्रथमखण्डगतं सर्वमविगणय्य, यत्रैतत्संविधानस्य प्रारम्भात्पूर्वं कस्यापि प्रान्तस्य विधानसभायाः पुनर्घटनार्थं साधारणनिर्वाचनमादिष्टं वर्तते तत्रैतादृशप्रारम्भस्य पश्चान्निर्वाचनम्, एतत्संविधानं प्रवर्तने नायातमिवेति पूर्णतां नेतुं शक्येत तथैवं पुनर्घटिता सभा तस्य खण्डस्य प्रयोजनार्थं तस्य प्रान्तस्य विधानसभा मन्येत ।

(३) कोऽपि जनः, य एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं कस्यापि प्रान्तस्य विधानसभाया अध्यक्षस्योपाध्यक्षस्य वा अथवा विधानपरिषदः सभापतेरुपसभापतेर्वा रूपेण पदस्थ आसीत् सः, एतादृशप्रारम्भे प्रथमानुसूच्याः (क)-भाग उल्लिखितस्य तत्स्थानीयराज्यस्य विधानसभाया यथायथमध्यक्ष उपाध्यक्षो वा अथवा विधानपरिषदो यथायथं सभापतिरुपसभापतिर्वा भवेत्, यावत् सा सभा परिषद्वा प्रथमखण्डाधीनं कृत्यं करोति—

परन्तु यत्रैतत्संविधानस्य प्रारम्भात्पूर्वं कस्यापि प्रान्तस्य विधानसभायाः पुनर्घटनार्थं साधारणनिर्वाचनमादिष्टं वर्तते तथैतादृश्याः पुनर्घटितसभायाः प्रथमाधिवेशनमेतादृशप्रारम्भस्य पश्चाद् भवति तत्रैतत्खण्डस्योपबन्धा न प्रवर्तेरन् तथैवं पुनर्घटिता सभा सभाया द्वौ सदस्यौ क्रमशः स्वस्याध्यक्षत्वायोपाध्यक्षत्वाय च निर्वाचयेत् ।

प्रान्तानां राज्यपालानां विषय उपबन्धः ।

३८३. एतस्य संविधानस्य प्रारम्भादव्यवहितपूर्वं यो जनः कस्मिन्नपि प्रान्ते राज्यपालत्वेन पदस्थो विद्यते स एतादृशप्रारम्भे प्रथमानुसूच्याः (क)-भाग उल्लिखितस्य तत्स्थानीयराज्यस्य तावद्राज्यपालो भवेद् यावत् षष्ठभागस्य द्वितीयाध्यायस्योपबन्धानामनुसारेण नूतनो राज्यपालो न नियुक्तो जायते स्वपदं च न गृह्णाति ।

राज्यपालानां मन्त्रिपरिषत् ।

३८४. एतादृशा जनाः, यांस्तत्कृते कस्यापि राज्यस्य राज्यपालो नियुञ्जीत, एतत्संविधानाधीनं राज्यपालस्य मन्त्रिपरिषदः सदस्या भवेयुः,

तथा यावन्नियुक्तय एवं न क्रियेरन्, तावदेतस्य संविधानस्य प्रारम्भादव्यवहितपूर्वं तत्स्थानिप्रान्तार्थं मन्त्रिरूपेण पदस्थाः सर्वे जना एतादृशप्रारम्भे एतत्संविधानाधीनं तद्राज्यसंबन्धिराज्यपालस्य मन्त्रिपरिषदः सदस्या भवेयुस्तथा तद्रूपेण पदस्था अनुवर्तेरन् ।

३८५. यावत् प्रथमानुसूच्याः (ख)-भाग उल्लिखितस्य कस्यापि राज्यस्य विधानमण्डलस्य सदनं सदने वा एतत्संविधानोपबन्धाधीनं सम्यग्रूपेण घटिते न भवतस्तथा प्रथमसत्रेऽधिवेशनार्थमाहूते न भवतस्तावत्स निकायः प्राधिकारी वा, य एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं तत्स्थानिदेशीयराज्यस्य विधानमण्डलत्वेन कृत्यकारी आसीत्, तत्प्रकारेणोल्लिखितराज्यस्य विधानमण्डलस्य सदनाय सदनाभ्यां वा एतत्संविधानोपबन्धैर्दत्तानां शक्तीनां प्रयोगं कर्तव्यानां च पालनं कुर्यात् । प्रथमानुसूच्याः ( ख )-भागस्य राज्यानां संक्रमणकालिकानां विधानमण्डलानां विषय उपबन्धः ।

३८६. एतादृशा जनाः, यांस्तत्कृते प्रथमानुसूच्याः (ख)-भाग उल्लिखितराज्यस्य राजप्रमुखो नियुञ्जीत, एतत्संविधानाधीनमेतादृशराजप्रमुखस्य मन्त्रिपरिषदः सदस्या भवेयुः, तथा यावदेवं नियुक्तयो न क्रियेरन्, तावदेतस्य संविधानस्य प्रारम्भादव्यवहितपूर्वं तत्स्थानिदेशीयराज्याथ मन्त्रिरूपेण पदस्थाः सर्वे जना एतादृशप्रारम्भे एतत्संविधानाधीनमेतादृशराजप्रमुखस्य मन्त्रिपरिषदः सदस्या भवेयुस्तथा तद्रूपेण पदस्था अनुवर्तेरन् । प्रथमानुसूच्याः ( ख )-भागस्य राज्यानां मन्त्रिपरिषद् ।

३८७. एतस्य संविधानस्य प्रारम्भाद्वर्षत्रयस्य कालावधौ एतत्संविधानोपबन्धेषु कस्याप्यधीनं कृतानां निर्वाचनानां प्रयोजनार्थं भारतस्य कस्यापि तद्भागस्य वा जनसंख्याया निर्धारणम्, एतत्संविधानगतं सर्वमविगणय्य, एतादृश्या रीत्या क्रियेत यथा राष्ट्रपतिरादेशेन निदिशेत्, तथा एतादृशादेशेन च विभिन्नराज्यानां विभिन्नप्रयोजनानां च कृते विभिन्ना उपबन्धा निर्मातुं शक्यन्ते । केषांचिन्निर्वाचनानां प्रयोजनार्थं जनसंख्याया निर्धारणस्य विषये विशेष उपबन्धः ।

## भागः २१.-- अस्थायिनस्तथा संक्रमणकालिका उपबन्धाः

### अनुच्छेदः ३८८

संक्रमणकालिक्यां संसदि राज्यानां संक्रमणकालिकेषु विधानमण्डलेषु च आकस्मिकरिक्ततानां **पूर्तिविषय** उपबन्धाः।

३८८. (१) ३७९-तमानुच्छेदस्य प्रथमखण्डानुरोधेन कृत्स्नकारिण्याः संक्रमणकालिक्याः संसदः सदस्यानां स्थानेषु आकस्मिकरिक्ततानाम्, तदनुच्छेदस्य तृतीयचतुर्थखण्डयोर्निर्दिष्टाभी रिक्तताभिः सहितानाम्, पूर्तिः, तथा एतादृशीनां रिक्ततानां पूर्त्या संबद्धानां सर्वेषां विषयाणां, एतादृशीनां रिक्ततानां पूर्त्यै निर्वाचनेभ्य उद्भूतानां तैः संबद्धानां वा शङ्कानां विवादानां च विनिश्चयेन सहितानाम्, विनियमनम्—

(क) एतादृशानां नियमानामनुसारेण यादृशा राष्ट्रपतिना तत्कृते निर्मीयेरन्, तथा

(ख) यावदेवं नियमा न निर्मीयन्ते तावद् यथायथं भारताधिनिवेशस्य संविधानसभाया आकस्मिकरिक्ततानां पूर्तिकाले अथवा एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं प्रवृत्तानाम्, तथा एतादृशरिक्ततानां पूर्त्या तथा तत्संसक्तविषयैश्च संबद्धानां नियमानाम्—एतादृशप्रारम्भात्पूर्वं तत्सभायाः सभापतिः तत्पश्चाच्च राष्ट्रपतिस्तेषु यानपवादान् रूपभेदांश्च कुर्यात्तदधीनत्वेन—अनुसारेण

भवेत्—

परन्तु यत्रैतादृशं किमपि स्थानं यादृशमस्मिन् खण्डे वर्णितमस्ति रिक्तीभावादव्यवहितपूर्वमेतादृशेन जनेन धारितमासीद् योऽनुसूचितजातिभिरथवा सिक्खमुसलिमसमाजयोरन्यतरेण संबद्धः तथा यथायथं कस्यापि प्रान्तस्य अथवा प्रथमानुसूच्याः (क)-भाग उल्लिखितस्य कस्यापि राज्यस्य प्रतिनिधित्वरूपेणावर्तत तत्र, यदि यथायथं संविधानसभायाः सभापतिर्भारतस्य राष्ट्रपतिर्वा अन्यथोपबन्धनमावश्यकं वाञ्छनीयं वा न मन्यते तर्हि, एतादृशस्थानस्य पूर्तिकरो जनस्तस्यैव समाजस्य भवेत्—

परन्तु अन्यदपि, कस्यापि प्रान्तस्य प्रथमानुसूच्याः (क)-भाग उल्लिखितस्य कस्यापि राज्यस्य वा प्रतिनिधित्वं कुर्वतो जनस्य

**भागः २१.— अस्थायिनस्तथा संक्रमणकालिका उपबन्धाः**

**अनुच्छेदः ३८८**

स्थाने कस्या अप्येतादृश्या रिक्ततायाः पूर्त्यर्थं निर्वाचने यथायथं तस्य प्रान्तस्य तत्स्थानीयराज्यस्य वा तद्राज्यस्य वा विधानसभायाः प्रत्येकं सदस्यो भागग्रहणे मतदाने च स्वत्ववान् भवेत् ।

व्याख्या.—एतत्खण्डस्य प्रयोजनार्थम्—

(क) सर्वा एतादृश्यो जातयो मूलवंशा जनजातयो वा अथवा जातीनां मूलवंशानां जनजातीनां वा भागा अथवा तन्मध्ये उपवर्गाः, ये "भारतशासनादेशः (अनुसूचितजातयः) १९३६" इत्यस्मिन् कस्यापि प्रान्तस्य संबन्धेऽनुसूचितजातिरूपेणोल्लिखिता विद्यन्ते, तावत्तस्य प्रान्तस्य अथवा तत्स्थानीयराज्यस्य संबन्धेऽनुसूचितजातित्वेन मन्येरन् यावत्तस्य तत्स्थानीयराज्यस्य ३४१-तमानुच्छेदस्य प्रथमखण्डानुरोधेनानुसूचितजातीरुल्लिखन्ती अधिसूचना राष्ट्रपतिना प्रकाशिता न भवति;

(ख) कस्यचिदपि प्रान्तस्य राज्यस्य वा सर्वा अनुसूचितजातय एक एव समाज इति मन्येरन् ।

(२) ३८२-तमानुच्छेदस्य ३८५-तमानुच्छेदस्य वा अनुरोधेन कृत्यकारिणः कस्यापि राज्यस्य विधानमण्डलस्य सदने सदस्यानां स्थानेष्वाकस्मिकरिक्ततानां पूर्तेस्तथा एतादृशरिक्ततानां पूर्त्या संसक्तानां सर्वेषां विषयाणां ( एतादृशरिक्ततानां पूर्त्यर्थेभ्यो निर्वाचनेभ्य उद्भूतानां तैः संसक्तानां वा शङ्कानां विवादानां च विनिश्चयेन सहितानाम् ) विनियमनम्, एतादृशरिक्ततानां पूर्तेः शासितॄणां तथा एतादृशविषयाणां विनियामकानामेतादृशानामुपबन्धानामनुसारेण, यादृशा एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं प्रवृत्ता आसन्, एतादृशानामपवादानां रूपभेदानां चाधीनत्वे यादृशान् राष्ट्रपतिरादेशेन निदिशेत्, भवेत् ।

## भागः २१.— अस्थायिनस्तथा संक्रमणकालिका उपबन्धाः

### अनुच्छेदाः ३८९–३९१

अधिनिवेश-विधानमण्डले तथा प्रान्तानां देशीयराज्यानां च विधानमण्डलेषु लम्बितानां विधेयकानां विषय उपबन्धः।

३८९. किमपि विधेयकम्, यदेतस्य संविधानस्य प्रारम्भाद्व्यवहितपूर्वमधिनिवेशस्य विधानमण्डले अथवा कस्यचिदपि प्रान्तस्य देशीयराज्यस्य वा विधानमण्डले लम्बितमासीत्, कस्याप्येतादृशस्य प्रतिकूलोपबन्धस्याधीनत्वे यो यथायथं संसदा अथवा तत्स्थानीयराज्यस्य विधानमण्डलेन एतत्संविधानाधीनं निर्मितनियमानामन्तर्गतो भवेत्, यथायथं संसदि अथवा तत्स्थानीयराज्यस्य विधानमण्डले एवं मत्वा अनुवर्तनमर्हति, तथा नु भारताधिनिवेशस्य विधानमण्डले अथवा तस्य प्रान्तस्य देशीयराज्यस्य वा विधानमण्डले तद्विधेयकविषये कृताः कार्यप्रवृत्तयः संसदि अथवा तत्स्थानीयराज्यस्य विधानमण्डले कृता आसन्।

एतत्संविधानस्य प्रारम्भस्य १९५०-तमवत्सरीयमार्चमासस्य ३१-तमदिनस्य च मध्ये प्राप्तानि उत्थापितानि व्ययितानि वा धनानि।

३९०. भारतस्य संचितनिधिना अथवा कस्यचिदपि राज्यस्य संचितनिधिना तथा एनयोर्निध्योः कतरस्मादपि धनानां विनियोगेन संबद्धा एतत्संविधानस्योपबन्धा एतत्संविधानस्य प्रारम्भदिवसस्य तथा १९५०-तमवत्सरीयमार्चमासस्य ३१-तमदिवसस्य च मध्ये, तौ दिवसावन्तर्भाव्य, भारतशासनेन कस्यचिदपि राज्यस्य शासनेन वा प्राप्तानामुत्थापितानां धनानां कृतस्य व्ययस्य वा संबन्धे न प्रवर्तेरन्, तथा यदि तस्मिन् कालावधौ कृतः कोऽपि व्ययो भारताधिनिवेशस्य गवर्नरजनरल इत्याख्येन अथवा तत्स्थानिप्रान्तस्य राज्यपालेन १९३५-तमवत्सरीयस्य भारतशासनाधिनियमस्योपबन्धानामनुसारेण प्रमाणीकृतायां प्राधिकृतव्ययस्य कस्यामपि अनुसूच्यामुल्लिखित आसीत्, अथवा राज्यस्य राजप्रमुखेन एतादृशनियमानामनुसारेण, ये एतादृशप्रारम्भाद्व्यवहितपूर्वं तत्स्थानिदेशीयराज्यस्य राज्यखेभ्यो व्ययस्य प्राधिकृतीकरणाय प्रवृत्ता आसन्, प्राधिकृतः क्रियते, तर्हि स व्ययः सम्यग्-रूपेण प्राधिकृतो मन्येत।

कासुचिदाकस्मिकतासु प्रथमचतुर्थ्यनुसूच्योः संशोधनस्य राष्ट्रपतेः शक्तिः।

३९१. (१) यद्येतत्संविधानस्य पारणप्रारम्भयोर्मध्ये कस्मिन्नपि काले १९३५-तमवत्सरीयस्य भारतशासनाधिनियमस्योपबन्धानामधीनं कापि क्रिया विधीयते यस्याः कृते राष्ट्रपतेर्मतौ प्रथमचतुर्थ्यनुसूच्योः किमपि संशोधनमपेक्ष्यते, तर्हि राष्ट्रपतिः, एतत्संविधानगतं सर्वमविगणय्य, आदेशेनोक्तानुसूच्योरेतादृशानि संशोधनानि कर्तुमर्हति यादृशानि एवं

## भागः २१.— अस्थायिनस्तथा संक्रमणकालिका उपबन्धाः

### अनुच्छेदौ ३९१–३९२

विहितां क्रियां कार्यक्षमां कर्तुम् आवश्यकानि भवेयुः तथैतादृशे कस्मिन्नप्यादेशे एतादृशा अनुपूरकाः प्रासङ्गिका आनुषङ्गिकाश्चोपबन्धा अन्तर्निविष्टा भवितुमर्हन्ति यादृशान् राष्ट्रपतिरावश्यकान् मन्येत ।

(२) यदा प्रथमानुसूची चतुर्थानुसूची वा एवं संशोध्यते तदा संविधानेऽस्मिन् तस्या अनुसूच्याः कोऽपि निर्देश एवं संशोधितायास्तस्या अनुसूच्या निर्देश इत्यर्थः क्रियेत ।

३९२. (१) राष्ट्रपतिः केषामप्यसौकर्याणाम्, विशेषतः १९३५-तमवत्सरीयस्य भारतशासनाधिनियमस्योपबन्धेभ्य एतत्संविधानोपबन्धेषु संक्रमणसंबन्धे, अपसारणस्य प्रयोजनाय आदेशेन निदेष्टुमर्हति यदेतत्संविधानं तस्मिन्नादेश उल्लिखितकालावधौ एतादृशानामनुकूलनानामधीनत्वेन, भवन्तु नाम तानि रूपभेदस्य संयोजनस्य लोपस्य वा रूपेण, यादृशानि स आवश्यकानि प्रसङ्गोचितानि वा मन्येत, कार्यकरं भवेत्— असौकर्याणाम् अपसारणार्थं राष्ट्रपतेः शक्तिः ।

परन्तु पञ्चमभागस्य द्वितीयाध्यायानुरोधेन सम्यग्रूपेण घटितायाः संसदः प्रथमाधिवेशनस्य पश्चादेतादृशः कोऽप्यादेशो न क्रियेत ।

(२) प्रथमखण्डानुरोधेन कृतः प्रत्येक आदेशः संसदः पुरतः स्थाप्येत ।

(३) एतेनानुच्छेदेन, ३२४-तमानुच्छेदेन, ३६७-तमानुच्छेदस्य तृतीयखण्डेन, ३९१-तमानुच्छेदेन च राष्ट्रपतये प्रदत्ताः शक्तय एतत्संविधानस्य प्रारम्भात् पूर्वं भारताधिनिवेशस्य गवर्नरजनरलइत्याख्येन प्रयोक्तव्या भवेयुः ।

# भागः २२

## संक्षिप्तं नाम, प्रारम्भो निरसनानि च

संक्षिप्तं नाम। ३९३. संविधानमेतद् 'भारतस्य संविधानम्' इत्याख्यां लभेत।

प्रारम्भः। ३९४. एषोऽनुच्छेदस्तथानुच्छेदाः ५, ६, ७, ८, ९, ६०, ३२४, ३६६, ३६७, ३७९, ३८०, ३८८, ३९१, ३९२, एवं ३९३ तत्कालं प्रवृत्ता भवेयुः, तथा एतत्संविधानस्यावशिष्टा उपबन्धाः १९५०-तमवत्सरीयजनवरीमासस्य २१-तमदिवसे प्रवृत्ता भवेयुः, यश्च दिवसोऽस्मिन् संविधाने एतत्संविधानस्य प्रारम्भरूपेण निर्दिश्यते।

निरसनानि ३९५. १९४७-तमवत्सरीयो भारतस्वाधीनताधिनियमः, १९४९-तमवत्सरीयं 'प्रिवीकौन्सिल'-क्षेत्राधिकारविलोपनाधिनियमं वर्जयित्वा स्वस्य संशोधकैरनुपूरकैर्वा सर्वैरधिनियमनैः सह १९३५-तमवत्सरीयो भारतशासनाधिनियमश्च एतेन निरस्येते।

# प्रथमा अनुसूची

( अनुच्छेदाः १, ४ तथा ३९१ )

## भारतस्य राज्यानि राज्यक्षेत्राणि च

### (क)-भागः

| राज्यानां नामानि | | तत्स्थानिप्रान्तानां नामानि | |
|---|---|---|---|
| १. आसाम [ राज्यम् ] | | आसाम | [ प्रान्तः ] |
| २. उरिस्सा | ,, | उरिस्सा | ,, |
| ३. पंजाब | ,, | पूर्वपंजाब | ,, |
| ४. पश्चिमबंगाल | ,, | पश्चिमबंगाल | ,, |
| ५. बिहार | ,, | बिहार | ,, |
| ६. मद्रास | ,, | मद्रास | ,, |
| ७ मध्यप्रदेश | ,, | मध्यप्रान्तो बरारश्च | |
| ८. मुम्बई | ,, | बम्बई | [ प्रान्तः ] |
| ९. युक्तप्रदेश | ,, | युक्तप्रान्तः | |

## राज्यानां राज्यक्षेत्राणि

आसामराज्यस्य राज्यक्षेत्रे तानि राज्यक्षेत्राणि समाविष्टानि भवेयुर्यानि एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वमासामप्रान्ते खासीराज्येषु आसामजनजातिक्षेत्रेषु च समाविष्टान्यासन् ।

पश्चिमबङ्गालराज्यस्य राज्यक्षेत्रे तद्राज्यक्षेत्रं समाविष्टं भवेद्यदेतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं पश्चिमबङ्गालप्रान्ते समाविष्टमासीत् ।

भागेऽस्मिन्नन्यराज्येषु प्रत्येकं राज्यक्षेत्रे तानि राज्यक्षेत्राणि समाविष्टानि भवेयुर्यानि एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं तत्स्थानिप्रान्ते तथा तेषु राज्यक्षेत्रेषु समाविष्टान्यासन् यानि १९३५-तमवत्सरीयस्य भारतशासनाधिनियमस्य २९० (क)-तमविभागस्य अधीनं कृतस्यादेशस्याधारेण एतादृशप्रारम्भादव्यवहितपूर्वं तानि तस्य प्रान्तस्य भागा इवेति प्रशासितान्यासन् ।

## प्रथमा अनुसूची

## ( ख )- भागः

## राज्यानां नामानि

१. जम्मू—काश्मीर [ राज्यम् ]
२. तिरुवांकुर-कोचीन ,,
३. पटियाला-पूर्वपंजाबराज्यसंघ [ राज्यम् ]
४. मध्यभारत [ राज्यम् ]
५. मैसूर ,,
६. राजस्थान ,,
७. विन्ध्यप्रदेश ,,
८. सौराष्ट्र ,,
९. हैदराबाद ,,

## राज्यानां राज्यक्षेत्राणि

भागेऽस्मिन् राज्येषु प्रत्येकं राज्यक्षेत्रे तद् राज्यक्षेत्रं समाविष्टं भवेद् यद् एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं तत्स्थानिदेशीयराज्ये समाविष्टमासीत्, तथा—

(क) राजस्थानसौराष्ट्रराज्ययोः प्रत्येकराज्यस्य विषये, तानि राज्यक्षेत्राण्यपि समाविष्टानि भवेयुर्यानि तत्स्थानिदेशीयराज्यशासनेन १९४७-तमवत्सरीयस्य प्रान्तातीतक्षेत्राधिकाराधिनियमस्योपबन्धानामधीनमन्यथा वा एतादृशप्रारम्भादव्यवहितपूर्वं प्रशासितान्यासन्; तथा

(ख) मध्यभारतराज्यस्य विषये, तद्राज्यक्षेत्रमपि समाविष्टं भवेद्यदेतादृशप्रारम्भादव्यवहितपूर्वं पन्थपिपलोदा–इत्याख्ये मुख्यायुक्तप्रान्ते समाविष्टमासीत्।

प्रथमा अनुसूची

## ( ग )- भागः

## राज्यानां नामानि

१. अजमेर [ राज्यम् ]
२. कच्छ ,,
३. कूचबिहार ,,
४. कोडगु ,,
५. त्रिपुरा ,,
६. दिल्ली ,,
७. बिलासपुर ,,
८. भोपाल ,,
९. मणिपुर ,,
१०. हिमाचलप्रदेश [ राज्यम् ]

## राज्यानां राज्यक्षेत्राणि

अजमेर–कोडगु–दिल्लीराज्येषु प्रत्येकं राज्यक्षेत्रे तद्राज्यक्षेत्रं समाविष्टं भवेद् यदेतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं क्रमशः अजमेर–मेरवाडा–कोडगु–दिल्ली इत्येतेषु मुख्यायुक्तप्रान्तेषु समाविष्टमासीत् ।

भागेऽस्मिन्नन्यराज्येषु प्रत्येकं राज्यक्षेत्रे तानि राज्यक्षेत्राणि समाविष्टानि भवेयुर्यानि १९३५-तमवत्सरीयस्य भारतशासनाधिनियमस्य २९० (क)-तमविभागाधीनं कृतस्यादेशस्याधारेण एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं तानि तन्नामका मुख्यायुक्तप्रान्ता आसन्निवेति प्रशासितान्यासन् ।

## ( घ )- भागः

अन्दमान–निकोबारद्वीपौ ।

# द्वितीया अनुसूची

[ अनुच्छेदाः ५९ (३), ६५ (३), ७५ (६), ९७, १२५, १४८ (३), १५८ (३), १६४ (५), १८६ तथा २२१ ]

## (क)-भागः

## राष्ट्रपतेस्तथा प्रथमानुसूच्याः ( क )-भाग उल्लिखितराज्यानां राज्यपालानां कृत उपबन्धाः ।

१. राष्ट्रपतये तथा प्रथमानुसूच्याः (क)-भाग उल्लिखितराज्यानां राज्यपालेभ्यो निम्नलिखिता उपलब्धयः प्रतिमासं प्रदीयेरन्, अर्थात्—

| | | | | | |
|---|---|---|---|---|---|
| राष्ट्रपतिः | .... | ... | .... | .... | १०००० रूप्यकाणि |
| राज्यस्य राज्यपालः | | .... | .... | .... | ५५०० रूप्यकाणि |

२. राष्ट्रपतये तथा एवमुल्लिखितराज्यानां राज्यपालेभ्य एतादृशानि भक्तान्यपि प्रदीयेरन् यादृशानि क्रमशो भारताधिनिवेशस्य गवर्नरजनरल इत्याख्याय तथा तत्स्थानिप्रान्तानां गवर्नर इत्याख्येभ्य एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं प्रदेयान्यासन् ।

३. राष्ट्रपतेस्तथा एतादृशराज्यसंबन्धिराज्यपालानां स्वस्वपदावधौ निरन्तरम् एतादृशविशेषाधिकारेषु स्वत्वं भवेद् यादृशेषु एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं क्रमशो गवर्नरजनरल इत्याख्यस्य तथा तत्स्थानिप्रान्तानां गवर्नर इत्याख्यानामासीत् ।

४. यदोपराष्ट्रपतिरन्यो वा कश्चिज्जनो राष्ट्रपतेः कृत्यानि निर्वहति तद्रूपेण वा कार्यं करोति, अथवा कश्चिज्जनो राज्यपालस्य कृत्यानि निर्वहति, तदा तस्य तादृशेष्वेव उपलब्धिषु भक्तेषु विशेषाधिकारेषु च स्वत्वं भवेद् यादृशेषु यथायथं राष्ट्रपते राज्यपालस्य वा वर्तते यस्य कृत्यानि स निर्वहति यद्रूपेण वा स कार्यं करोति ।

## द्वितीया अनुसूची

### ( ख )-भागः

### संघस्य प्रथमानुसूच्याः (क)-(ख)-भागयो राज्यानां च मन्त्रिणां संबन्ध उपबन्धाः

५. संघस्य प्रधानमन्त्रिणे तथान्यमन्त्रिभ्यः प्रत्येकमेतादृशानि वेतनानि भक्तानि च प्रदीयेरन् यादृशानि क्रमशो भारताधिनिवेशस्य प्रधानमन्त्रिणे तथान्यमन्त्रिभ्यः प्रत्येकमेतस्य संविधानस्य प्रारम्भादव्यवहितपूर्वं प्रदेयान्यासन् ।

६. प्रथमानुसूच्याः (क)-भागे (ख)-भागे वा उल्लिखितस्य कस्यचिदपि राज्यस्य मन्त्रिभ्य एतादृशानि वेतनानि भक्तानि च प्रदीयेरन् यादृशानि यथायथं तत्स्थानिप्रान्तस्य तत्स्थानिदेशीयराज्यस्य वा एतादृशमन्त्रिभ्य एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं प्रदेयान्यासन् ।

### ( ग )-भागः

### लोकसभाया अध्यक्षस्योपाध्यक्षस्य च तथा राज्यपरिषदः सभापतेरुपसभापतेश्च तथा प्रथमानुसूच्याः (क)-भागीयराज्यस्य विधानसभाया अध्यक्षस्योपाध्यक्षस्य च तथा एतादृशस्य कस्यापि राज्यस्य विधानपरिषदः सभापतेरुपसभापतेश्च संबन्ध उपबन्धाः ।

७. लोकसभाया अध्यक्षाय राज्यपरिषदश्च सभापतये एतादृशानि वेतने भक्तानि च प्रदीयेरन् यादृशानि भारताधिनिवेशस्य संविधानसभाया अध्यक्षाय एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं प्रदेयान्यासन् तथा लोकसभाया उपाध्यक्षाय राज्यपरिषदश्चोपसभापतये एतादृशानि वेतने भक्तानि च प्रदीयेरन् यादृशानि भारताधिनिवेशस्य संविधानसभाया उपाध्यक्षाय एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं प्रदेयान्यासन् ।

८. प्रथमानुसूच्याः (क)-भाग उल्लिखितराज्यस्य विधानसभाया अध्यक्षायोपाध्यक्षाय च तथैतादृशराज्यस्य विधानपरिषदः सभापतय उपसभापतये च एतादृशानि वेतनानि भक्तानि च प्रदीयेरन् यादृशानि क्रमशस्तत्स्थानिप्रान्तस्य विधानसभाया अध्यक्षायोपाध्यक्षाय च तथा विधानपरिषदः सभापतय उपसभापतये च एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं प्रदेयान्यासन्, यत्र च तत्स्थानिप्रान्ते एतादृशप्रारम्भादव्यवहितपूर्वं कापि विधानपरिषन्नासीत्तत्र तस्य राज्यस्य विधानपरिषदः सभापतय उपसभापतये च एतादृशानि वेतने भक्तानि च प्रदीयेरन् यादृशानि तद्राज्यस्य राज्यपालो निर्धारयेत् ।

## द्वितीया अनुसूची

### (घ)-भागः

### उच्चतमन्यायालयस्य तथा प्रथमानुसूच्याः (क)-भागस्य राज्यानामुच्चन्यायालयानां न्यायाधीशानां संबन्ध उपबन्धाः ।

९. (१) उच्चतमन्यायालयस्य न्यायाधीशेभ्यो वास्तविकसेवायां यापितस्य कालस्य विषये निम्नलिखितमानेन प्रतिमासं वेतनं प्रदीयेत, अर्थात्—

मुख्यन्यायाधिपतिः ... ... ... ... ... ५००० रूप्यकाणि

कोऽप्यन्यो न्यायाधीशः.... ... ... .... .... ४००० रूप्यकाणि

परन्तु यदि उच्चतमन्यायालयस्य न्यायाधीशेन स्वनियुक्तिकाले भारतशासनस्य तत्पूर्ववर्तिशासनेषु कस्यापि वा, अथवा राज्यशासनस्य तत्पूर्ववर्तिशासनेषु कस्यापि वा पूर्वं कृतायाः सेवायाः संबन्धे ( निर्योग्यता-मूलकमथवा क्षत-मूलकं निवृत्तिवेतनं विहाय ) किमपि निवृत्तिवेतनं प्राप्यते तर्हि उच्चतमन्यायालयीयसेवाविषयकात् तस्य वेतनाद् निवृत्ति-वेतनस्य राशिर्न्यूनीक्रियेत ।

(२) उच्चतमन्यायालयस्य प्रत्येकन्यायाधीशो भाटकं विनैव पदावासस्योपयोगे स्वत्ववान् भवेत् ।

(३) एतत्कण्डिकाया द्वितीयोपकण्डिकायां किमपि न प्रवर्तेत तस्य न्यायाधीशस्य विषये, य एतस्य संविधानस्य प्रारम्भादव्यवहितपूर्वम्—

(क) 'फ़ेडरल'न्यायालयस्य मुख्यन्यायाधिपतिरूपेण पदं धारयमाण आसीत्, तथा य एतादृशप्रारम्भे ३७४-तमानुच्छेदस्य प्रथमखण्डाधीनमुच्चतमन्यायालयस्य मुख्यन्यायाधिपतिः संजातो वर्तते, अथवा

(ख) 'फ़ेडरल'न्यायालयस्य कस्यापीतरस्य न्यायाधीशस्य रूपेण पदं धारयमाण आसीत्, तथा एतादृशप्रारम्भे उक्तखण्डाधीनमुच्चतमन्यायालयस्य ( मुख्यन्यायाधिपतेरन्यः ) न्यायाधीशः संजातो वर्तते,

उक्तकालावधौ, यस्मिन्स एतादृशमुख्यन्यायाधिपतेरन्यस्य वा न्यायाधीशस्य रूपेण पदधारणं करोति, किञ्च प्रत्येकन्यायाधीशः, य एवमुच्चतमन्यायालयस्य मुख्यन्यायाधिपति-

## द्वितीया अनुसूची

रन्यो वा न्यायाधीशः संजायते, यथायथमेतादृशस्य मुख्यन्यायाधिपतेरन्यस्य वा न्यायाधीशस्य रूपेण, वास्तविकसेवायां यापितकालस्य संबन्धे एतत्कण्डिकायाः प्रथमोपकण्डिकायामुल्लिखितवेतनादतिरिक्तं विशेषवेतनस्य रूपेण एतादृशस्य राशेः प्राप्तौ स्वत्ववान् भवेद् य एवमुल्लिखितवेतनस्य तथा एतादृशप्रारम्भादव्यवहितपूर्वं तेन प्राप्यमाणवेतनस्य चान्तरेण समो भवति ।

(४) उच्चतमन्यायालयस्य प्रत्येकं न्यायाधीशो भारतराज्यक्षेत्रस्याभ्यन्तरे स्वकर्तव्यपालने कृतायां यात्रायां कृतव्ययानां पूर्त्यै एतादृशानि युक्तियुक्तानि भक्तानि प्राप्नुयात् तथा यात्रासंबन्धीनि एतादृशानि सौकर्याणि तस्मै प्रदीयेरन् यादृशानि राष्ट्रपतिः काले काले विदध्यात् ।

(५) उच्चतमन्यायालयस्य न्यायाधीशानामनुपस्थित्यनुमतेः (अनुपस्थित्यनुमतिभक्तैः सह ) तथा निवृत्तिवेतनस्य विषयेऽधिकारास्तैरुपबन्धैः शासिता भवेयुर्य एतस्य संविधानस्य प्रारम्भादव्यवहितपूर्वं ' फ़ेडरल'न्यायालयस्य न्यायाधीशेषु प्रवृत्ता आसन् ।

१०. (१) प्रथमानुसूच्याः (क)-भाग उल्लिखितस्य प्रत्येकराज्यस्योच्चन्यायालयस्य न्यायाधीशेभ्यो वास्तविकसेवायां यापितकालस्य विषये निम्नलिखितमानेन प्रतिमासं वेतनं प्रदीयेत, अर्थात्—

मुख्यन्यायाधिपतिः .... ... ... ... .... ४००० रूप्यकाणि

कोऽप्यन्यो न्यायाधीशः... ... .... ... — ३५०० रूप्यकाणि

(२) यः कोऽपि जन एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वम्—

(क) कस्मिन्नपि प्रान्ते उच्चन्यायालयस्य मुख्यन्यायाधिपते रूपेण पदं धारयमाण आसीत् तथा एतादृशप्रारम्भे ३७६-तमानुच्छेदस्य प्रथमखण्डाधीनं तत्स्थानीयराज्यस्योच्चन्यायालयस्य मुख्यन्यायाधिपतिः संजातो वर्तते, अथवा

(ख) कस्मिन्नपि प्रान्त उच्चन्यायालयस्य कस्यापीतरस्य न्यायाधीशस्य रूपेण पदं धारयमाण आसीत् तथा एतादृशप्रारम्भ उक्तखण्डाधीनं तत्स्थानीयराज्यस्य उच्चन्यायालयस्य (मुख्यन्यायाधिपतेरन्यः) कोऽपि न्यायाधीशः संजातो वर्तते,

## द्वितीया अनुसूची

सः, यदि स एतादृशप्रारम्भादव्यवहितपूर्वमेतत्कण्डिकायाः प्रथमोपकण्डिकायामुल्लिखितमानादधिकेन मानेन वेतनं प्राप्नोत् तर्हि, यथायथमेतादृशस्य मुख्यन्यायाधिपतेरन्यस्य वा न्यायाधीशस्य रूपेण, वास्तविकसेवायां यापितकालस्य विषये उक्तोपकण्डिकायामुल्लिखितवेतनादतिरिक्तं विशेषवेतनस्य रूपेण एतादृशस्य राशेः प्राप्तौ स्वत्ववान् भवेद् य एवमुल्लिखितवेतनस्य तथा एतादृशप्रारम्भादव्यवहितपूर्वं तेन प्राप्यमाणवेतनस्य चान्तरेण समो भवति ।

(३) उच्चन्यायालयस्य प्रत्येकं न्यायाधीशो भारतराज्यक्षेत्रस्याभ्यन्तरे स्वकर्तव्यपालने कृतायां यात्रायां कृतव्ययानां पूर्त्यै एतादृशानि युक्तियुक्तानि भक्तानि प्राप्नुयात् तथा यात्रासंबन्धीनि एतादृशानि सौकर्याणि तस्मै प्रदीयेरन् यादृशानि राष्ट्रपतिः काले काले विदध्यात् ।

(४) कस्यचिदपि राज्यस्योच्चन्यायालयस्य न्यायाधीशानामनुपस्थित्यनुमतेः (अनुपस्थित्यनुमतिभक्तैः सह ) तथा निवृत्तिवेतनस्य विषयेऽधिकारास्तैरुपबन्धैः शासिता भवेयुर्य एतस्य संविधानस्य प्रारम्भादव्यवहितपूर्वं तत्स्थानिप्रान्तस्योच्चन्यायालयस्य न्यायाधीशेषु प्रवृत्ता आसन् ।

११. अस्मिन् भागे, प्रसङ्गेनान्यथा अपेक्षितं चेन्न भवति—

(क) " मुख्यन्यायाधिपतिः " इतिशब्दे कार्यकारी मुख्यन्यायाधिपतिरन्तर्भवति, तथा " न्यायाधीशः " इतिशब्दे तदर्थन्यायाधीशोऽन्तर्भवति ।

(ख) " वास्तविकसेवा " इत्यस्यान्तर्भवन्ति——

(१) न्यायाधीशस्य रूपेण कर्तव्यं कुर्वता अथवा एतादृशानामन्येषां कृत्यानां पालने, येषां निर्वहणस्य भारस्तेन राष्ट्रपतेः प्रार्थनायां सत्यां गृहीतो भवेत्, न्यायाधीशेन यापितः कालः;

(२) तं कालं यस्मिन् स न्यायाधीशोऽनुमतिं गृहीत्वानुपस्थितो भवति वर्जयित्वा, विश्रामावकाशाः; तथा

(३) उच्चन्यायालयादुच्चतमन्यायालयं प्रति अथवा एकस्मादुच्चन्यायालयादन्यमुच्चन्यायालयं प्रति स्थानान्तरणे संधिकालः ।

## ( ङ )-भागः

## भारतस्य नियन्त्रकमहालेखापरीक्षकस्य संबन्ध उपबन्धाः

१२. (१ ) भारतस्य नियन्त्रकमहालेखापरीक्षकाय चतुःसहस्रं रूप्यकाणि प्रतिमासमिति मानेन वेतनं प्रदीयेत ।

(२) यो जन एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं भारतस्य महालेखापरीक्षकस्य रूपेण पदं धारयमाण आसीत् तथा एतादृशप्रारम्भे ३७७-तमानुच्छेदाधीनं भारतस्य नियन्त्रकमहालेखापरीक्षकः संजातो वर्तते स एतत्कण्डिकायाः प्रथमोपकण्डिकायामुल्लिखितवेतनादतिरिक्तं विशेषवेतनस्य रूपेण एतादृशस्य राशेः प्राप्तौ स्वत्ववान् भवेद् य एवमुल्लिखितवेतनस्य तथा एतादृशप्रारम्भादव्यवहितपूर्वं भारतस्य महालेखापरीक्षकस्य रूपेण तेन प्राप्यमाणवेतनस्य चान्तरेण समो भवति ।

(३) भारतस्य नियन्त्रक-महालेखापरीक्षकस्यानुपस्थित्यनुमतेः तथा निवृत्तिवेतनस्य तथान्येषां सेवाप्रतिबन्धानां विषयेऽधिकारास्तैरुपबन्धैर्यथायथं शासिता भवेयुः शासितत्वेन वानुवर्तेरन् य एतस्य संविधानस्य प्रारम्भादव्यवहितपूर्वं भारतस्य महालेखापरीक्षके प्रवृत्ता आसन् तथा तेषूपबन्धेषु गवर्नरजनरल इत्याख्यं प्रति सर्वे निर्देशा राष्ट्रपतिं प्रति निर्देशा इत्यर्थः क्रियेत ।

# तृतीया अनुसूची

[ अनुच्छेदाः —७५ (४), ९९, १२४ (६), १४८ (२), १६४ (३), १८८ तथा २१९ ]

## शपथानां प्रतिज्ञानानां प्रपत्राणि

१

संघस्य मन्त्रिणः कृते पद-शपथस्य प्रपत्रम्—

"अहम्, अमुकः, निश्चयेन (परमेश्वरस्य नाम्ना शपे / सत्यनिष्ठया प्रतिजाने) यदहं विधिना स्थापितं भारतस्य संविधानं प्रति सत्यां श्रद्धां निष्ठां च धारयिष्ये, संघस्य मन्त्रित्वेन स्वकर्तव्यानि श्रद्धापूर्वकं शुद्धान्तःकरणेन च निर्वक्ष्यामि, तथा सर्वविधलोकान् प्रति भीतिं पक्षपातं वा रागं द्वेषं वा विहाय यथासंविधानं यथाविधि च न्याय्यमाचारिष्यामि।"

२

संघस्य मन्त्रिणः कृते गोपनीयता-शपथस्य प्रपत्रम्—

"अहम्, अमुकः, निश्चयेन (परमेश्वरस्य नाम्ना शपे / सत्यनिष्ठया प्रतिजाने) यत्कमपि विषयं यः संघस्य मन्त्रित्वेन मम विचारार्थम् आनीयेत मया परिज्ञातो वा भवेत्, कमपि जनं कानपि जनान् वा प्रति, एतादृशमन्त्रित्वेन मम कर्तव्यानां निर्वहणार्थं तदपेक्षितत्वं विहाय, साक्षाद्रूपेणासाक्षाद्रूपेण वा न बोधयिष्यामि न वा प्रकटीकरिष्यामि।"

३

संसदः सदस्येन कर्तव्यस्य शपथस्य प्रतिज्ञानस्य वा प्रपत्रम्—

"अहम्, अमुकः, राज्यपरिषदः (अथवा लोकसभायाः) सदस्यत्वेन निर्वाचितः (नामनिर्देशितो वा), निश्चयेन (परमेश्वरस्य नाम्ना शपे / सत्यनिष्ठया प्रतिजाने) यदहं विधिना स्थापितं भारतस्य संविधानं प्रति सत्यां श्रद्धां निष्ठां च धारयिष्ये, तथा यत्पदं ग्रहीतुमहमुद्यतोऽस्मि तस्य कर्तव्यानि श्रद्धापूर्वकं निर्वक्ष्यामि।"

## तृतीया अनुसूची

### ४

उच्चतमन्यायालयस्य न्यायाधीशैस्तथा भारतस्य नियन्त्रक-महालेखापरीक्षकेण कर्तव्यस्य शपथस्य प्रतिज्ञानस्य वा प्रपत्रम्—

'अहम्, अमुकः, भारतस्योच्चतमन्यायालयस्य मुख्यन्यायाधिपतित्वेन (न्यायाधीशत्वेन वा) (अथवा भारतस्य नियन्त्रकमहालेखापरीक्षकत्वेन) नियुक्तः, निश्चयेन $\frac{\text{परमेश्वरस्य नाम्ना शपे}}{\text{सत्यनिष्ठया प्रतिजाने}}$ यदहं विधिना स्थापितं भारतस्य संविधानं प्रति सत्यां श्रद्धां निष्ठां च धारयिष्ये, तथा अहं सम्यक् प्रकारेण श्रद्धापूर्वकं च तथा यथाशक्ति यथाज्ञानं यथाविवेकं च स्वपदस्य कर्तव्यानि भीतिं पक्षपातं वा रागं द्वेषं वा विहाय पालयिष्यामि, तथा अहं संविधानस्य विधीनां च मर्यादां रक्षिष्यामि।"

### ५

कस्यापि राज्यस्य मन्त्रिणः कृते पदशपथस्य प्रपत्रम्—

"अहम्, अमुकः, निश्चयेन $\frac{\text{परमेश्वरस्य नाम्ना शपे}}{\text{सत्यनिष्ठया प्रतिजाने}}$ यदहं विधिना स्थापितं भारतस्य संविधानं प्रति सत्यां श्रद्धां निष्ठां च धारयिष्ये, तथा अहम् ............ राज्यस्य मन्त्रित्वेन स्वकर्तव्यानि श्रद्धापूर्वकं शुद्धान्तःकरणेन च निर्वक्ष्यामि, तथा सर्वविधलोकान् प्रति भीतिं पक्षपातं वा रागं द्वेषं वा विहाय यथासंविधानं यथाविधि च न्याय्यमाचरिष्यामि।"

### ६

कस्यापि राज्यस्य मन्त्रिणः कृते गोपनीयता-शपथस्य प्रपत्रम्—

"अहम्, अमुकः, निश्चयेन $\frac{\text{परमेश्वरस्य नाम्ना शपे}}{\text{सत्यनिष्ठया प्रतिजाने}}$ यत्कमपि विषयं यः ........ राज्यस्य मन्त्रित्वेन मम विचारार्थम् आनीयेत मया परिज्ञातो वा भवेत्, कमपि जनं कानपि जनान् वा प्रति, एतादृशमन्त्रित्वेन मम कर्तव्यानां निर्वहणार्थं तदपेक्षितत्वं विहाय, साक्षाद्रूपेणासाक्षाद्रूपेण वा न बोधयिष्यामि न वा प्रकटीकरिष्यामि।"

## तृतीया अनुसूची

७

कस्यापि राज्यस्य विधानमण्डलस्य सदस्येन कर्तव्यस्य शपथस्य प्रतिज्ञानस्य वा प्रपत्रम्—

"अहम्, अमुकः, विधानसभायाः (अथवा विधानपरिषदः) सदस्यत्वेन निर्वाचितः (नामनिर्देशितो वा), निश्चयेन परमेश्वरस्य नाम्ना शपे / सत्यनिष्ठया प्रतिजाने यदहं विधिना स्थापितं भारतस्य संविधानं प्रति सत्यां श्रद्धां निष्ठां च धारयिष्ये, तथा यत्पदं ग्रहीतुमहमुद्यतोऽस्मि तस्य कर्तव्यानि श्रद्धापूर्वकं निर्वक्ष्यामि।"

८

उच्चन्यायालयस्य न्यायाधीशैः कर्तव्यस्य शपथस्य प्रतिज्ञानस्य वा प्रपत्रम्—

"अहम्, अमुकः, उच्चन्यायालयस्य मुख्यन्यायाधिपतित्वेन (न्यायाधीशत्वेन वा) नियुक्तः, निश्चयेन परमेश्वरस्य नाम्ना शपे / सत्यनिष्ठया प्रतिजाने यदहं विधिना स्थापितं भारतस्य संविधानं प्रति सत्यां श्रद्धां निष्ठां च धारयिष्ये, तथा अहं सम्यक् प्रकारेण श्रद्धापूर्वकं च तथा यथाशक्ति यथाज्ञानं यथाविवेकं च स्वपदस्य कर्तव्यानि भीतिं पक्षपातं वा रागं द्वेषं वा विहाय पालयिष्यामि, तथा अहं संविधानस्य विधीनां च मर्यादां रक्षिष्यामि।"

# चतुर्थी अनुसूची

[ अनुच्छेदाः ४ (१), ८० (२) तथा ३९१ ]

## राज्यपरिषदि स्थानानां वण्टनम्

एतयानुसूच्या संलग्नायाः स्थानसारिण्याः प्रथमस्तम्भ उल्लिखितेषु राज्येषु राज्यसमूहेषु वा प्रत्येकं यथायथं तस्याः सारिण्या द्वितीयस्तम्भे तस्य राज्यस्य राज्यसमूहस्य वा संमुखमुल्लिखितसंख्याकानि स्थानानि वण्टितानि भवेयुः ।

### स्थानसारिणी

राज्यपरिषद्

### प्रथमानुसूच्याः (क)-भाग उल्लिखितराज्यानां प्रतिनिधयः

| १ | २ |
|---|---|
| राज्यानि | पूर्णस्थानानि |
| १. आसाम [ राज्यम् ] | ६ |
| २. उरिस्सा ,, | ९ |
| ३. पंजाब ,, | ८ |
| ४. पश्चिमबंगाल ,, | १४ |
| ५. बिहार ,, | २१ |
| ६. मद्रास ,, | २७ |
| ७. मध्यप्रदेश ,, | १२ |
| ८. मुम्बई ,, | १७ |
| ९. युक्तप्रदेश ,, | ३१ |
| | योगः– १४५ |

## चतुर्थी अनुसूची

### प्रथमानुसूच्याः (ख)-भाग उल्लिखितराज्यानां प्रतिनिधयः

| १ | २ |
|---|---|
| राज्यानि | पूर्णस्थानानि |
| १. जम्मू-काश्मीर [ राज्यम् ] | ४ |
| २. तिरुवांकुर-कोचीन ,, | ६ |
| ३. पटियाला-पूर्वपंजाबराज्यसंघ [ राज्यम् ] | ३ |
| ४. मध्यभारत [ राज्यम् ] | ६ |
| ५. म्हैसूर ,, | ६ |
| ६. राजस्थान ,, | ९ |
| ७. विन्ध्यप्रदेश ,, | ४ |
| ८. सौराष्ट्र ,, | ४ |
| ९. हैदराबाद ,, | ११ |
| | योगः—५३ |

### प्रथमानुसूच्याः (ग)-भाग उल्लिखितराज्यानां प्रतिनिधयः

| १ | २ |
|---|---|
| राज्यानि राज्यसमूहाश्च | पूर्णस्थानानि |
| १. अजमेर [ राज्यम् ]<br>२. कोडगु ,, | १ |
| ३. कच्छ ,, | १ |
| ४. कूचविहार ,, | १ |
| ५. दिल्ली ,, | १ |
| ६. बिलासपूर ,,<br>७. हिमाचलप्रदेश ,, | १ |
| ८. भोपाल ,, | १ |
| ९. मणिपूर ,,<br>१०. त्रिपुरा ,, | १ |
| | योगः—७ |
| | संपूर्णस्थानानां योगः—२०५ |

# पञ्चमी अनुसूची

[ अनुच्छेदः २४४ (१) ]

## अनुसूचितक्षेत्राणामनुसूचितजनजातीनां च प्रशासननियन्त्रणयोः संबन्ध उपबन्धाः

### (क)-भागः

### साधारणम्

१. निर्वचनम्.—एतस्यामनुसूच्याम्, प्रसङ्गेनान्यथा अपेक्षितं चेन्न भवति, "राज्य" शब्देन प्रथमानुसूच्याः (क)-भागे (ख)-भागे वा उल्लिखितं किमपि राज्यमभिप्रेयते, किन्तु आसाम-राज्यं तदन्तर्गतं न भवति।

२. अनुसूचितक्षेत्रेषु कस्यापि राज्यस्य कार्यपालिका शक्तिः.—एतस्या अनुसूच्या उपबन्धानामधीनत्वे कस्यापि राज्यस्य कार्यपालिका शक्तिस्तस्यानुसूचितक्षेत्राणि यावद् विस्तृता भवति।

३. अनुसूचितक्षेत्राणां प्रशासनविषये राष्ट्रपतिं प्रति राज्यपालस्य राजप्रमुखस्य वा प्रतिवेदनम्.—प्रत्येकमनुसूचितक्षेत्रवतो राज्यस्य राज्यपालो राजप्रमुखो वा, प्रतिवर्षम्, यदा यदा वा राष्ट्रपतिर्नैवमपेक्ष्यते, तस्य राज्यस्यानुसूचितक्षेत्राणां प्रशासनविषये राष्ट्रपतिं प्रति प्रतिवेदनं कुर्यात्, संघस्य कार्यपालिका शक्तिश्च राज्याय उक्तक्षेत्राणां प्रशासनविषये निदेशदानं यावद् विस्तृता भवेत्।

### (ख)-भागः

## अनुसूचितक्षेत्राणामनुसूचितजनजातीनां च प्रशासनं नियन्त्रणं च

४. जनजातिमन्त्रणा-परिषद्—(१) अनुसूचितक्षेत्रवति प्रत्येकस्मिन् राज्ये, राष्ट्रपतिश्चेदेवं निदिशति तर्हि, कस्मिंश्चिदपि अनुसूचितजनजातिमति परमनुसूचितक्षेत्रविरहिते

## पञ्चमी अनुसूची

राज्येऽपि च, एका जनजातिमन्त्रणापरिषत् स्थाप्येत या विंशत्यनधिकैः सदस्यैर्भवेद् येषां यथाशक्यमुपचतुर्थांशत्रयं तद्राज्यस्य विधानसभायामनुसूचितजनजातीनां प्रतिनिधयो भवेयुः—

परन्तु यदि तस्य राज्यस्य विधानसभायामनुसूचितजनजातिप्रतिनिधीनां संख्या जनजातिमन्त्रणापरिषदि एतादृशप्रतिनिधिभिः पूरयितव्यानां स्थानानां संख्यातो न्यूना भवति तर्हि शेषस्थानानि तासां जातीनामन्यैः सदस्यैः पूर्येरन् ।

(२) जनजातिमन्त्रणापरिषदः कर्तव्यमेतद् भवेद् यत्सा यथायथं राज्यपालेन राजप्रमुखेन वा तां प्रति निर्दिष्टेषु तद्राज्यस्यानुसूचितजनजातीनां कल्याणेनोन्नत्या च संबद्धेषु विषयेषु मन्त्रणां दद्यादिति ।

(३) राज्यपालो राजप्रमुखो वा—

(क) परिषदः सदस्यानां संख्यायाः, तेषां नियुक्तेः परिषदश्च सभापतेस्तस्याः पदाधिकारिणां सेवकानां च नियुक्तेः संबधिन्या रीतेः;

(ख) तस्या अधिवेशनानां संचालनस्य, तस्याः साधारणप्रक्रियायाश्च;

(ग) अन्येषां सर्वेषां प्रासङ्गिकविषयाणां च,

यथायथं विधानार्थं विनियमनार्थं वा नियमान् निर्मातुं क्षमते ।

५. <u>अनुसूचितक्षेत्रेषु प्रवृत्तियोग्यो विधिः</u>.—(१) एतत्संविधानगतं सर्वमविगणय्य, यथायथं राज्यपालो राजप्रमुखो वा लोकाधिसूचनया निर्देष्टुं क्षमते यत्संसदस्तद्राज्यविधानमण्डलस्य वा कोऽपि विशेषोऽधिनियमस्तद्राज्यस्यानुसूचितक्षेत्रे तस्य कस्मिन्नपि भागे वा न प्रवर्तेत, अथवा तद्राज्यस्यानुसूचितक्षेत्रे तस्य कस्मिन्नपि भागे वा एतादृशैरपवादै रूपभेदैश्च प्रवर्तेत यादृशान् सोऽधिसूचनायामुल्लिखेत्, उपकण्डिकायाश्चैतस्या अधीनं दत्तः कोऽपि निर्देशस्तथा दीयेत यथा तस्य पूर्वपरामर्शी प्रभावो भवेत् ।

(२) यथायथं राज्यपालो राजप्रमुखो वा कस्मिन्नपि राज्ये कस्यापि तस्य क्षेत्रस्य शान्त्यै सुशासनाय च विनियमान् निर्मातुं क्षमते यत्तत्समयेऽनुसूचितक्षेत्रं वर्तते ।

पञ्चमी अनुसूची

विशेषतः तथा पूर्ववर्तिशक्तेर्व्यापकतायां विपरीतप्रभावमन्तरेण, एतादृशा विनियमाः—

(क) एतादृशक्षेत्रस्यानुसूचितजनजातीनां सदस्यैः सदस्येषु वा भूमेर्हस्तान्तरणस्य प्रतिषेधं निर्बन्धनं वा;

(ख) एतादृशक्षेत्रस्यानुसूचितजनजातीनां सदस्येषु भूमेर्वण्टनस्य विनियमनम्—

(ग) एतादृशक्षेत्रस्यानुसूचितजनजातीनां सदस्येभ्य ऋणरूपेण धनस्य दातृभिर्जनैः वृद्धिजीविरूपेण कार्यकरणस्य विनियमनम्—

कर्तुं क्षमन्ते ।

(३) एतादृशस्य कस्यापि विनियमस्य निर्माणे यादृश एतत्कण्डिकाया द्वितीयोपकण्डिकायां निर्दिश्यते, राज्यपालो राजप्रमुखो वा संसदस्तद्राज्यविधानमण्डलस्य वा अधिनियमं कमपि वर्तमानं विधिं वा यस्तत्समये प्रकृतक्षेत्रे प्रवृत्तियोग्यो भवति निरसितुं संशोधयितुं वा क्षमते ।

(४) एतत्कण्डिकाया अधीनं निर्मिताः सर्वे विनियमाः सद्यो राष्ट्रपतिं प्रति प्रेष्येरन् यावच्च स तान्नानुमन्यते तावत्कार्यकरा न भवेयुः ।

(५) एतत्कण्डिकाया अधीनं कोऽपि विनियमस्तावन्न निर्मीयेत यावद्विनियमस्य निर्मात्रा राज्यपालेन राजप्रमुखेन वा तद्राज्यार्थं जनजातिमन्त्रणापरिषदः सद्भावावस्थायाम् एतादृश्या परिषदा परामर्शः कृतो न भवेत् ।

## (ग)-भागः

## अनुसूचितक्षेत्राणि

६. अनुसूचितक्षेत्राणि.— (१) संविधानेऽस्मिन् " अनुसूचितक्षेत्राणि " इति शब्दसमूहेन एतादृशानि क्षेत्राणि अभिप्रेयन्ते येषां राष्ट्रपतिरादेशेनानुसूचितक्षेत्रत्वं घोषयेत् ।

(२) राष्ट्रपतिः कस्मिन्नपि काल आदेशेन—

(क) निर्देष्टुं क्षमते यत्किमपि संपूर्णमनुसूचितक्षेत्रं तस्य कोऽप्युल्लिखितो भागो वा अनुसूचितक्षेत्रत्वाद् एतादृशक्षेत्रस्य भागत्वाद् वा विरतो भवेत्;

(ख) किमप्यनुसूचितक्षेत्रं परिवर्तयितुं क्षमते, परं केवलं सीमानां शोधन-द्वारैव;

(ग) कस्यापि राज्यस्य सीमानां कस्मिन्नपि परिवर्तने, कस्यापि नूतन-राज्यस्य संघस्यान्तःप्रवेशे वा स्थापनायां वा किमपि पूर्वतः कस्मिंश्चिदपि राज्येऽसमाविष्टं क्षेत्रमनुसूचितक्षेत्रत्वेन तद्भागत्वेन वा घोषयितुं क्षमते;

एतादृशश्च कोऽप्यादेश एतादृशान् प्रासङ्गिकानानुषङ्गिकाँश्चोपबन्धानन्तर्भावयेद् यान् राष्ट्र-पतिरावश्यकानुचितांश्च प्रत्येति, किन्तु उपर्युक्तरीतिं विहाय, एतत्कण्डिकायाः प्रथमोप-कण्डिकाया अधीनं कृत आदेशः केनाप्युत्तरवर्तिनादेशेन परिवर्तितो न भवेत्।

## ( घ )-भागः

# अनुसूच्याः संशोधनम्

७. अनुसूच्याः संशोधनम्.—(१) संसत्काले काले विधिना संयोजनस्य, परिवर्त-नस्य, निरसनस्य वा द्वारेण एतस्या अनुसूच्याः कस्याप्युपबन्धस्य संशोधनं कर्तुं क्षमते, यदा चानुसूची एवं संशोधिता भवेत्तदास्मिन्संविधाने एतामनुसूचीं प्रति कोऽपि निर्देश एवं संशोधितामेतादृशीमनुसूचीं प्रति निर्देश इत्यर्थः क्रियेत।

(२) एतादृशः कोऽपि विधिर्यादृश एतत्कण्डिकायाः प्रथमोपकण्डिकायां वर्ण्यते एतत्संविधानस्य ३६८-तमानुच्छेदस्य प्रयोजनार्थमेतत्संविधानस्य संशोधनं न मन्येत।

# षष्ठी अनुसूची

[ अनुच्छेदौ २४४ (२) तथा २७५ (१) ]

## आसामस्य जनजातिक्षेत्राणां प्रशासनस्य विषय उपबन्धाः

१. स्वायत्तशासिमण्डलानि स्वायत्तशासिक्षेत्राणि च.— (१) एतत्कण्डिकाया उपबन्धानामधीनत्वे एतदनुसूच्याः २०-तमकण्डिकया संलग्नसारिण्याः (क)-भागस्य प्रत्येकम् अंशस्य जनजातिक्षेत्राणामेकं स्वायत्तशासिमण्डलं भवेत् ।

(२) यदि कस्मिन्नपि स्वायत्तशासिमण्डले विभिन्ना अनुसूचितजनजातयो वर्तन्ते तर्हि राज्यपालः, लोकाधिसूचनया, ताभिरध्युषितं क्षेत्रं क्षेत्राणि वा स्वायत्तशासिमण्डलेषु विभाजयितुं क्षमते ।

(३) राज्यपालो लोकाधिसूचनया—

(क) उक्तसारिण्याः (क)-भागे किमपि क्षेत्रमन्तर्भावयितुम्;

(ख) उक्तसारिण्याः (क)-भागात्किमपि क्षेत्रमपवर्जयितुम्;

(ग) नूतनं स्वायत्तशासिमण्डलं निर्मातुम्;

(घ) कस्यापि स्वायत्तशासिमण्डलस्य क्षेत्रं वर्धयितुम्;

(ङ) कस्यापि स्वायत्तशासिमण्डलस्य क्षेत्रं ह्रासयितुम्;

(च) द्वे अधिकानि वा स्वायत्तशासिमण्डलानि तद्भागान्वा संयोज्य एकं स्वायत्तशासिमण्डलं निर्मातुम्;

(छ) कस्यापि स्वायत्तशासिमण्डलस्य सीमाः परिभाषितुं

क्षमते—

परन्तु राज्यपाल एतदुपकण्डिकायाः (ग)-(घ)-(ङ)-(च)-खण्डानामनुरोधेन कमप्यादेशमेतस्या अनुसूच्याः चतुर्दशकण्डिकायाः प्रथमोपकण्डिकाया अनुरोधेन नियुक्तस्यायोगस्य प्रतिवेदनस्य विचारमन्तरेण न कुर्यात्—

## षष्ठी अनुसूची

२. मण्डलपारिषदां प्रादेशिकपरिषदां च घटनम्.— (१) प्रत्येकस्वायत्तशासिमण्डलस्य कृतेऽनधिकचतुर्विंशानां सदस्यानामेका मण्डलपरिषद् भवेत्, येषां चतुर्थांशत्रयाद्न्यूनाः सदस्याः प्राप्तवयस्कमताधिकारस्याधारेण निर्वाचिता भवेयुः ।

(२) एतदनुसूच्याः प्रथमकण्डिकाया द्वितीयोपकण्डिकाया अनुरोधेन स्वायत्तशासिप्रदेशस्य रूपेण घटितस्य प्रत्येकक्षेत्रस्य कृते एका पृथक् प्रादेशिकपरिषद् भवेत् ।

(३) प्रत्येकमण्डलपरिषत् प्रत्येकप्रादेशिकपरिषच्च क्रमशः ( मण्डलस्य नाम )– " मण्डलपरिषद् " ( प्रदेशस्य नाम )– " प्रादेशिकपरिषद् " च इति नाम्ना निगमनिकायो भवेत्, तस्याः शाश्वत उत्तराधिकार एका सामान्यमुद्रा च भवेत्, उक्तनाम्ना च सा वादिनी प्रतिवादिनी वा भवेत् ।

(४) एतदनुसूच्या उपबन्धानामधीनत्वे स्वायत्तशासिमण्डलस्य प्रशासनमेतादृशमण्डलस्य मण्डलपरिषदि तावद् निहितं भवेद्यावत्तदेतादृशमण्डलस्य कस्यामपि प्रादेशिकपरिषदि एतदनुसूच्या अनुरोधेन निहितं न भवति, स्वायत्तशासिप्रदेशस्य च प्रशासनमेतादृशप्रदेशस्य प्रादेशिकपरिषदि निहितं भवेत् ।

(५) प्रादेशिकपरिषद्वति स्वायत्तशासिमण्डले प्रादेशिकपरिषदः प्राधिकाराधीनानां क्षेत्राणां विषये मण्डलपरिषद एतदनूसूच्या एतादृशक्षेत्राणां विषये प्रदत्ताभिः शक्तिभिः सह केवलमेतादृश्यः शक्तयो भवेयुर्याः प्रादेशिकपरिषत्तस्यै प्रत्यायोजयेत् ।

(६) राज्यपालः, स्वायत्तशासिनां मण्डलानां प्रदेशानां वा अन्तर्गतैर्वर्तमानैर्जनजातिपारिषद्भिः प्रतिनिधित्ववद्भिः अन्यैर्जनजातिसंघटनैर्वा परामर्शं कृत्वा, मण्डलपरिषदां प्रादेशिकपरिषदां च प्रथमघटनार्थं नियमान् निर्मिमीत, एतादृशनियमाश्चोपबन्धान् कुर्युः—

(क) मण्डलपारिषदां प्रादेशिकपारिषदां च रचनार्थं तासु स्थानानां वण्टनार्थं च;

(ख) तासां परिषदां कृते निर्वाचनार्थकानां प्रादेशिकनिर्वाचनक्षेत्राणां परिसीमनार्थम्;

षष्ठी अनुसूची

(ग) एतादृशनिर्वाचनेषु मतदानार्थमर्हतानां कृते तथा तदर्थं निर्वाचक-नामावलीनां परिकल्पनार्थम्;

(घ) एतादृशनिर्वाचनेषु एतादृशपरिषदां सदस्यत्वेन निर्वाचनार्थमर्हतानां कृते;

(ङ) एतादृशपरिषत्सदस्यानां पदावधेः कृते;

(च) एतादृशपरिषदामर्थे निर्वाचनेन नामनिर्देशनेन वा संबद्धस्य संसक्तस्य वा कस्याप्यन्यस्य विषयस्य कृते;

(छ) मण्डलपरिषत्सु प्रादेशिकपरिषत्सु च प्रक्रियायाः कार्यसंचालनस्य च कृते;

(ज) मण्डलपरिषदां प्रादेशिकपरिषदां च पदाधिकारिणां कर्मचारिवृन्दस्य च नियुक्त्यर्थम्।

(७) स्वकीयप्रथमघटनस्यानन्तरं मण्डलपरिषत्प्रादेशिकपरिषद्वा एतत्कण्डिकायाः षष्ठोपकण्डिकायामुल्लिखितविषयाणां संबन्धे नियमान् निर्मातुं क्षमते, किञ्च—

(क) अधीनानां स्थानीयपरिषदां स्थानीयमण्डलीनां वा रचनायास्तासां प्रक्रियायाश्च तासां कार्यसंचालनस्य च;

(ख) यथायथं मण्डलस्य प्रदेशस्य वा प्रशासनविषयककार्यसंपादनेन संबद्धानां समस्तसाधारणविषयाणां च,

विनियामकान् नियमान् निर्मातुं क्षमते—

परन्तु यावदेतदुपकण्डिकाया अनुरोधेन मण्डलपरिषदा प्रादेशिकपरिषदा वा नियमा न निर्मीयन्ते तावत्प्रत्येकमेतस्याः परिषदः कृते निर्वाचनानाम्, तस्याः पदाधिकारिणां कर्मचारिवृन्दस्य च, तथा तस्याः प्रक्रियायाः कार्यसंचालनस्य च विषये एतत्कण्डिकायाः षष्ठोपकण्डिकाया अनुरोधेन राज्यपालेन निर्मिता नियमाः कार्यकरा भवेयुः—

## षष्ठी अनुसूची

परन्तु अन्यदपि, एतदनुसूच्या विंशकण्डिकया संलग्नसारिण्याः (क)-भागस्य क्रमशः पञ्चमषष्ठांशयोरन्तर्गतक्षेत्राणां विषये उत्तरकछारस्य मिकिरपर्वतमालायाश्च यथायथं मण्डलायुक्त उपविभागीयपदाधिकारी वा पदेन मण्डलपरिषदः सभापतिर्भवेत्, तस्य च मण्डलपरिषदः प्रथमघटनानन्तरं षण्णां वर्षाणां कालावधिं यावत्, राज्यपालनियन्त्रणस्याधीनत्वे, मण्डलपरिषदः कमपि संकल्पं निर्णयं वा विलोपयितुं भिन्नरूपतामापादयितुं वा मण्डलपरिषदे वा यथा स उचितं मन्यते तथानुदेशान् दातुं शक्तिर्भवेत् मण्डलपरिषच्च प्रत्येकमेतादृशं दत्तमनुदेशमनुवर्तेत ।

३. मण्डलपरिषदां प्रादेशिकपरिषदां च विधिनिर्माणस्य शक्तिः.—(१) स्वायत्तशासिप्रदेशस्य प्रादेशिकपरिषदेतादृशप्रदेशाभ्यन्तरे सर्वेषां क्षेत्राणां संबन्धे, स्वायत्तशासिमण्डलाभ्यन्तरे प्रादेशिकपरिषदाम्, ताश्चेद्भवन्ति, प्राधिकाराधीनक्षेत्राणि वर्जयित्वा तन्मण्डलाभ्यन्तरे च सर्वेषां क्षेत्राणां संबन्धे निम्नलिखितविषयेषु विधीनां निर्माणस्य शक्तिर्भवेत्—

(क) कृषेश्चरणस्य वा प्रयोजनार्थम् अथवा निवासस्य कृषिभिन्नस्य कार्यस्य वा प्रयोजनार्थम् अथवा कस्याप्येतादृशस्य प्रयोजनान्तरस्य कृते येन कस्यापि ग्रामस्य नगरस्य वा निवासिनां हितानामुन्नतिः संभाव्यते, कस्यापि रक्षितवनस्य भूमिं वर्जयित्वान्यस्या भूमेः वण्टनम्, परिग्रहः, उपयोगो वा, पृथक्स्थापनं वा—

परन्तु एतादृशविधिषु किमपि अनिवार्यमर्जनं प्राधिकृतं कुर्वतस्तत्काले प्रवृत्तस्य विधेरनुसारेण आसामराज्यं कस्या अपि परिगृहीताया अपरिगृहीताया वा भूमेः लोकप्रयोजनार्थमनिवार्यादर्जनान्न निवारयेत्;

(ख) रक्षितवनेतरस्य कस्यापि वनस्य व्यवस्थापनम्;

(ग) कृषिप्रयोजनार्थं कस्या अपि कुल्याया जलप्रवाहस्य वा उपयोगः;

(घ) "झूम" प्रथायाः स्थानान्तरणशीलायाः कृषेरन्यप्रकाराणां वा विनियमनम्;

(ङ) ग्रामाणां नगराणां वा समितीनां परिषदां वा स्थापना तासां शक्तयश्च;

(च) ग्रामारक्षिणं नगरारक्षिणं वा लोकस्वास्थ्यं च लोकस्वच्छतां च संगृह्य, ग्रामप्रशासनेन नगरप्रशासनेन वा संबद्धः कोऽप्यन्यो विषयः;

(छ) प्रमुखानां मुख्यानां वा नियुक्तिरुत्तराधिकारो वा;

(ज) सम्पत्तेर्दायभागः;

(झ) विवाहः;

(ञ) सामाजिकरूढयः।

(२) एतत्कण्डिकायाम् "रक्षितवनम्" इत्यनेन एतादृशं क्षेत्रमभिप्रेयते यद् "आसामवनविनियमः १८९१" इत्यस्याधीनम्, प्रकृतक्षेत्रे तत्काले प्रवृत्तस्य कस्याप्यन्यस्य विधेरधीनं वा रक्षितवनं भवति।

(३) एतत्कण्डिकाया अधीनं निर्मिताः सर्वे विधयः सद्यो राज्यपालस्य पुरतः स्थाप्येरन् यावच्च स तान् नानुमन्यते तावत्कार्यकरा न भवेयुः।

४ ~~(४)~~ स्वायत्तशासिमण्डलेषु स्वायत्तशासिप्रदेशेषु च न्यायप्रशासनम्।— (१) स्वायत्तशासिप्रदेशस्य प्रादेशिकपरिषद् एतादृशप्रदेशाभ्यन्तरक्षेत्राणां विषये, स्वायत्तशासिमण्डलस्य मण्डलपरिषच्च तन्मण्डलाभ्यन्तरप्रादेशिकपरिषदाम्, ताश्चेद् भवन्ति, प्राधिकाराधीनक्षेत्रेभ्यो भिन्नानां तन्मण्डलाभ्यन्तरक्षेत्राणां विषये, तेषां व्यवहारवादानां कार्याणां च परीक्षणार्थं येषां सर्वेऽपि विवादिन एतादृशक्षेत्रान्तर्गतानुसूचितजनजातिभिः संबद्धा भवन्ति ये च तेभ्यो व्यवहारवादेभ्यः कार्येभ्यश्च भिन्नाः सन्ति येषु एतस्या अनुसूच्याः पञ्चमकण्डिकायाः प्रथमोपकण्डिकाया उपबन्धाः प्रवर्तन्ते, तद्राज्यस्य कमपि न्यायालयमपवर्ज्य, ग्रामपरिषदो ग्रामन्यायालयान् वा संघटयितुं क्षमते, उचितजनांश्च एतादृशग्रामपरिषदां सदस्यत्वेन एतादृशन्यायालयानां वा पीठासीन-पदाधिकारित्वेन नियोक्तुं क्षमते, एतादृशपदाधिकारिणश्च नियोक्तुं क्षमते य एतदनुसूच्यास्तृतीयकण्डिकाया अधीनं निर्मितविधीनां प्रशासनार्थमावश्यका भवेयुः।

## षष्ठी अनुसूची

(२) एतत्संविधानगतं सर्वमविगणय्य, स्वायत्तशासिप्रदेशस्य प्रादेशिकपरिषत् तत्प्रादेशिकपरिषदा तदर्थं घटितः कश्चिन्न्यायालयो वा, स्वायत्तशासिमण्डलान्तर्गतकिञ्चित्क्षेत्रार्थं प्रादेशिकपरिषदोऽभावे वा एतादृशमण्डलस्य मण्डलपरिषत्तन्मण्डलपरिषदा तदर्थं घटितः कश्चिन्न्यायालयो वा, एतदनुसूच्याः पञ्चमकण्डिकाप्रथमोपकण्डिकाया उपबन्धा येषु व्यवहारवादेषु कार्येषु च प्रवर्तन्ते तानि वर्जयित्वा, एतत्कण्डिकायाः प्रथमोपकण्डिकाया अधीनं यथायथमेतादृशस्य प्रदेशस्य क्षेत्रस्य वाभ्यन्तरे घटितया ग्रामपरिषदा ग्रामन्यायालयेन वा परीक्षणीयेषु समस्तेषु व्यवहारवादेषु कार्येषु च पुनर्विचारन्यायालयस्य शक्तीः प्रयोजयेद् उच्चन्यायालयमुच्चतमन्यायालयं च विहाय नान्यस्य कस्यापि न्यायालयस्यैतादृशेषु व्यवहारवादेषु कार्येषु वा क्षेत्राधिकारो भवेत् ।

(३) एतत्कण्डिकाद्वितीयोपकण्डिकाया उपबन्धा येषु व्यवहारवादेषु कार्येषु च प्रवर्तन्ते तेषु आसामोच्चन्यायालयस्य एतादृशः क्षेत्राधिकारो भवेत्स च तेन प्रयोज्येत यादृशं काले काले राज्यपाल आदेशेनोल्लिखेत् ।

(४) यथायथं प्रादेशिकपरिषन्मण्डलपरिषद्वा राज्यपालस्य पूर्वानुमोदनेन—

(क) ग्रामपरिषदां ( ग्राम )न्यायालयानां च घटनस्य एतत्कण्डिकाया अधीनं प्रयोक्तव्यानां तेषां शक्तीनां च;

(ख) एतत्कण्डिकाप्रथमोपकण्डिकाया अधीनं व्यवहारवादानां कार्याणां परीक्षणे परिषद्भिर्न्यायालयैर्वा अनुसरणीयप्रक्रियायाः;

(ग) एतत्कण्डिकाद्वितीयोपकण्डिकाया अधीनं पुनर्विचारेषु अन्यकार्यप्रवृत्तिषु च प्रादेशिकपरिषदा मण्डलपरिषदा वा एतादृशपरिषदा घटितेन केनापि न्यायालयेन वा अनुसरणीयप्रक्रियायाः;

(घ) एतादृशानां परिषदां न्यायालयानां च ये विनिश्चया आदेशाश्च तेषां परिपालनस्य;

(ङ) एतस्याः कण्डिकायाः प्रथमोपकण्डिकाया द्वितीयोपकण्डिकायाश्चोपबन्धान् कार्यान्वितान् कर्तुमन्येषां सर्वेषां सहायकविषयाणाम् ,

विनियमनार्थं नियमान् निर्मातुं क्षमते ।

५. केषांचिद् व्यवहारवादानां कार्याणाम् अपराधानां च परीक्षणार्थं प्रादेशिक-परिषद्भयो मण्डलपरिषद्भयश्च केभ्यश्चिच्च न्यायालयेभ्यः पदाधिकारिभ्यश्च 'व्यवहारप्रक्रियासंहिता १९०८' इत्यस्याः 'दण्डप्रक्रियासंहिता १८९८' इत्यस्याश्चाधीनं शक्तीनां प्रदानम्।—(१) राज्यपालः कस्मिन्नपि स्वायत्तशासिनि मण्डले प्रदेशे वा कस्मादपि प्रवृत्तात्, तत्कृते राज्यपालेनोल्लिखिताद्, विधेरुत्तिष्ठमानानां व्यवहारवादानां कार्याणां वा परीक्षणार्थम्, भारतीयदण्डसंहिताया वा अधीनम् एतादृशे मण्डले प्रदेशे वा तत्काले प्रवृत्तस्य कस्याप्यन्यस्य विधेरधीनं वा मृत्युना आजीवनं निर्वासनेन पञ्चवर्षावरावधिं यावत्कारावासेन वा दण्डनीयानामपराधानां परीक्षणार्थम् एतादृशे मण्डले प्रदेशे वा प्राधिकारवत्यै मण्डलपरिषदे प्रादेशिकपरिषदे वा, एतादृशमण्डलपरिषदा घटितेभ्यो न्यायालयेभ्यो वा, राज्यपालेन तदर्थं नियुक्ताय कस्मैचित्पदाधिकारिणे वा यथायथं 'व्यवहारप्रक्रियासंहिता १९०८' इत्यस्याः 'दण्डप्रक्रियासंहिता १८९८' इत्यस्या वा अधीनमेतादृशशक्तीः प्रदातुं क्षमते यथा स उचितं मन्यते, तदनन्तरं च उक्ता परिषद्, न्यायालयः पदाधिकारी वा एवंप्रदत्तशक्तीनां प्रयोगेण व्यवहारवादानां कार्याणाम् अपराधानां वा परीक्षणं कुर्यात् ।

(२) राज्यपालः कस्यैचिन्मण्डलपरिषदे, प्रादेशिकपरिषदे, कस्मैचिद् न्यायालयाय पदाधिकारिणे वा एतत्कण्डिकायाः प्रथमोपकण्डिकाया अधीनं प्रदत्तानां शक्तीनां कामपि प्रत्यादातुं भिन्नरूपां वा कर्तुं क्षमते ।

(३) एतत्कण्डिकायां स्पष्टतापूर्वकमुपबन्धितदशां वर्जयित्वा, 'व्यवहारप्रक्रियासंहिता १९०८' 'दण्डप्रक्रियासंहिता १८९८' च कस्मिन्नपि स्वायत्तशासिमण्डले कस्मिन्नपि स्वायत्तशासिप्रदेशे वा, यत्रैतत्कण्डिकाया उपबन्धाः प्रवर्तन्ते, केषामपि व्यवहारवादानां कार्याणाम् अपराधानां वा परीक्षणे न प्रवर्तेयाताम् ।

६. प्राथमिकविद्यालयादीन् स्थापयितुं मण्डलपरिषदः शक्तिः।—स्वायत्तशासिमण्डलस्य मण्डलपरिषद् मण्डले प्राथमिकविद्यालयानाम्, औषधालयानाम्, विपणीनाम्, पश्ववरोधानाम्, नौघट्टानाम्, मीनक्षेत्राणां, मार्गाणाम्, जलपथानां च स्थापनां निर्माणं

## षष्ठी अनुसूची

व्यवस्थापनां च कर्तुं क्षमेत विशेषतया च मण्डले प्राथमिकविद्यालयेषु प्राथमिकशिक्षा यस्यां भाषायां यया च रीत्या दीयेतेत्यस्य निर्धारणं कर्तुं क्षमेत ।

७. मण्डलनिधयः प्रादेशिकनिधयश्च. (१) प्रत्येकस्वायत्तशासिमण्डलार्थं मण्डलनिधिः प्रत्येकस्वायत्तशासिप्रदेशार्थं च प्रादेशिकनिधिर्घटितो भवेद् यस्मिन् क्रमशस्तन्मण्डलस्य मण्डलपरिषदा तत्प्रदेशस्य प्रादेशिकपरिषदा च यथायथं तन्मण्डलस्य तत्प्रदेशस्य वा एतत्संविधानोपबन्धानामनुसारेण प्रशासनक्रमे प्राप्तानि सर्वाणि धनान्याकलितानि भवेयुः ।

(२) यथायथं मण्डलनिधेः प्रादेशिकनिधेर्वा व्यवस्थापनार्थं मण्डलपरिषत्प्रादेशिकपरिषच्च राज्यपालस्यानुमोदनेन नियमान् निर्मातुं क्षमेत, एवं निर्मिताश्च नियमाः, उक्तनिधौ धनप्रदानस्य ततो धनप्रत्यादानस्य, तत्र धनस्याभिरक्षायाः, उपर्युक्तविषयैश्च संसक्तस्य तेषां सहायकस्य वा कस्याप्यन्यविषयस्य संबन्धेऽनुसरणीयप्रक्रियां निर्धारयितुं क्षमेरन् ।

८ (८). भू-राजस्वं निर्धारयितुं संग्रहीतुं च करानारोपयितुं च शक्तिः.—(१) स्वायत्तशासिप्रदेशस्य प्रादेशिकपरिषद एतादृशप्रदेशस्यान्तर्गतानां सर्वासां भूमीनां विषये, स्वायत्तशासिमण्डलस्य मण्डलपरिषदश्च, मण्डलान्तर्गतप्रादेशिकपरिषदाम्, ताश्चेद् भवन्ति, प्राधिकाराधीनक्षेत्रेषु स्थिता भूमीर्वर्जयित्वा, मण्डलान्तर्गतानां सर्वासामन्यासां भूमीनां विषये, तत्कालं सामान्येन आसामराज्ये भूराजस्वस्य प्रयोजनार्थं भूमीनां परिगणन आसामशासनेनानुस्रियमाणानां तत्त्वानामनुसारेण भूराजस्वं निर्धारयितुं संग्रहीतुं च शक्तिर्भवेत् ।

(२) स्वायत्तशासिप्रदेशस्य प्रादेशिकपरिषद एतादृशप्रदेशस्यान्तर्गतक्षेत्राणां विषये, स्वायत्तशासिमण्डलस्य मण्डलपरिषदश्च, मण्डलान्तर्गतप्रादेशिकपरिषदाम्, ताश्चेद् भवन्ति, प्राधिकाराधीनक्षेत्राणि वर्जयित्वा, मण्डलान्तर्गतानां सर्वेषामन्येषां क्षेत्राणां विषये, भूमिषु गृहेषु च करान्, एतादृशक्षेत्रेषु निवासं कुर्वत्सु जनेषु च पथकरमुद्ग्रहीतुं संग्रहीतुं च शक्तिर्भवेत् ।

(३) स्वायत्तशासिमण्डलस्य मण्डलपरिषद एतादृशमण्डलस्याभ्यन्तरे निम्नलिखितकरेषु सर्वान् कांश्चिद्वा उद्ग्रहीतुं संग्रहीतुं च शक्तिर्भवेत्, यथा—

(क) वृत्तिषु, व्यापारेषु, आजीविकासु नियोजनासु च कराः;

(ख) पशुषु, यानेषु, नौषु च कराः;

(ग) कस्यामपि विपणौ तत्र विक्रयार्थं भाण्डानां प्रवेशे कराः; नौभिरुह्यमानेषु जनेषु भाण्डेषु च पथकराः;

(घ) पाठशालानामौषधालयानां मार्गाणां वा सुस्थित्यै कराः ।

(४) एतत्कण्डिकाया द्वितीयतृतीयोपकण्डिकयोरुल्लिखितकरेषु कस्याप्युद्ग्रहणं संग्रहं चोपबन्धितं कर्तुं यथायथं प्रादेशिकपरिषन्मण्डलपरिषद्वा विनियमान् निर्मातुं क्षमेत ।

९. खनिजानामन्वीक्षणार्थं निष्कर्षणार्थं वा अनुज्ञप्तयः भाटकपत्रप्रदानं वा.—(१) कस्यापि स्वायत्तशासिमण्डलस्यान्तर्गतस्य कस्यापि क्षेत्रस्य विषये आसामशासनेन खनिजानामन्वीक्षणार्थं निष्कर्षणार्थं वा दत्तेभ्योऽनुज्ञप्तिभ्यः भाटकपत्रेभ्यो वा प्रतिवर्षं प्रोद्भूयमानस्य स्वामित्वस्यैतादृशोंऽशस्तस्यै मण्डलपरिषदे दीयेत यथा आसामशासनस्य एतादृशमण्डलस्य मण्डलपरिषदश्च मध्ये समयः कृतो भवेत् ।

(२) मण्डलपरिषदे प्रदातव्यस्यैतादृशस्य स्वामित्वस्यांशविषये कश्चिद्विवाद उत्पद्यते चेत्तर्हि स राज्यपालाय निर्धारणार्थं समर्प्येत स्वविवेकपुरस्सरं च राज्यपालेन निर्धारितो राशिरेतत्कण्डिकायाः प्रथमोपकण्डिकाया अधीनं मण्डलपरिषदे प्रदेयराशिर्मन्येत, राज्यपालस्य च विनिश्चयोऽन्तिमो भवेत् ।

१०. जनजातिभ्यो भिन्नजनानां वृद्धिजीवित्वस्य व्यापारस्य च नियन्त्रणार्थं मण्डलपरिषदो विनियमनिर्माणस्य शक्तिः.— (१) स्वायत्तशासिमण्डलस्य मण्डलपरिषत्तस्मिन्मण्डले तत्र निवसन्तीभ्यो जनजातिभ्यो भिन्नानां जनानां वृद्धिजीवित्वस्य व्यापारस्य च विनियमनार्थं नियन्त्रणार्थं च विनियमान् निर्मातुं क्षमते ।

(२) विशेषतः, पूर्ववर्तिशक्तेर्व्यापकतायां विपरीतप्रभावेण विना च, एतादृशविनियमाः—

(क) विधातुमर्हन्ति यत्तदर्थं दत्तामनुज्ञप्तिं धारयन्तमन्तरेण कोऽप्यन्यो वृद्धिजीवित्वस्य कार्यं न कुर्वीत;

## षष्ठी अनुसूची

(ख) वृद्धिजीविनारोपणीयं प्राप्यं वा वृद्धेरधिकतममानं विधातुमर्हति;

(ग) वृद्धिजीविभिर्गणनाया धारणस्य मण्डलपरिषद्भिस्तदर्थं नियुक्तैः पदाधिकारिभिरेतादृशगणनाया निरीक्षणस्य चोपबन्धं कर्तुमर्हति;

(घ) कोऽपि जनो यो मण्डले निवसन्तीनामनुसूचितजनजातीनां मनुष्यो न वर्तते मण्डलपरिषदा तदर्थं दत्तामनुज्ञप्तिं विना कस्यापि वस्तुनो राशिशोऽल्पशो वा पण्यकार्यं न कुर्यादिति विधातुमर्हति—

परन्तु एतत्कण्डिकाया अधीनमेतादृशविनियमास्तावन्न निर्मीयेरन् यावत्ते मण्डलपरिषदः समस्तसदस्यानां संख्यायाश्चतुर्थांशत्रयादन्यूनबहुमतेन पारिता न भवेयुः—

परन्तु अन्यदपि, एतादृशानां केषामपि विनियमानामधीनत्वे एतादृशविनियमानां निर्माणकालात्पूर्वं मण्डलाभ्यन्तरे व्यापारं कुर्वते वृद्धिजीविने व्यापारिणे वा अनुज्ञप्तिदानस्य निराकरणे क्षमता न भवेत्।

(३) एतत्कण्डिकाया अधीनं निर्मिताः सर्वे विनियमाः सद्यो राज्यपालस्य पुरतः स्थाप्येरन् यावच्च स तान्नानुमन्यते तावत्ते कार्यकरा न भवेयुः।

११. एतदनुसूच्या अधीनं निर्मितानां विधीनां नियमानां विनियमानां च प्रकाशनम्.—मण्डलपरिषदा प्रादेशिकपरिषदा वा एतदनुसूच्या अधीनं निर्मिताः सर्वे विधयो नियमा विनियमाश्च राज्यस्य राजकीयसूचनापत्रे सद्यः प्रकाश्येरन् एतादृशप्रकाशने च ते विधिवत्कार्यकरा भवेयुः।

१२. स्वायत्तशासिमण्डलेषु स्वायत्तशासिप्रदेशेषु च संसदो राज्यविधानमण्डलस्य चाधिनियमानां प्रवृत्तिः.—(१) एतत्संविधानगतं सर्वमविगणय्य—

(क) राज्यविधानमण्डलस्य कोऽप्यधिनियमः, यस्तेषां विषयाणां संबन्धे विद्यते ये एतदनुसूच्यास्तृतीयकण्डिकायामेतादृशविषयत्वेनोल्लिखिताः सन्ति येषां विषये मण्डलपरिषत्प्रादेशिकपरिषद्वा विधीन् निर्मातुं

क्षमते, राज्यविधानमण्डलस्य कोऽप्यधिनियमश्च, यः कस्यापि अनाप्तुतस्य माद्यसारिकपानस्य उपभोगस्य प्रतिषेधं निर्बन्धनं वा करोति, कस्मिन्नपि स्वायत्तशासिमण्डले स्वायत्तशासिप्रदेशे वा तावन्न प्रवर्तेत यावदन्यतरस्यामपि स्थितौ एतादृशमण्डलस्य, एतादृशप्रदेशे वा क्षेत्राधिकारवती, मण्डलपरिषल्लोकाधिसूचनया तथा न निदिशति, मण्डलपरिषच्च कस्याप्यधिनियमस्य विषये एतादृशनिर्देशदाने एतदपि निर्देष्टुं क्षमते यदेतादृशे मण्डले प्रदेशे वा तस्य कस्मिन्नपि भागे वा प्रवृत्तौ अधिनियम एतादृशैरपवादै रूपभेदैर्वा सह कार्यकरो भवेद्यथा सोचितं मन्यते;

(ख) राज्यपालो लोकाधिसूचनया निर्देष्टुं क्षमते यत्संसदो राज्यविधानमण्डलस्य वा अधिनियमो यमेतस्या उपकण्डिकायाः (क)-खण्डस्योपबन्धा न विषयीकुर्वन्ति कस्मिन्नपि स्वायत्तशासिमण्डले कस्मिन्नपि स्वायत्तशासिप्रदेशे वा न प्रवर्तेत यद्वा एतादृशे मण्डले प्रदेशे वा तस्य कस्मिन्नपि भागे वा एतादृशैरपवादै रूपभेदैर्वा सह प्रवर्तेत यथा स तस्यामधिसूचनायामुल्लिखेत् ।

(२) एतत्कण्डिकायाः प्रथमोपकण्डिकाया अधीनं दत्तः कोऽपि निदेश एवं दातुं शक्यते यत्तस्य पूर्वपरामर्शी अपि प्रभावो भवेत् ।

१३. स्वायत्तशासिमण्डलैः संबद्धानां प्राक्कलितानां प्राप्तीनां व्ययानां च वार्षिकवित्तविवरणे पृथक् प्रदर्शनम्. —स्वायत्तशासिमण्डलेन संबद्धाः प्राक्कलिताः प्राप्तयो व्ययाश्च, ये आसामराज्यस्य संचितनिधावाकलनीयास्ततो वा करणीया विद्यन्ते, प्रथमं मण्डलपारिषदः पुरतः चर्चायै स्थाप्येरन् एतादृशचर्चाया अनन्तरं च एतत्संविधानस्य २०२-तमानुच्छेदस्याधीनं राज्यविधानमण्डलस्य पुरतः स्थापनीये वार्षिकवित्तविवरणे पृथक् प्रदर्श्येरन् ।

१४. स्वायत्तशासिमण्डलानां स्वायत्तशासिप्रदेशानां च प्रशासनस्य परिप्रश्नार्थं तद्विषये प्रतिवेदनदानार्थं चायोगस्य नियुक्तिः.— (१) राज्यपालो राज्यस्य स्वायत्तशासि-

## षष्ठी अनुसूची

मण्डलानां स्वायत्तशासिप्रदेशानां च प्रशासनेन संबद्धस्य तेनोल्लिखितस्य कस्यापि विषयस्य, एतदनुसूच्याः प्रथमकण्डिकायास्तृतीयोपकण्डिकाया (ग)-(घ)-(ङ)-(च)-खण्डेषूल्लिखितविषयान् संगृह्य, परिप्रश्नार्थं प्रतिवेदनदानार्थं च कस्मिन्नपि काले आयोगं नियोक्तुं क्षमते, राज्यस्य स्वायत्तशासिमण्डलानां स्वायत्तशासिप्रदेशानां च सामान्येन प्रशासनस्य विशेषतश्च––

(क) एतादृशेषु मण्डलेषु प्रदेशेषु च शिक्षायाश्चिकित्सायाश्च सौकर्यस्य संचारस्य चोपबन्धानाम्;

(ख) एतादृशानां मण्डलानां प्रदेशानां च विषये कस्यापि नूतनस्य विशेषस्य वा विधानस्यावश्यकतायाः; तथा––

(ग) मण्डलपरिषद्भिः प्रादेशिकपरिषद्भिश्च निर्मितानां विधीनां नियमानां विनियमानां च प्रशासनस्य,

काले काले परिप्रश्नार्थं प्रतिवेदनार्थं चायोगं नियोक्तुं क्षमते आयोगेनानुसरणीयप्रक्रियां च परिभाषितुं क्षमते ।

(२) प्रत्येकमेतादृशस्यायोगस्य प्रतिवेदनं, राज्यपालस्य तद्विषयकपुरःप्रशंसनेन सह, तत्संबन्धी मन्त्री तद्विषये आसामशासनेन प्रस्थापनीयायाः क्रियायाः विषये व्याख्यात्मकज्ञापनेन सह, राज्यविधानमण्डलस्य पुरतः स्थापयेत् ।

(३) शासनकार्यस्य स्वमन्त्रिषु भागकल्पनां कुर्वन् आसामराज्यपालः स्वमन्त्रिषु एकं विशेषतो राज्यस्य स्वायत्तशासिमण्डलानां स्वायत्तशासिप्रदेशानां च कल्याणस्य भारसाधकं कर्तुमर्हति ।

१५. <u>मण्डलपरिषदां प्रादेशिकपरिषदां वा कार्याणां संकल्पानां च विलोपनं निलम्बनं वा</u>.––(१) यदि कस्मिन्नपि काले राज्यपालस्य समाधानं जायते यन्मण्डलपरिषदः प्रादेशिकपरिषदो वा केनापि कार्येण संकल्पेन वा भारतस्य सुरक्षिततताया भयापन्नता संभाव्यते तर्हि स एतादृशं कार्यं संकल्पं वा विलोपयितुं निलम्बयितुं वा क्षमते

## षष्ठी अनुसूची

एतादृशानुपायांश्च (परिषदो निलम्बनेन परिषदि निहितासु तया प्रयोक्तव्यासु वा शक्तिषु सर्वासां कस्याश्चिद्वा स्वायत्तीकरणेन सह) आश्रयितुं क्षमते यादृशान् स एतादृशकार्यस्य करणम् अनुवृत्तिं वा एतादृशसंकल्पस्य च कार्यकरत्वं वारयितुमावश्यकान्मन्यते।

(२) एतत्कण्डिकायाः प्रथमोपकण्डिकाया अधीनं राज्यपालेन दत्त आदेशः, तत्कारणैः सह, यथासंभवं शीघ्रं राज्यविधानमण्डलस्य पुरतः स्थापयिष्यते, स चादेशो यदि विधानमण्डलेन न प्रतिसंह्रियते तर्हि तेन प्रकारेण तस्य दानस्य दिनाङ्काद् द्वादशानां मासानां कालावधिं यावत्कार्यकरत्वेनानुवर्तेत—

परन्तु यदि यावद्वारं च राज्यविधानमण्डलेन एतादृशस्यादेशस्यानुवृत्त्यर्थमनुमोदनस्य संकल्पः पार्यते तर्हि स आदेशः, राज्यपालेन न प्रतिसंहृतः क्रियते चेत्, तस्माद्दिनाङ्काद्यवस्थिन् एतत्कण्डिकाया अधीनम् अन्यथा स प्रवर्तनाद्विरतो भवेद् द्वादशानां मासानामन्यं कालावधिं यावत्कार्यकरत्वेनानुवर्तेत।

१६. मण्डलपरिषदः प्रादेशिकपरिषदो वा विघटनम्.—एतदनुसूच्याश्चतुर्दशकण्डिकाया अधीनं नियुक्तस्यायोगस्य पुरःप्रशंसने राज्यपालो लोकाधिसूचनया कस्या अपि प्रादेशिकपरिषदो मण्डलपरिषदो वा विघटनं कर्तुं क्षमते,

(क) परिषदः पुनःसंघटनार्थं सद्य एव नूतनसाधारणनिर्वाचनार्थञ्चादेष्टुं क्षमते, अथवा

(ख) राज्यविधानमण्डलस्य पूर्वानुमोदनेन एतादृशपरिषदः प्राधिकाराधीनक्षेत्रस्य प्रशासनं राज्यपालः स्वायत्तीकर्तुं क्षमते, एतादृशक्षेत्रस्य प्रशासनमुक्तकण्डिकाया अधीनं नियुक्तस्यायोगस्य वा, तेन समुपयुक्तत्वेन मन्यमानस्यान्यस्य वा निकायस्याधीनतायां द्वादशभ्यो मासेभ्योऽनधिककालावधिं यावत् स्थापयितुं क्षमते—

परन्तु यदा एतत्कण्डिकायाः (क)-खण्डस्याधीनं कश्चिदादेशो दत्तो भवेत्तदा राज्यपालः प्रकृतक्षेत्रस्य प्रशासनविषये साधारणनिर्वाचने निर्वृत्ते सति परिषदः पुनःसंघटनप्रश्नस्य लम्बनावस्थां यावदेतत्कण्डिका (क)-खण्डे निर्दिष्टां क्रियां कर्तुं क्षमते— ख

## षष्ठी अनुसूची

परन्तु अन्यदपि, यथायथं मण्डलपरिषदे प्रादेशिकपरिषदे वा राज्यविधानमण्डलस्य पुरतः स्वाभिमतानि स्थापयितुमवसरदानेन विना एतत्कण्डिका (ख)-खडस्याधीनं कापि क्रिया न क्रियेत।

१७. स्वायत्तशासिमण्डलेषु निर्वाचनक्षेत्राणां निर्माण एतादृशमण्डलेभ्यः क्षेत्राणामपवर्जनम्.—आसामविधानसभायै निर्वाचनप्रयोजनार्थं राज्यपाल आदेशेन घोषयितुं क्षमते यत्कस्यापि स्वायत्तशासिमण्डलस्याभ्यन्तरे किमपि क्षेत्रमेतादृशाय कस्मैचिन्मण्डलाय सभायां रक्षितस्य स्थानस्य स्थानानां वा पूर्त्यै कस्यापि निर्वाचनक्षेत्रस्य भागो न भवेत्, प्रत्युत सभायाम् एवमरक्षितस्य स्थानस्य स्थानानां वा पूर्त्यै आदेश उल्लिखितस्य निर्वाचनक्षेत्रस्य भागो भवेत्।

१८. विंशकण्डिकया संलग्नसारिण्याः (ख)-भाग उल्लिखितक्षेत्रेषु एतदनुसूच्या उपबन्धानां प्रवृत्तिः—(१) राज्यपालः—

(क) राष्ट्रपतेः पूर्वानुमोदनेन लोकाधिसूचनया एतदनुसूच्याः पूर्ववर्तिनः सर्वान् कांश्चिदुपबन्धान्वा विंशकण्डिकया संलग्नसारिण्याः (ख)-भाग उल्लिखिते कस्मिन्नपि जनजातिक्षेत्रे, एतादृशक्षेत्रस्य कस्मिन्नपि भागे वा, प्रवृत्तान् कर्तुं क्षमते एवं च सति एतादृशस्य क्षेत्रस्य भागस्य वा प्रशासनमेतादृशोपबन्धानामनुसारेण भवेत्, किञ्च

(ख) एतादृशेनैवानुमोदनेन लोकाधिसूचनया उक्तसारिण्यास्तत्सारिण्याः (ख)-भाग उल्लिखितं किमपि जनजातिक्षेत्रं तस्य कमपि भागं वा अपवर्जयितुं क्षमते।

(२) उक्तसारिण्याः (ख)-भाग उल्लिखितस्य कस्यापि जनजातिक्षेत्रस्य एतादृशक्षेत्रस्य कस्यापि भागस्य वा विषये यावदेतत्कण्डिकायाः प्रथमोपकण्डिकाया अधीनमधिसूचना न प्रवर्त्यते तावद् यथायथमेतादृशस्य क्षेत्रस्य तद्भागस्य वा प्रशासनं राष्ट्रपतिः, आत्मनोऽभिकर्तृरूपस्य आसामराज्यपालस्य द्वारा, कुर्यात्, एतत्संविधानस्य नवमभागस्योपबन्धाश्च एतादृशं क्षेत्रं तद्भागो वा प्रथमानुसूच्या (घ)-भाग उल्लिखितं राज्यक्षेत्रमिव वर्तत इति तस्मिन् प्रवर्तेरन्।

षष्ठी अनुसूची

(३) एतत्कण्डिकाया द्वितीयोपकण्डिकाया अधीनं राष्ट्रपतेरभिकर्तृरूपेण स्वकृत्यानां निर्वहणे राज्यपालः स्वविवेकेन कार्यं कुर्यात् ।

१९. संक्रमणकालिका उपबन्धाः.— (१) एतत्संविधानस्य प्रारम्भादनन्तरं यथा-संभवं शीघ्रमेतस्या अनुसूच्या अधीनं राज्यपालो राज्यस्य प्रत्येकस्वायत्तशासिमण्डलस्य कृते मण्डलपरिषदो घटनार्थमुपायान् कुर्वीत, यावच्च कस्यापि स्वायत्तशासिमण्डलस्य कृते मण्डलपरिषदेवं घटिता न भवति तावदेतादृशस्य मण्डलस्य प्रशासनं राज्यपाले निहितं भवेत्, एतादृशमण्डलस्य चाभ्यन्तरक्षेत्राणां प्रशासन एतदनुसूच्याः पूर्ववर्त्युपबन्धानां स्थाने निम्नलिखिता उपबन्धाः प्रवृत्ता भवेयुः, यथा—

(क) संसदस्तद्राज्यविधानमण्डलस्य वा कोऽप्यधिनियम एतादृशक्षेत्रे तावन्न प्रवर्तेत यावद्राज्यपालो लोकाधिसूचनया एवं न निदि-शति, कस्याप्यधिनियमस्य च विषये राज्यपाल एवं निदिशन्ने-तन्निदेष्टुं क्षमते यत्सोऽधिनियमः कस्मिन्नपि क्षेत्रे तस्य कस्मिन्न-प्युल्लिखितभागे वा एतादृशैरपवादै रूपभेदैश्च सह प्रवृत्तो भवे-द्यथा स उचितं मन्यते;

(ख) कस्याप्येतादृशस्य क्षेत्रस्य शान्त्यै सुशासनार्थं च राज्यपालो विनियमान् निर्मातुं क्षमते एवंनिर्मिताश्च विनियमा एतादृशक्षेत्रे तत्काले प्रवर्तमानं संसदस्तद्राज्यविधानमण्डलस्य वा कमप्यधिनियमम्, कमपि वर्तमानं विधिं वा, निरसितुं संशोधयितुं वा क्षमन्ते ।

(२) एतत्कण्डिकायाः प्रथमोपकण्डिकायाः (क)-खण्डस्याधीनं राज्यपालेन दत्तः कोऽपि निदेश एवं दातुं शक्येत यत्तस्य पूर्वपरामर्शी प्रभावोऽपि भवेत् ।

(३) एतत्कण्डिकायाः प्रथमोपकण्डिकायाः (ख)-खण्डस्याधीनं निर्मिताः सर्वे विनियमाः सद्यो राष्ट्रपतेः पुरतः स्थाप्येरन् यावच्च स तान् नानुमन्यते कार्यकरा न भवेयुः ।

२०. जनजातिक्षेत्राणि.—(१) निम्नसारिण्याः (क)-(ख)- भागयोरुल्लिखितानि क्षेत्राणि आसामराज्याभ्यन्तरजनजातिक्षेत्राणि भवेयुः ।

## षष्ठी अनुसूची

(२) एतत्संविधानस्य प्रारम्भात्पूर्वं शिलौंगकटकनगरक्षेत्रयोः समाविष्टानि क्षेत्राण्यपवर्ज्य, शिलौंगनगरक्षेत्रे समाविष्टं तु एतावत्क्षेत्रम्, यावद् मिललैम–खासीराज्यस्य भाग आसीत्, संगृह्य, तत्समये खासीराज्यं खासी–जयंतीयापर्वतमालामण्डलं चेत्येवं ज्ञातक्षेत्राणां समावेशेन संयुक्तं खासी–जयंतीया-पर्वतमालामण्डलं भवेत्—

परन्तु एतदनुसूच्यास्तृतीयकण्डिकाप्रथमोपकण्डिकाया (ङ)-(च)- खण्डयोः, चतुर्थकण्डिकायाः, पञ्चमकण्डिकायाः, षष्ठकण्डिकायाः, अष्टमकण्डिकाया द्वितीयोपकण्डिकायाः, तृतीयोपकण्डिकायाः (क)-(ख)-(घ)-खण्डानाम्, चतुर्थोपकण्डिकायाश्च, दशमकण्डिकायाश्च द्वितीयोपकण्डिकाया (घ)-खण्डस्य प्रयोजनार्थं शिलौंगनगरक्षेत्रे समाविष्टं किमपि क्षेत्रं तस्य मण्डलस्याभ्यन्तरे न मन्येत।

(३) निम्नसारिण्यां ( संयुक्तखासीजयंतीयापर्वतमालामण्डलादन्यत् ) किमपि मण्डलं प्रशासिक्षेत्रं वा प्रति निर्देश एतत्संविधानस्य प्रारम्भे तत्क्षेत्रं तं प्रदेशं वा प्रति निर्देश इत्यर्थः क्रियेत—

परन्तु निम्नसारिण्याः (ख)-भाग उल्लिखितानां जनजातिक्षेत्राणामन्तर्गतानि समप्रदेशवर्तीनि कान्यपि एतादृशानि क्षेत्राणि न भवेयुर्यादृशानि राष्ट्रपतेः पूर्वानुमोदनेन आसामराज्यपालस्तदर्थमधिसूचयेत्।

### सारिणी

### (क)-भागः

१. संयुक्तं खासी-जयंतीया-पर्वतमालामण्डलम्।

२. गारो-पर्वतमालामण्डलम्।

३. लुशाई-पर्वतमालामण्डलम्।

४. नागा-पर्वतमालामण्डलम्।

५. उत्तर-कछारपर्वतमाला।

६. मिकिर-पर्वतमाला।

## षष्ठी अनुसूची

### (ख)-भागः

१. बालिपारा-सीमान्तप्रदेशः, तिरापसीमान्तप्रदेशः, अबोरपर्वतमालामण्डलम्, मिसिमिपर्वतमालामण्डलं च संगृह्य उत्तर-पूर्वीयसीमान्तप्रदेशः ।

२. 'नागा' जनजातिक्षेत्रम् ।

२१. अनुसूच्याः संशोधनम्.—(१) संसत्काले काले विधिना संयोजनेन, परिवर्तनेन, निरसनेन वा एतदनुसूच्या उपबन्धेषु कस्यापि संशोधनं कर्तुं क्षमते, यदा चानुसूची एवं संशोध्येत तदा एतत्संविधाने एतदनुसूचीं प्रति कोऽपि निर्देश एवं संशोधितामनुसूचीं प्रति निर्देश इत्यर्थः क्रियेत ।

(२) कोऽप्येतादृशो विधिर्य एतत्कण्डिकायाः प्रथमोपकण्डिकायां वर्णितो विद्यते एतत्संविधानस्य ३६८-तमानुच्छेदस्य प्रयोजनार्थमेतत्संविधानस्य संशोधनं न मन्येत ।

# सप्तमी अनुसूची

( अनुच्छेदः—२४६ )

## सूची १.—संघसूची

१. प्रतिरक्षार्थं परिकल्पनं सर्वाणि चैतादृशानि कार्याणि यादृशानि युद्धकाले युद्धस्य चालनार्थं तत्समाप्तेरनन्तरं च सफलतापूर्वकं सैन्यवियोजने सहायकानि भवेयुः संगृह्य भारतस्य तस्य प्रत्येकभागस्य च प्रतिरक्षा ।

२. नौबलम्, स्थलबलम्, विमानबलं च; संघस्य किमप्यन्यत् सशस्त्रं बलम् ।

३. कटकक्षेत्राणां परिसीमनम्, एतादृशक्षेत्रेषु स्थानीयं स्वायत्तशासनम्, एतादृशक्षेत्राणामभ्यन्तरे कटकप्राधिकारिणां घटनं शक्तयश्च, एतादृशक्षेत्रेषु गृहवासनस्य विनियमनम् ( भाटकस्य नियन्त्रणेन सह ) ।

४. नौस्थलविमानबलानां कर्मशालाः ।

५. शस्त्रास्त्रमग्न्यस्त्रं [ अग्निचूर्णादि ] युद्धोपकरणं विस्फोटकानि च ।

६. अणुशक्तिस्तस्या उत्पादनार्थमावश्यिका खनिजसम्पच्च ।

७. संसन्निर्मितेन विधिना प्रतिरक्षाप्रयोजनार्थं युद्धस्य चालनार्थं वा आवश्यकत्वेन घोषिता उद्योगाः ।

८. केन्द्रीयो गुप्तवार्ताया अनुसन्धानस्य च विभागः ।

९. भारतस्य प्रतिरक्षया वैदेशिककार्यैः सुरक्षया वा संबद्धैः कारणैर्निवारको निरोधः, एवं निरुद्धा जनाश्च ।

१०. वैदेशिककार्याणि; सर्वे विषया यैः संघस्य केनापि विदेशेन संबन्धो जायते ।

## सप्तमी अनुसूची

११. राजनयिकं वाणिज्यदूतिकं व्यापारेण संबद्धं च प्रतिनिधित्वम् ।

१२. संयुक्तराष्ट्रसंघटनम् ।

१३. आन्ताराष्ट्रिकेषु सम्मेलनेषु संस्थासु अन्यनिकायेषु च भागग्रहणम्, तत्र कृतानां विनिश्चयानां चाभिपूर्तिः ।

१४. विदेशैः सह संधीनां समयानां च करणम्, विदेशैः सह कृतानां सन्धीनां समयानामभिसमयानां चाभिपूर्तिः ।

१५. युद्धं शान्तिश्च ।

१६. वैदेशिकक्षेत्राधिकारः ।

१७. नागरिकता, देशीयकरणमन्यदेशीयाश्च ।

१८. प्रत्यर्पणम् ।

१९. भारते प्रवेशस्ततः उत्प्रवासनं निर्वासनं च; पारपत्राणि दृष्टाङ्काश्च ।

२०. भारताद् बाह्यस्थानेषु तीर्थयात्राः ।

२१. जलदस्युता महासमुद्रेषु वायौ वा कृता अपराधाश्च; स्थले महासमुद्रेषु वायौ वा राष्ट्राणां विधेर्विरुद्धं कृता अपराधाः ।

२२. लोहमार्गाः ( =रेलवे ) ।

२३. राज-पथा ये संसन्निर्मितविधिना तदधीनं वा राष्ट्रियराजपथा इति घोषिताः स्युः ।

२४. यन्त्रचालितानां जलयानानां विषये संसदा विधिना राष्ट्रियजलपथत्वेन घोषितेषु देशाभ्यन्तरीयजलपथेषु नौवहनं नौपरिवहणं च; एतादृशजलपथेषु पथिनियमः ।

## सप्तमी अनुसूची

२५. वेलाजलेषु नौवहनेन नौपरिवहणेन च सहैव सामुद्रं नौवहनं नौपरिवहणं च; वणिक्पोतीयशिक्षाप्रशिक्षणयोः कृत उपबन्धस्तथा राज्यैरन्यैश्चाभिकरणैः दीयमानयोरेतादृशयोः शिक्षाप्रशिक्षणयोर्विनियमनम् ।

२६. प्रकाशपोतैः, आकाशदीपैः, नौवहनस्य विमानानां च सुरक्षितताये अन्योपबन्धैश्च सह, प्रकाशगृहाणि ।

२७. तेषां [ वेलापत्तनानां ] परिसीमनेन, वेलापत्तनप्राधिकारिणां च घटनेन शक्तिभिश्च सह, संसन्निर्मितविधिना वर्तमानविधिना वा तदधीनं वा महावेलापत्तनानीति घोषितानि वेलापत्तनानि ।

२८. स्वसंबद्धचिकित्सालयैः, नाविकसंबन्धिभिः समुद्रियैश्च चिकित्सालयैः सह, वेलापत्तननिरोधनानि ।

२९. वायुपथाः, विमानं विमानपरिवहणं च; विमानक्षेत्राणामुपबन्धः; विमानयातायातस्य विमानक्षेत्राणां च विनियमनं संघटनं च; वैमानिकशिक्षाप्रशिक्षणयोरुपबन्धस्तथा राज्यैरन्यैरभिकरणैश्च दीयमानयोरेतादृशयोः शिक्षाप्रशिक्षणयोर्विनियमनम् ।

३०. लोहमार्गेण, समुद्रेण वायुना वा, यन्त्रचालितयानेषु राष्ट्रियजलपथैर्वा यात्रिणां वस्तूनां च वहनम् ।

३१. प्रेषणी (=डाकविभागः) तन्त्रिसंदेशि (=तारविभागः) च; दूरभाषि, वितन्त्रि, प्रसारणम्, संचारस्यान्यानि चैवंविधानि रूपाणि ।

३२. संघस्य संपत्तिस्तदुत्थं राजस्वं च, प्रथमानुसूच्याः (क)-भागे (ख)-भागे वा उल्लिखिते कस्मिन्नपि राज्येऽवस्थितसंपत्तेर्विषये तु, यावत्संसद् विधिनान्यथोपबन्धं न करोति तावद्, तद्राज्यसंबन्धिविधानस्याधीनत्वं चेद्भवति तदा ।

३३. संघस्य प्रयोजनार्थं सम्पत्तेरर्जनमधिग्रहणं वा ।

३४. देशीयराज्यशासकसंबन्धिनीनां संपदानां कृते प्रतिपालकाधिकरणानि ।

सप्तमी अनुसूची

३५. संघस्य लोक–ऋणम् ।

३६. चलार्थः, टङ्कणं विधिमान्यं च; वैदेशिको विनिमयः ।

३७. वैदेशिकानि ऋणानि ।

३८. भारतस्य रक्षितं निधानम् ( = बैंकः ) ।

३९. प्रेषणीगृहावशेषनिधानम् ।

४०. भारतशासनेन कस्यापि राज्यस्य शासनेन वा संघटिता देवन्यः ( = ‘ लाटरीज ’ ) ।

४१. विदेशैः सह व्यापारो वाणिज्यं च; शुल्कसीमान्तानां पारगमने आयात-निर्याते; शुल्कसीमान्तानां पारिभाषा ।

४२. आन्ताराज्यिके व्यापारो वाणिज्यं च ।

४३. महाजनकर्मणा, अनागतरक्षया ( = ‘ इन्श्यौरेंस ’ ) सहकारिसंस्थावर्जं च वित्तीयनिगमैश्च सह, व्यापारसंबन्धिनां निगमानां निगमनं विनियमनं समापनं च ।

४४. एकस्मिन् राज्येऽसीमितोद्देश्यानाम्, व्यापारेण च संबद्धानामसंबद्धानां वा, विश्वविद्यालयेतरेषां निगमानां निगमनं विनियमनं समापनं च ।

४५. महाजनकर्म ।

४६. विनियमपत्राणि, धनादेशपत्राणि ( = ‘ चेक्स ’ ), वचनपत्राणि, अन्यानि चैवंविधानि लिखितानि ।

४७. अनागतरक्षा ( = ‘ इन्श्यौरेंस ’ ) ।

४८. श्रेष्ठिचत्वराणि भविष्यापणाश्च ( = ‘ फ़्यूचर मार्केट्स ’ ) ।

## सप्तमी अनुसूची

४९. एकस्वानि, आविष्काराः, रूपाङ्कनानि च; कृतिस्वाम्यम्; व्यापारचिह्नानि पण्यचिह्नानि च।

५०. परिमाणानां प्रमाणानां च मानस्य स्थापनम्।

५१. भारताद्बहिर्निर्यातव्यानाम् एकस्माद्राज्याद्राज्यान्तरे परिवोढव्यानां वा भाण्डानां गुणानां मानस्थापनम्।

५२. त उद्योगा येषां संघकर्तृकं नियन्त्रणं लोकहिताय प्रसङ्गोचितमिति संसदा विधिना घोषितं भवति।

५३. तैलक्षेत्राणां खनिजतैलसंपदश्च विनियमनं विकासश्च; प्रस्तरतैलं (= पेट्रोलियम) प्रस्तरतैलोत्पादाश्च; संसदा विधिना भयानकरूपेण ज्वालाग्राहित्वेन घोषितान्यन्यानि द्रवाः द्रव्याणि च।

५४. तावन्मात्रं खनीनां विनियमनं खनिजानां च विकासो यावन्मात्रं संघस्य नियन्त्रणे तादृशं विनियमनं विकासश्च संसदा विधिना लोकहिताय प्रसङ्गोचितमिति घोष्यते।

५५. श्रमस्य विनियमनं खनिषु तैलक्षेत्रेषु च सुरक्षितता।

५६. तावन्मात्रमान्ताराज्यिकीनां नदीनां नदीद्रोणीनां च विनियमनं विकासश्च यावन्मात्रं संघस्य नियन्त्रणे तादृशं विनियमनं विकासश्च संसदा विधिना लोकहिताय प्रसङ्गोचितमिति घोष्यते।

५७. जलप्राङ्गणात्परतो मत्स्यग्रहणं मीनक्षेत्राणि च।

५८. संघाभिकरणकर्तृकं लवणस्य निर्माणं संभरणं विभाजनं च; अन्याभिकरणकर्तृकं लवणस्य निर्माणस्य संभरणस्य विभाजनस्य च विनियमनं नियन्त्रणं च।

५९. अहिफेनस्य कृषिर्निर्माणं निर्यातार्थं च विक्रयः।

६०. प्रदर्शनार्थं चलच्चित्राणां स्वीकृतिः।

## सप्तमी अनुसूची

संघेन

६१. नियोजितैः संबद्धा औद्योगिका विवादाः।

६२. एतस्य संविधानस्य प्रारम्भे राष्ट्रियपुस्तकालयः, भारतीयसंग्रहालयः, साम्राज्यिकयुद्धसंग्रहालयः, विक्टोरियास्मारकम्, भारतीययुद्धस्मारकं च इत्येवं ज्ञाताः संस्थाः, भारतशासनेन पूर्णतोंऽशतो वा वित्तपोषिता संसदा च विधिना राष्ट्रियमहत्त्ववती इत्येवं घोषिता अन्या चैवंविधा कापि संस्था।

६३. एतस्य संविधानस्य प्रारम्भे काशीहिन्दुविश्वविद्यालयः, अलीगढमुस्लिमविश्वविद्यालयः, दिल्लीविश्वविद्यालयश्चेत्येवं ज्ञाताः संस्थाः संसदा च विधिना राष्ट्रियमहत्त्ववती इत्येवं घोषिता काप्यन्या संस्था।

६४. भारतशासनेन पूर्णतोंऽशतो वा वित्तपोषिताः संसदा च विधिना राष्ट्रियमहत्त्ववत्य इत्येवं घोषिता वैज्ञानिक्यः शिल्पसंबन्धिन्यो वा शिक्षासंस्थाः।

६५. संघाभिकरणानि संघसंस्थाश्च यानि—

(क) आरक्षिपदाधिकारिणां प्रशिक्षणेन सह, वृत्तिविषयकस्य व्यवसायविषयकस्य शिल्पविषयकस्य च प्रशिक्षणस्य कृते विद्यन्ते; अथवा

(ख) विशेषस्याध्ययनस्य गवेषणाया वा अभिवृद्ध्यै विद्यन्ते; अथवा

(ग) अपराधस्यानुसन्धाने प्रकटीकरणे वा वैज्ञानिक्याः शिल्पसंबन्धिन्या वा सहायतायाः कृते विद्यन्ते।

६६. उच्चतरशिक्षागवेषणयोः संस्थासु वैज्ञानिकीषु शिल्पसंबन्धिनीषु च संस्थासु एकसूत्रतायाः स्थापनं मानानां च निर्धारणम्।

६७. संसदा विधिना राष्ट्रियमहत्त्ववत्त्वेन घोषितानि प्राचीनानि ऐतिहासिकानि च स्मारकाणि अभिलेखाश्च पुरातत्त्वसंबन्धीनि च स्थानानि अवशेषाश्च।

६८. भारतीयभूपरिमापनम्, भूगर्भविज्ञानसंबन्धि वानस्पतिकं प्राणिजीवनीयं च परिमापनम्; अन्तरिक्षशास्त्रीयाः संस्थाः।

## सप्तमी अनुसूची

६९. जनगणना ।

७०. संघलोकसेवाः, अखिलभारतीयसेवाः, संघलोकसेवायोगः ।

७१. संघनिवृत्तिवेतनानि, अर्थाद् भारतशासनेन भारतसंचितनिधितो वा प्रदातव्यानि निवृत्तिवेतनानि ।

७२. संसदो राज्यानां विधानमण्डलानां च कृते तथा राष्ट्रपतेरुपराष्ट्रपतेश्च पदस्य कृते निर्वाचनानि; निर्वाचनायोगः ।

७३. संसदः सदस्यानाम्, राज्यपरिषदः सभापतेरुपसभापतेश्च, लोकसभायाश्चाध्यक्षस्योपाध्यक्षस्य च वेतनानि भक्तानि च ।

७४. संसदः प्रत्येकसदनस्य, प्रत्येकसदनस्य च सदस्यानां समितीनां च शक्तयो विशेषाधिकारा उन्मुक्तयश्च; संसदः समितीनां संसदा नियुक्तानां चायोगानां पुरतः साक्ष्यदानार्थं लेख्यानाम् उपस्थापनार्थं वा जनानामुपस्थितेर्बलात्कारणम् ।

७५. राष्ट्रपते राज्यपालानां चोपलब्धयो भक्तानि विशेषाधिकारा अनुपस्थित्यनुमतिविषयेऽधिकाराश्च; संघमन्त्रिणां वेतनानि भक्तानि च; नियन्त्रकमहालेखापरीक्षकस्य वेतनानि भक्तानि अनुपस्थित्यनुमतिविषये चाधिकारा अन्ये सेवाप्रतिबन्धाश्च ।

७६. संघस्य राज्यानां च गणनानां गणनापरीक्षा ।

७७. उच्चतमन्यायालयस्य घटनं संघटनं क्षेत्राधिकारः शक्तयश्च ( तस्य न्यायालयस्यावमानेन सह ) तत्र गृह्यमाणानि देयानि च; उच्चतमन्यायालयस्य समक्षं विधिव्यवसाये स्वत्ववन्तो जनाः ।

७८. उच्चन्यायालयानां पदाधिकारिणां भृत्यानां च विषय उपबन्धान्वर्जयित्वा उच्चन्यायालयानां घटनं संघटनं च; उच्चन्यायालयानां समक्षं विधिव्यवसाये स्वत्ववन्तो जनाः ।

७९. कस्मिंश्चिदपि राज्ये मुख्यस्थानवतः कस्याप्युच्चन्यायालयस्य क्षेत्राधिकारस्य तद्राज्याद्बहिः कस्मिन्नपि क्षेत्रे विस्तारः, एतादृशस्य कस्याप्युच्चन्यायालयस्य क्षेत्राधिकारस्य कस्मादप्येतादृशक्षेत्रादपवर्जनं च ।

## सप्तमी अनुसूची

८०. कस्यचिदपि राज्यस्यारक्षिबलस्य सदस्यानां शक्तीनां क्षेत्राधिकारस्य च तद्राज्याद्बहिः कस्मिन्नपि क्षेत्रे विस्तारः, किन्तु नैवंप्रकारेण यदेकराज्यस्यारक्षी, तद्राज्याद्बहिः कस्मिन्नपि क्षेत्रे तत्क्षेत्रवतो राज्यस्य शासनस्य सम्मतिं विना, शक्तीनां क्षेत्राधिकारस्य च प्रयोगं कर्तुं शक्नुयात्; कस्यचिदपि राज्यस्यारक्षिबलस्य सदस्यानां शक्तीनां क्षेत्राधिकारस्य च तद्राज्याद्बहिर्लोहमार्गक्षेत्रेषु विस्तारः।

८१. आन्ताराज्यिकं प्रव्रजनम्; आन्ताराज्यिकं निरोधनम्।

८२. कृष्यायादितरस्मिन्नाये कराः।

८३. निर्यातशुल्केन सह सीमाशुल्काः।

८४. (क) मानवोपभोगार्थं मद्यसारिकपानानि,

(ख) अहिफेनं भारतीयभङ्गामन्याश्च मदकारिणीः ओषधीः स्वापकानि च, विना, किन्तु अस्याः प्रविष्टेः (ख)-उपकण्डिकायामन्तर्गतं किमपि द्रव्यं मद्यसारं वा अन्तर्निविष्टत्वेन दधतीनाम् औषधीयानां प्रसाधनीयानां च सामग्रीणामन्तर्भावेन सह, भारते निर्मितेषूत्पादितेषु वा तमाखुवामन्येषु भाण्डेषु चोत्पादनशुल्काः।

८५. निगमकरः।

८६. व्यक्तीनां समवायानां कृषिभूमिवर्जं सर्वस्वस्य मूलधनमूल्ये कराः; समवायानां मूलधने कराः।

८७. कृषिभूमिवर्जमन्यसंपत्तिविषये संपदाशुल्कः।

८८. कृषिभूमिवर्जमन्यसंपत्तेरुत्तराधिकारविषये शुल्काः।

८९. लोहमार्गेण समुद्रेण वायुना वा ऊढेषु भाण्डेषु यात्रिषु वा सीमाकराः; लोहमार्गस्य जनभाटकेषु भाण्डभाटकेषु च कराः।

९०. श्रेष्ठिचत्वरस्य भविष्यापणस्य च पण्यव्यवहारेषु मुद्राङ्कशुल्कान् विना इतरे कराः।

## सप्तमी अनुसूची

९१. विनियमपत्राणां धनादेशपत्राणां वचनपत्राणां वहनपत्राणां प्रत्ययपत्राणामनागतरक्षापत्राणामंशानां हस्तान्तरणस्य ऋणपत्राणां प्रतिपत्रिकाणां प्राप्तीनां च संबन्धे मुद्राङ्कशुल्कस्य मानानि ।

९२. समाचारपत्राणां क्रयविक्रययोस्तेषु प्रकाशितविज्ञापनेषु च कराः ।

९३. एतत्सूच्या विषयेषु केनापि संबद्धानां विधीनां विरुद्धमपराधाः ।

९४. एतत्सूच्या विषयेषु कस्यापि प्रयोजनार्थं परिप्रश्नाः, परिमापनानि, संख्यानानि ( = 'स्टैटिस्टिक्स' ) च ।

९५. उच्चतमन्यायालयमन्तरेण सर्वेषां न्यायालयानामेतत्सूच्या विषयेषु कस्यापि संबन्धे क्षेत्राधिकारः शक्तयश्च; नावाधिकरणक्षेत्राधिकारः ।

९६. कस्मिन्नपि न्यायालये गृह्यमाणदेयान्यन्तरेण एतत्सूच्या विषयेषु कस्यापि संबन्धे देयानि ।

९७. द्वितीयतृतीयसूच्योः कस्यामप्यवर्णितेन केनापि करेण सह तयोः सूच्योरप्रगणितः कोऽप्यन्यो विषयः ।

## सूची २—राज्यसूची

१ सार्वजनिकव्यवस्था ( किन्तु असैनिकशक्तेः सहायतार्थं संघस्य नौबलस्य, स्थलबलस्य, विमानबलस्य वा, कस्याप्यन्यस्य सशस्त्रबलस्य वा प्रयोगं विना ) ।

२. लोहमार्गस्य ग्रामस्य चारक्षिणा सह आरक्षी ।

३. न्यायप्रशासनम्; उच्चतमन्यायालयमुच्चन्यायालयं चान्तरेण सर्वेषां न्यायालयानां घटनं संघटनं च; उच्चन्यायालयस्य पदाधिकारिणः सेवकाश्च; भाटकन्यायालयानां राजस्वन्यायालयानां च प्रक्रिया; उच्चतमन्यायालयमन्तरेण सर्वेषु न्यायालयेषु गृह्यमाणदेयानि ।

४. कारागाराः, बालसुधारणालयाः, 'बोर्स्टल'संस्थाः, अन्याश्चैवंविधाः संस्थास्तासु च निरुद्धा जनाः; कारागाराणामन्यसंस्थानां चोपयोगार्थमन्यराज्यैः सह प्रबन्धः ।

## सप्तमी अनुसूची

५. स्थानीयशासनम्, अर्थात्, नगरनिगमानां सुधारणाप्रन्यासानां मण्डलमण्डलीनां खनिजवसतिप्राधिकारिणां स्थानीयस्वशासनस्य ग्रामप्रशासनस्य वा प्रयोजनार्थम् अन्येषां स्थानीयप्राधिकारिणां च घटनं शक्तयश्च ।

६. सार्वजनिकं स्वास्थ्यं स्वच्छता च; चिकित्सालया औषधालयाश्च ।

७. भारताद् बहिः स्थानानां तीर्थयात्राभ्य इतरास्तीर्थयात्राः ।

८. मादकपानानि, अर्थाद् मादकपानानामुत्पादनं निर्माणं भुक्तिः परिवहणं क्रया विक्रयश्च ।

९, अङ्गहीनानां नियोजनायै अयोग्यानां जनानां च सहायता ।

१०. शवनिखननानि निखननस्थानानि च; शवदाहाः श्मशानानि च ।

११. विश्वविद्यालयैः सह, प्रथमसूच्याः ६३-तम-६४-तम-६५-तम-६६-तमप्रविष्टीनां तृतीयसूच्याः २५-तमप्रविष्टेश्चोपबन्धानामधीनत्वे शिक्षा ।

१२. राज्येन नियन्त्रिता वित्तपोषिता वा पुस्तकालयाः संग्रहालया अन्याश्चैवंविधाः संस्थाः; संसदा विधिना राष्ट्रियमहत्त्ववत्त्वेन घोषितेभ्य इतराणि प्राचीनानि ऐतिहासिकानि च स्मारकाणि अभिलेखाश्च ।

१३. संचाराः, अर्थात्, मार्गाः सेतवो नौकाघट्टाः प्रथमसूच्यामनुल्लिखितानि संचारस्यान्यानि साधनानि च; नगररथ्यालोहमार्गाः; रज्जुपथाः; देशाभ्यन्तरा जलपथास्तेषु प्रथमसूच्यास्तृतीयसूच्याश्चोपबन्धानामधीनत्वे यातायातं च; यन्त्रचालितयानेभ्य इतराणि यानानि ।

१४. कृषेः शिक्षया गवेषणया च हिंस्रजन्तुभ्यो रक्षयोद्भिद्रोगाणां निवारणेन च सह कृषिः ।

१५. पशुजातेः परिरक्षणं संरक्षणमुन्नतिश्च पशुरोगाणां निवारणं च; पशुचिकित्साविषयकं प्रशिक्षणं व्यवसायश्च ।

## सप्तमी अनुसूची

१६. पश्ववरोधाः पशूनामतिचारस्य निवारणं च ।

१७. प्रथमानुसूच्याः ५६-तमप्रविष्टेरुपबन्धानामधीनत्वे जलम्, अर्थात्, जलसंभरणानि, सेचनं कुल्याश्च, जलनिस्सारणं बन्धाश्च, जलसंग्रहो जलशक्तिश्च ।

१८. भूमिः, अर्थात्, भूमौ भूमेरुपरि वा अधिकारः, भूस्वामिनः कृषकाणां संबन्धेन सह भूधृतयः, भाटकसंग्रहणं च; कृषिभूमेर्हस्तान्तरणमन्यसंक्रामणं च भूमिसुधारणा कृषिसम्बन्धिन उद्धाराश्च; उपनिवेशनं च ।

१९. वनानि ।

२०. वन्यानां पशूनां पक्षिणां च रक्षा ।

२१. मीनक्षेत्राणि ।

२२. प्रथमसूच्याः ३४-तमप्रविष्टेरुपबन्धानामधीनत्वे प्रतिपालकाधिकरणानि, भारग्रस्ता आसिद्धाश्च संपदः ।

२३. संघस्य नियन्त्रणे विनियमनविकासयोः संबन्धे प्रथमसूच्या उपबन्धानामधीनत्वे खनीनां विनियमनं खनिजानां विकासश्च ।

२४. प्रथमसूचेः ६४-तमप्रविष्टेरुपबन्धानामधीनत्वे उद्योगाः ।

२५. 'गैसः,' गैसकर्मशालाश्च ।

२६. तृतीयसूच्याः ३३-तमप्रविष्टेरधीनत्वे राज्यस्याभ्यन्तरे व्यापारो वाणिज्यं च ।

२७. तृतीयसूच्याः ३३-तमप्रविष्टेरधीनत्वे भाण्डानामुत्पादनं संभरणं विभाजनं च ।

२८. आपणा मेलाश्च ।

२९. मानस्थापनमन्तरेण परिमाणानि प्रमाणानि च ।

३०. वृद्धिजीविका वृद्धिजीविनश्च; कृषिऋणिताया मोचनम् ।

सप्तमी अनुसूची

३१. पान्थशालाः पान्थशालापालाश्च ।

३२. प्रथमसूच्यामुल्लिखितनिगमेभ्यो भिन्नानां निगमानां विश्वविद्यालयानां च निगमनं विनियमनं समापनं च; व्यापारसंबन्धिनः साहित्यिका वैज्ञानिका धार्मिका अन्याश्चानिगमिताः समाजाः संस्थाश्च; सहकारिसमाजाः ।

३३. नाट्यशाला नाटकप्रयोगाश्च; प्रथमानुसूच्याः ६०-तमप्रविष्टेरुपबन्धानामधीनत्वे चलचित्राणि; क्रीडाः प्रमोदा विनोदाश्च ।

३४. पणनं द्यूतं च ।

३५. राज्ये निहितानि तद्भुक्तौ स्थितानि वा कर्मशालाः, भूमयः, गृहाणि च ।

३६. तृतीयसूच्याः ४२-तमप्रविष्टेरुपबन्धानामधीनत्वे, संघस्य प्रयोजनार्थमन्तरेण, सम्पत्तेरर्जनमधिग्रहणं वा ।

३७. संसन्निर्मितस्य कस्यापि विधेरुपबन्धानामधीनत्वे राज्यविधानमण्डलार्थं निर्वाचनानि ।

३८. राज्यस्य विधानमण्डलस्य सदस्यानाम्, विधानसभाया अध्यक्षस्योपाध्यक्षस्य च, विधानपरिषद् यदि विद्यते तर्हि तस्याः सभापतेरुपसभापतेश्च वेतनानि भक्तानि च ।

३९. विधानसभायास्तस्याः सदस्यानां समितीनां च, विधानपरिषद् यदि विद्यते तर्हि तस्याः परिषदस्तस्याः सदस्यानां च शक्तयो विशेषाधिकारा उन्मुक्तयश्च, राज्यविधानमण्डलस्य समितीनां पुरतः साक्ष्यदानार्थं लेख्यानाम् उपस्थापनार्थं वा जनानामुपस्थितेर्बलात्कारणम् ।

४०. राज्यस्य मन्त्रिणां वेतनानि भक्तानि च ।

४१. राज्यलोकसेवाः; राज्यलोकसेवायोगः ।

४२. राज्यनिवृत्तिवेतनानि, अर्थात्, राज्येन राज्यसंचितनिधेर्वा प्रदेयानि निवृत्तिवेतनानि ।

## सप्तमी अनुसूची

४३. राज्यस्य लोकऋणम् ।

४४. निखातनिधिः ।

४५. राजस्वस्य निर्धारणं संग्रहणं च, भूम्यभिलेखानां धारणं, राजस्वप्रयोजनार्थं स्वत्वाभिलेखार्थं च परिमापनम्, राजस्वानामन्यसंक्रामणं चैतैः सह भूराजस्वम् ।

४६. कृष्यायेषु कराः ।

४७. कृषिभूमेरुत्तराधिकारविषये शुल्काः ।

४८. कृषिभूमेर्विषये सम्पत्ति-शुल्कः ।

४९. भूमिषु गृहेषु च कराः ।

५०. संसदा विधिना खनिजविकासस्य संबन्धे आरोपितानां परिसीमानामधीनत्वे खनिजाधिकारेषु कराः ।

५१. राज्ये निर्मितेषु उत्पादितेषु वा निम्नलिखितभाण्डेषु उत्पादनशुल्काः भारतेऽन्यत्र निर्मितेषूत्पादितेषु वा तत्समभाण्डेषु तेनैव तदूनेन वा मानेन प्रतिशुल्काः—

(क) मानवोपभोगार्थं मद्यसारिकपानानि;

(ख) अहिफेनं भारतीयभङ्गा अन्याश्च मदकारिण्य ओषधयः स्वापकानि च; किन्तु एतादृशीरौषधीयाः प्रसाधनीयाश्च सामग्रीरन्तरेण यासु मद्यसारमेतस्याः प्रविष्टेः (ख)-उपकण्डिकायामन्तर्गतः कोऽपि पदार्थो वा अन्तर्निविष्टो विद्यते ।

५२. कस्मिन्नपि स्थानीयक्षेत्रे उपभोगस्य प्रयोगस्य विक्रयस्य वा कृते भाण्डानां प्रवेशे कराः ।

५३. विद्युत उपभोगे विक्रये वा कराः ।

५४. समाचारपत्रेभ्य इतरवस्तूनां क्रये विक्रये वा कराः ।

## सप्तमी अनुसूची

५५. समाचारपत्रेषु प्रकाशितविज्ञापनेभ्य इतरविज्ञापनेषु कराः।

५६. मार्गैर्देशाभ्यन्तरैर्जलपथैर्वा ऊढेषु भाण्डेषु यात्रिषु वा कराः।

५७. यन्त्रचालितेष्वयन्त्रचालितेषु वा, तृतीयसूच्याः ३५-तमोपबन्धानामधीनं रथ्यालोहयानैः सह, मार्गेषूपयोक्तव्ययानेषु कराः।

५८. पशुषु नौकासु च कराः।

५९. पथिकराः।

६०. वृत्तिषु व्यापारेषु आजीविकासु नियोजनासु च कराः।

६१. प्रतिव्यक्तिकराः।

६२. आमोद-विनोद-पणन-द्यूतेषु करैः सह विलासवस्तुषु कराः।

६३. मुद्राङ्कशुल्कमानानां संबन्धे प्रथमसूच्या उपबन्धेषूल्लिखितलेख्येभ्य इतरलेख्यानां संबन्धे मुद्राङ्कशुल्कस्य मानानि।

६४. एतत्सूच्या विषयेषु केनापि संबद्धानां विधीनां विरुद्धमपराधाः।

६५. एतत्सूच्या विषयेषु कस्यापि संबन्धे उच्चतमन्यायालयमन्तरेण सर्वेषां न्यायालयानां क्षेत्राधिकारः शक्तयश्च।

६६. कस्मिन्नपि न्यायालये गृह्यमाणदेयान्यन्तरेण एतत्सूच्या विषयेषु कस्यापि संबन्धे देयानि।

## सूची ३— समवर्तिनी सूची

१. असैनिकशक्तेः सहायतार्थं नौ-स्थल-विमानबलानामन्यस्य सशस्त्रबलस्य वा प्रयोगमन्तरेण, प्रथमसूच्यां द्वितीयसूच्यां वा उल्लिखितविषयेषु केनापि संबद्धानां विधीनां विरुद्धमपराधांश्चान्तरेण, एतत्संविधानस्य प्रारम्भे भारतीयदण्डसंहिताया अन्तर्गतैः सर्वैर्विषयैः सह दण्डविधिः।

## सप्तमी अनुसूची

२. एतत्संविधानस्य प्रारम्भे दण्डप्रक्रियासंहिताया अन्तर्गतैः सर्वैर्विषयैः सह दण्ड-प्रक्रिया।

३. कस्यापि राज्यस्य सुरक्षया, सार्वजनिकव्यवस्थाया धारणेन समाजस्य कृते अत्यावश्यकानां संभरणानां सेवानां च धारणेन वा संसक्तकारणैर्निवारकनिरोधः; एवं निरुद्धा जनाः।

४. बन्दिनाम्, अभियुक्तजनानाम्, एतस्याः सूच्यास्तृतीयप्रविष्टावुल्लिखितकारणै-र्निवारकनिरोधं गतानां जनानामेकस्माद्राज्यादपरस्मिन् राज्येऽपनयनम्।

५. विवाहो विवाहविच्छेदश्च; शिशवोऽप्राप्तवयस्काश्च; दत्तकग्रहणम्; इच्छापत्राणि इच्छापत्रहीनत्वमुत्तराधिकारश्च; अविभक्तकुटुम्बं विभाजनं च; सर्वे ते विषया येषां संबन्धे न्यायविषयककार्यप्रवृत्तिषु विवादिन एतत्संविधानस्य प्रारम्भादव्यवहितपूर्वं स्वीयविधेरधीना अभूवन्।

६. कृषिभूमिमन्तरेण संपत्तीनां हस्तान्तरणम्; विलेखानां लेख्यानां च पञ्जीबन्ध-नम्।

७. भागिताया अभिकरणस्य परिवहनसंविदामन्यासां विशेषरूपाणां च संविदाम-न्तर्भावेन, किन्तु कृषिभूमिसंबन्धिनीनां संविदामनन्तर्भावेन, संविदः।

८. अभियोज्यदोषाः।

९. अकिञ्चनता ऋणशोधनाक्षमता च।

१०. न्यासो न्यासिनश्च।

११. महाप्रशासका राजन्यासिनश्च।

१२. साक्ष्यं शपथाश्च; विधीनां सार्वजनिककार्याणामभिलेखानां न्यायविषयक-कार्यप्रवृत्तीनां चाभिज्ञानम्।

## सप्तमी अनुसूची

१३. एतत्संविधानस्य प्रारम्भे व्यवहारप्रक्रियासंहिताया अन्तर्गतैः सर्वैः विषयैः सह व्यवहारप्रक्रिया ।

१४. उच्चतमन्यायालयस्यावमानमन्तरेण न्यायालयावमानः ।

१५. आहिण्डनम्; अस्थिरवासिन्यः प्रव्रजनशीलाश्च जनजातयः ।

१६. उन्मत्तानां मनोविकलानां च ग्रहणस्य उपचारस्य वा स्थानैः सह उन्मत्तता मनोविकलता च ।

१७. पशून् प्रति क्रूरताया निवारणम् ।

१८. खाद्यपदार्थेषु अन्यवस्तुषु चापमिश्रणम् ।

१९. अहिफेनविषयिण्याः प्रथमसूच्याः ५९-तमप्रविष्टेरुपबन्धानामधीनत्वे ओषधयो विषाणि च ।

२०. आर्थिकी सामाजिकी च योजना ।

२१. वाणिज्यिकान्यौद्योगिकानि चैकाधिपत्यानि, संहतयः, न्यासाश्च ।

२२. व्यापारसंघाः; औद्योगिकाः श्रमिकसंबन्धिनश्च विवादाः ।

२३. सामाजिकी सुरक्षा सामाजिकी अनागतरक्षा च; नियोजना नियोजनाराहित्यं च ।

२४. कार्यस्य प्रतिबन्धाः, भविष्यनिधयः, नियोजकानामुत्तरवादिता, कर्मकराणां प्रतिकरः, असमर्थतावार्धक्ययोर्निवृत्तिवेतनानि, प्रसूतिसौकर्याणि च एतैः सह श्रमिकाणां कल्याणम् ।

२५. श्रमिकाणां व्यवसायसंबन्धि शिल्पसंबन्धि च प्रशिक्षणम् ।

२६. विधिवृत्तयो वैद्यकवृत्तयोऽन्या वृत्तयश्च ।

## सप्तमी अनुसूची

२७. भारतपाकिस्तानाधिनिवेशयोः स्थापनेन स्वीयमूलनिवासस्थानतः स्थानान्तरितानां जनानां सहायता पुनर्वासश्च ।

२८. पूर्तानि पूर्तसंस्थाश्च, पूर्तानि धार्मिकाणि च धर्मसर्वस्वानि, धार्मिकसंस्थाश्च ।

२९. मानवेषु पशुषु उद्भित्सु च प्रभाववतां संक्रामकाणां सांसर्गिकाणां च रोगाणां मारकजन्तूनां चैकस्माद्राज्याद्राज्यान्तरे प्रसारस्य निवारणम् ।

३०. जन्मनां मृत्यूनां च पञ्जीबन्धनेन सह जीवनसंबन्धि संख्यानम् ।

३१. संसन्निर्मितविधिना वर्तमानविधिना वा तदधीनं वा महावेलापत्तनेतिघोषितवेलापत्तनेभ्य इतरवेलापत्तनानि ।

३२. राष्ट्रियजलपथविषये प्रथमसूच्या उपबन्धानामधीनत्वे देशाभ्यन्तरजलपथेषु यन्त्रचालितसमुद्रयानविषयकं नौवहनं नौपरिवहणं च, एतादृशजलपथेषु पथिनियमाश्च, देशाभ्यन्तरेषु जलपथेषु यात्रिणां वस्तूनां च परिवहणम् ।

३३. यत्र संसदा विधिना केषामप्युद्योगानां संघेन नियन्त्रणं लोकहिताय प्रसङ्गोचितत्वेन घोषितं भवति तेभ्य उद्योगेभ्य उत्पन्नवस्तुषु व्यापारो वाणिज्यं च तेषाञ्चोत्पादनं संभरणं विभाजनं च ।

३४. मूल्यनियन्त्रणम् ।

३५. यन्त्रचालितयानानि, सहैव तैस्तत्त्वैर्येषामनुसारेणैतादृशयानेषु करा आरोपणीयाः सन्ति ।

३६. कर्मान्ताः ।

३७. बाष्पयन्त्राणि ।

३८. विद्युत् ।

३९. समाचारपत्राणि पुस्तकानि मुद्रणालयाश्च ।

## सप्तमी अनुसूची

४०. संसदा विधिना राष्ट्रियमहत्त्ववत्त्वेन घोषितेभ्य इतराणि पुरातत्त्वसंबन्धीनि स्थानानि अवशेषाश्च ।

४१. विधिना निष्क्राम्यसंपत्तित्वेन घोषितायाः ( कृषिभूम्या सहितायाः ) सम्पत्तेरभिरक्षा प्रबन्धो व्ययनं च ।

४२. संघस्य कस्यापि राज्यस्य वा प्रयोजनार्थमन्यसार्वजनिकप्रयोजनार्थं वा अर्जिताया अधिगृहीताया वा संपत्तेः प्रतिकरानिर्धारणस्य तत्त्वानि, तादृशप्रातिकरदानस्य रूपं रीतिश्च ।

४३. कस्मिन्नपि राज्ये तद्राज्याद्बहिरुत्पन्नानां, भूराजस्वस्यावशेषेण एवमवशेषरूपेण प्रत्युद्धरणीयेन राशिना च सहितानाम्, कराणां विषयेऽध्यर्थनानाम् अन्यासां च सार्वजनिकानामभियाचनानां प्रत्युद्धारः ।

४४. न्यायविषयकमुद्राङ्कैः संगृहीतान् शुल्कान् देयानि वा अन्तरेण, मुद्राङ्कशुल्कमानानां तु अनन्तर्भावेन, मुद्राङ्कशुल्काः ।

४५. द्वितीयसूच्यां तृतीयसूच्यां वा उल्लिखितविषयेषु कस्यापि प्रयोजनार्थं परिप्रश्नाः संख्यानं च ।

४६. उच्चतमन्यायालयमन्तरेण सर्वेषां न्यायालयानामेतस्याः सूच्या विषयेषु कस्यापि संबन्धे क्षेत्राधिकारः शक्तयश्च ।

४७. कस्मिन्नपि न्यायालये गृह्यमाणदेयानामनन्तर्भावेन सह एतस्याः सूच्या विषयेषु कस्यापि संबन्धे देयानि ।

# अष्टमी अनुसूची

[ अनुच्छेदाः ३४४ (१) तथा ३५१ ]

## भाषाः

१. आसामीभाषा
२. उडियाभाषा
३. उर्दूभाषा
४. कन्नडभाषा
५. काश्मीरीभाषा
६. गुजरातीभाषा
७. तामिलभाषा
८. तेलुगुभाषा
९. पंजाबीभाषा
१०. बंगलाभाषा
११. मराठीभाषा
१२. मलयालमभाषा
१३. संस्कृतभाषा
१४. हिन्दीभाषा

# संविधानस्य ( प्रथमं संशोधनम् ) अधिनियमः १९५१

भारतस्य संविधानस्य संशोधनायाधिनियमः ( १८ दिनाङ्कः, जूनमासे १९५१ )

संसदा एतत् अधिनियमितं भवतु निम्नलिखितेन प्रकारेण—

**१. संक्षिप्ता संज्ञा ।**— अयमधिनियमः संविधानस्य ( प्रथमं संशोधनम् ) अधिनियमः १९५१ उक्तो भवेत् ।

**२. १५–अनुच्छेदस्य संशोधनम् ।** — संविधानस्य १५ अनुच्छेदे निम्नलिखितः खण्डः परिवर्धितः स्यात्—

" (४) एतदनुच्छेदगतं २९-तमानुच्छेदीय-(२)-खण्डगतं वा किमपि नागरिकेषु सामाजिकदृष्ट्या शिक्षणसंबन्धिदृष्ट्या वा अप्रगतानां केषामपि वर्गाणाम् उन्नत्यै अथवा अनुसूचितजातीनाम् अनुसूचितजनजातीनां च कृते कस्यापि विशेषस्योपबन्धस्य करणात् राज्यं न निवारयेत् । "

**३. १९–तमानुच्छेदस्य संशोधनं विधिविशेषाणां मान्यता च ।**—(१) संविधानस्य १९-तमानुच्छेदे,—

(क) (२)-खण्डात् प्रति निम्नलिखितः खण्डः संनिविष्टो भवेत्, उक्तः खण्डश्च निम्नलिखितेन रूपेण सदैव अधिनियमित इति मन्येत, तद्यथा—

" (२) (१)-खण्डीय-(२)-उपखण्डगतं किमपि वर्तमानस्य कस्यापि विधेः प्रवृत्तिं न स्पृशेत् न वा कस्यापि विधेः प्रणयनात् राज्यं निवारयेत्, यावदवधि एतादृशो विधिः उक्तोपखण्डेन प्रदत्तस्याधिकारस्य प्रयोगे तद्राज्यस्य सुरक्षायाः वैदेशिकराज्यैः सह मित्रत्वसंबन्धानां सार्वजनिकव्यवस्थायाः शिष्टाचारस्य सदाचारस्य वा हितानामर्थे अथवा न्यायालयावमानस्य मानहानेः अपराधोत्तेजनस्य वा संबन्धे युक्तियुक्तानि निर्बन्धनानि आरोपयति । "

(ख) (६)–खण्डे " उक्तोपखण्डगतं किमपि " इत्येतैः शब्दैः प्रारब्धेभ्यः " राज्यं निवारयेत् " इत्येतैः शब्दैः समाप्यमानेभ्यः शब्देभ्यः प्रति निम्नलिखितं संनिविष्टं भवेत्, तद्यथा—

" उक्तोपखण्डगतं किमपि कस्यापि वर्तमानस्य विधेः प्रवृत्तिं न स्पृशेत्, यावद-वधि स संबध्यते,—

अथवा राज्यं न निवारयेत् कस्यापि विधेः प्रणयनात् यः संबध्यते,—

(१) कस्या अपि **वृत्तेः** अनुवर्तनाय कस्या अपि उपजीविकाया व्यापारस्य कार्यस्य वा अनुसरणाय वा आवश्यकीभिः वृत्तिसंबन्धिनीभिः शिल्पसंबन्धिनीभिर्वा अर्हताभिः, अथवा

(२) राज्येन अथवा राज्यनियन्त्रितेन राज्यस्वामिकेन वा निगमेन कस्यापि व्यापारस्य कार्यस्य उद्योगस्य सेवाया वा नागरिकान् अंशतः पूर्णतो वा परिहृत्य अन्यथा वा अनुसरणेन ।"

(२) अस्य विभागस्य (१)-उपविभागेन संशोधितरूपस्य संविधानीय-१९-तमानुच्छेदस्योपबन्धैः सुसंगतो योऽस्ति स कोऽपि अस्य संविधानस्य प्रारम्भात् अव्यवहितपूर्वं भारतस्य राज्यक्षेत्रे प्रवृत्तो विधिः शून्यः कदापि वा शून्यीभूत आसीदिति न मन्येत यः उक्तानुच्छेदस्य (१)-खण्डीय-(क)-उपखण्डेन प्रदत्तमधिकारं हरति अल्पीकरोति वा, स एतादृशो विधिः इत्यतः मूलतः अधिनियमितरूपस्य उक्तस्यानुच्छेदस्य (२)-खण्डेन तस्य प्रवृत्तिः नाक्षतास्ति इत्याधारेणैव ।

व्याख्या—अस्मिन् उपविभागे " प्रवृत्तो विधिः " इति शब्दसमूहस्य स एवार्थो योऽस्य संविधानस्य १३-तमानुच्छेदस्य (१)-खण्डे ।

**४. नवीनस्य ३१ क-अनुच्छेदस्य प्रवेशः ।**—संविधानस्य ३१-तमानुच्छेदस्यानन्तरं निम्नलिखितोऽनुच्छेदः प्रविष्टो भवेत् सदैव च प्रविष्टीभूत आसीदिति मन्येत, तद्यथा—

" ३१ क. संपत्तीनाम् अर्जनाय उपबन्धकानां विधीनाम् अबाधनम्,

इत्यादि—

(१) अस्य भागस्य पूर्वगामिषूपबन्धेषु सर्वमविगणय्य, कस्या अपि संपत्तेः तत्संबन्धिनां केषामप्यधिकाराणां वा राज्येन अर्जनार्थम् अथवा एतादृशानामधिकाराणां रूपभेदाय निर्वापणार्थं वा उपबन्धकः कोऽपि विधिः शून्य इति मन्येत, सोऽस्य भागस्य

कैरप्युपबन्धैः— विसंगतोऽस्ति अथवा—[ तैः ] प्रदत्तानामधिकाराणां मध्ये कमपि हरति अल्पीकरोति वा इत्याधारेण—

परन्तु यत्र एतादृशो विधिः कस्यापि राज्यस्य विधानमण्डलेन प्रणीतोऽस्ति तत्र अस्यानुच्छेदस्योपबन्धा न प्रसरेयुः यदि एतादृशो विधिः राष्ट्रपतेर्विचारार्थं रक्षितः सन् तदीयानुमतिं न लब्धवान् ।

(२) अस्मिन्ननुच्छेदे—

(क) "संपत्ति" शब्दः कस्या अपि संपत्तेः संबन्धे तमेवार्थं भजेत यः तस्मिन् क्षेत्रे प्रवृत्ते भूमिस्वाम्यैः संबध्यमाने वर्तमाने विधौ तस्य शब्दस्य तत्पर्यायस्य प्रादेशिकस्य वाऽस्ति, अन्तर्भावयेच्चापि किमपि जागीरम्, इनामम्, मुआफिं वा अथवा अन्यत् सदृशमनुदानम्;

(ख) संपत्तेः संबन्धे "अधिकाराः" इति शब्दः स्वामिनि उपस्वामिनि अधीनस्वामिनि स्वाम्यांशधारिणि अथवाऽन्यस्मिन् मध्यचारिणि वा संश्रितानधिकारान् भूम्यागमस्य संबन्धिनः कानप्यधिकारान् विशेषाधिकारांश्च अन्तर्भावयेत् ।"

५. ३१. ख–अनुच्छेदस्य प्रवेशः । —संविधानीयस्य ४-विभागेन प्रविष्टरूपस्य ३१ क-अनुच्छेदस्यानन्तरं निम्नलिखितोऽनुच्छेदः प्रविष्टो भवेत्, तद्यथा—

"३१. ख. अधिनियमविशेषाणां विनियमविशेषाणां च मान्यता । — ३१ क–अनुच्छेदेऽन्तर्गतानामुपबन्धानां व्यापकतायां प्रतिकूलं प्रभावं परिहाय नवम्यामनुसूच्यामुल्लिखितानाम् अधिनियमानां विनियमानां च मध्ये कोऽपि अथवा तदीयानामुपबन्धानां च मध्ये कोऽपि शून्य इति कदापि शून्यीभूत आसीदिति वा न मन्येत, एतादृशोऽधिनियमो विनियम उपबन्धो वा अस्य भागस्य कैरपि उपबन्धैः असंगतोऽस्ति [तैः] प्रदत्तानामधिकाराणां वा मध्ये कमपि हरति अल्पीकरोति वा इत्याधारेण, किंच कस्यापि न्यायालयस्य न्यायाधिकरणस्य वा कमपि निर्णयम् आज्ञप्तिम् आदेशं वा अविगणय्य प्रत्युत, उक्तानाम् अधिनियमानां विनियमानां वा प्रत्येकं क्षमस्य कस्यापि विधानमण्डलस्य तन्निरसने तत्संशोधने वा शक्तेरधीनम्, प्रवृत्तोऽनुवर्तेत ।"

६. ८५–अनुच्छेदस्य संशोधनम् । — ८५-तमानुच्छेदात् प्रति निम्नलिखितोऽनुच्छेदः संनिविष्टो भवेत्, तद्यथा—

" ८५. संसदः सत्राणि सत्रावसानं विघटनं च । — (१) राष्ट्रपतिः कालेकाले संसदः प्रत्येकं सदनम् अधिवेशनाय आह्वयेत् एतादृशे काले स्थाने च यादृशमसौ युक्तं मन्यते । किंतु तस्य एकसत्रीयान्तिमोपवेशनस्य तस्यानन्तरसत्रीयप्रथमोपवेशनाय नियुक्तदिनस्य चान्तरा षण्णां मासानां व्यवधानं न भवेत् ।

(२) राष्ट्रपतिः कालेकाले—

(क) सदनयोरन्यतरस्य सदनस्य वा सत्रावसानं कर्तुम्;

(ख) लोकसभां विघटयितुम्;

क्षमते । "

**७. ८७–तमानुच्छेदस्य संशोधनम् ।** —संविधानस्य ८७-तमानुच्छेदे,

(१) (१)-खण्डे, " प्रत्येकसत्रस्य प्रारम्भे " इति शब्देभ्यः प्रति " लोकसभायाः साधारणनिर्वाचनादुत्तरं प्रत्येकसत्रस्य प्रारम्भे प्रत्येकवर्षस्य प्रथमसत्रस्य प्रारम्भे च " इति शब्दाः संनिविष्टा भवेयुः;

(२) (२)–खण्डे " तस्य सदनस्य अन्यकार्यात् अस्याश्चर्चायाः पूर्ववर्तितायै च " इति शब्दाः लुप्ता भवेयुः ।

**८. १७४–तमानुच्छेदस्य संशोधनम् ।** — संविधानस्य १७४-तमानुच्छेदात् प्रति निम्नलिखितोऽनुच्छेदः संनिविष्टो भवेत्, तद्यथा—

" राज्यविधानमण्डलस्य सत्राणि सत्रावसानं विघटनं च । —

(१) राज्यपालः कालेकाले राज्यविधानमण्डलस्य सदनं प्रत्येकसदनं वा अधिवेशनाय आह्वयेत् एतादृशे काले स्थाने च यादृशमसौ युक्तं मन्यते किंतु तस्य सत्रीयान्तिमोपवेशनस्य तस्य अनन्तरसत्रीयप्रथमोपवेशनाय नियुक्तदिनस्य चान्तराले षण्णां मासानां व्यवधानं न भवेत् ।

(२) राज्यपालः कालेकाले—

(क) सदनस्य अन्यतरस्य सदनस्य वा सत्रावसानं कर्तुम्;

(ख) विधानसभां विघटयितुम्;

क्षमते । "

**९. १७६-तमानुच्छेदस्य संशोधनम् ।** — संविधानस्य १७६-तमानुच्छेदे—

(१) (१)-खण्डे " प्रत्येकसदनस्य " इति शब्देभ्यः प्रति " विधानसभायाः साधारणनिर्वाचनादुत्तरं प्रत्येकसत्रस्य प्रारम्भे प्रत्येकवर्षस्य प्रथमसत्रस्य च प्रारम्भे च " इति शब्दाः संनिविष्टा भवेयुः;

(२) (२)-खण्डे " तत्सदनस्यान्यकार्यादस्याश्चर्चायाः पूर्ववर्तितायै च " इति शब्दा लुप्ता भवेयुः ।

**१०. ३४१-तमानुच्छेदस्य संशोधनम् ।** —संविधानस्य ३४१-तमानुच्छेदस्य (१)-खण्डे " कस्यापि राज्यस्य राज्यपालेन राजप्रमुखेन वा परामर्शस्यानन्तरम् " इति शब्देभ्यः प्रति " कस्यचिदपि राज्यस्य संबन्धे यत्र प्रथमाया अनुसूच्याः कभागे खभागे वोल्लिखितं तद्राज्यमस्ति तत्र तदीयेन राज्यपालेन राजप्रमुखेन वा परामर्शस्यानन्तरम् " इति शब्दाः संनिविष्टा भवेयुः ।

**११. ३४२-तमानुच्छेदस्य संशोधनम् ।** — संविधानस्य ३४२-तमानुच्छेदस्य (१)-खण्डे " कस्यापि राज्यस्य राज्यपालेन राजप्रमुखेन वा परामर्शस्यानन्तरम् " इति शब्देभ्यः प्रति " कस्यचिदपि राज्यस्य संबन्धे प्रथमाया अनुसूच्याः कभागे खभागे वोल्लिखितं तद्राज्यमस्ति तत्र तदीयेन राज्यपालेन राजप्रमुखेन वा परामर्शस्योत्तरम् " इति शब्दाः संनिविष्टा भवेयुः ।

**१२. ३७२-तमानुच्छेदस्य संशोधनम् ।** — संविधानस्य ३७२-तमानुच्छेदस्य (३)-खण्डस्य (ख)-उपखण्डे " वर्षद्वयस्य " इति शब्दात् प्रति " वर्षत्रयस्य " इति शब्दः संनिविष्टो भवेत् ।

**१३. ३७६-तमानुच्छेदस्य संशोधनम् ।** — संविधानस्य ३७६-तमानुच्छेदस्य (१)-खण्डस्यान्ते निम्नलिखितं परिवर्धितं भवेत्, तद्यथा—

" कोऽपि एतादृशो न्यायाधीशः, भारतस्य स नागरिको नास्तीत्यविगणय्य, एतादृशस्योच्चन्यायालयस्य मुख्यन्यायाधिपतिरूपेण अथवाऽन्यस्य कस्यचिदपि उच्चन्यायालयस्य मुख्यन्यायाधिपतिरूपेण अन्यस्य न्यायाधीशस्य रूपेण वा नियुक्तेः पात्रं भवेत् । "

**१४. नवम्या अनुसूच्याः परिवर्धनम्।** — अष्टम्या अनुसूच्या उत्तरं निम्नलिखिताऽनुसूची संविधाने प्रविष्टा भवेत्, तद्यथा —

# " नवमी अनुसूची

**[ अनुच्छेदः ३१ ख ]**

१. बिहारस्य भूमिसुधारणानामधिनियमः, १९५० ( १९५०—तमवत्सरस्य बिहाराधिनियमः ३० ).

२. मुंबय्याः भूमिभाटकस्य कृषिकर्मसंबन्धिनीनां भूमीनां चाधिनियमः, १९४८ ( १९४८-तमवत्सरस्य ६६-मुंबय्यधिनियमः ).

३. मुंबय्याः मालेकीस्वाम्यनिराकरणस्याधिनियमः, १९४९ ( १९४९-तमवत्सरस्य ६२-मुंबय्यधिनियमः ).

४. मुंबय्याः तालुकदारीस्वाम्यनिराकरणस्याधिनियमः, १९४९ ( १९४९-तमवत्सरस्य ६२-मुंबय्यधिनियमः ).

५. पञ्चमहालानां मेह्वासीस्वाम्यनिराकरणस्याधिनियमः, १९४९ ( १९४९-तमवत्सरस्य ६३-मुंबय्यधिनियमः ).

६. मुंबय्याः खोतीनिराकरणस्याधिनियमः, १९५० ( १९५०-तमवत्सरस्य ६-मुंबय्यधिनियमः ).

७. मुंबय्याः परगनावतनस्य कुलकर्णीवतनस्य च निराकरणस्याधिनियमः, १९५० ( १९५०-तमवत्सरस्य ६०-मुंबय्यधिनियमः ).

८. मध्यप्रदेशस्य स्वाम्याधिकाराणां ( संपत्तीनां, महालानां, अन्तरितस्वाम्यानां भूमीनां ) निराकरणस्याधिनियमः, १९५० ( १९५०-तमवत्सरस्य १-मध्यप्रदेशाधिनियमः).

९. मद्रासस्य संपत्तीनां ( निराकरणस्य रयतवारीरूपेण परिवर्तनस्य च ) अधिनियमः, १९४८ ( १९४८-तमवत्सरस्य २६-मद्रासाधिनियमः ).

१०. मद्रासस्य संपत्तीनां ( निराकरणस्य रयतवारीरूपेण परिवर्तनस्य च ) अधिनियमः, १९५० ( १९५०-तमवत्सरस्य १-मद्रासाधिनियमः ).

११. उत्तरप्रदेशस्य जमीनदार्याः निराकरणस्य भूमिसुधारणानां चाधिनियमः, १९५० ( १९५१-तमवत्सरस्य १-उत्तरप्रदेशाधिनियमः ).

१२. हैदराबादस्य ( जागीराणां निराकरणस्य ) विनियमः, १३५८ फ. ( फसलेः १३९८-तमवत्सरस्य ६९-क्रमाङ्कः ).

१३. हैदराबादस्य जागीराणां ( लघूकरणस्य ) विनियमः, १९५९ फ. ( फसलेः १९५९-तमवत्सरस्य २५-क्रमाङ्कः ). "

# शुद्धाशुद्धसूची

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १९६ | १३ | राजपालस्य | राज्यपालस्य |
| २४८ | २६ | -पूर | -पुर |
| २५३ | ८ | २. | (२) |
| २५७ | १४ | (४) | ४. |
| २६० | १३ | (८) | ८. |
| २६५ | २५ | (क) | (ख) |
| २७२ | १६ | वस्तूनां | भाण्डानां |
| २७५ | २ | नियोजितैः | संघेन नियोजितैः |
| २८१ | १७ | सदस्यानां | सदस्यानां समितीनां |
| २८२ | २१ | -वस्तूनां | -भाण्डानां |
| २८४ | ४ | धारणेन | धारणेन, |
| २८५ | १३ | संहतयः | संहतयः, |
| २८७ | ११ | सार्वजनिका- | सार्वजनिकी- |

